*Barid baran Mukerji,*
*16 College Row, Calcutta,*

# CHANDRABANSA

BY,


MAHAMAHOPADHYAY

CHANDRAKANTA TARKALANKARA,

*Professor, Sanskrit College, Calcutta.*



PUBLISHED BY

HARACHANDRA CHAUDHURI

*Zamindar, Sherpore.*


---

# चन्द्रवंशम्।


कलिकाता-राजकीय-संस्कृतविद्यालयाध्यापक-

महामहोपाध्याय

श्रीचन्द्रकान्ततर्कालङ्कारप्रणीतम्।



सेरपुराधिवासिना भूस्वामिना

श्रीहरचन्द्रचतुर्धुरीणेन

प्रकाशितम्।

Printed by A. C. Ghoshal

10, SAMBHU CHATTERJEE'S STREET

CALCUTTA

People's Press.

1892

# चन्द्रवंशम् ।

## प्रथमः सर्गः ।

विशुद्धबोधं तमसः परस्तात्
स्फुरन्तमन्तःकरणैकगम्यम् ।
प्रपञ्चबीजं स्वयमप्रपञ्चं
शिवासमेतं शिवमानतोऽस्मि ॥ १

दुराशया-लुप्त-विवेकशक्ति—
रुच्चैः पदं नीच इव प्रपित्सुः ।
त्रिशङ्कुरिन्द्वन्वयमल्पवाग्भि-
र्ध्रुवं भविष्याम्युपहास्य एव ॥ २

हस्तेन रत्नं फणिनः शिरस्तो—
लोभात् समादातुमभिप्रवृत्तम् ।
विनेव मन्त्रौषधिसंग्रहेण
सन्तः प्रति स्मेरमुखा भवन्ति ॥ ३

लोकोऽथवा काङ्क्षति सत्पदव्यां
कर्त्तुं पदं सद्गुणवर्जितोऽपि ।
निदर्शनं तत्र च दृष्टदोषा
बालेन्दुवक्रा यमदूतिकेव* ॥ ४

---

* बालस्य चन्द्रमसो वक्रतां दृष्ट्वा तत्स्वरूपं या चिन्तयति सा यमो भवतीति प्रवादः प्रचरति ।

कृपोपलब्धाविव तैमिरस्य
मूकस्य वाचामिव संप्रयुक्तौ ।
ममोद्यमेऽस्मिन् किल हास्यहेतौ
गुणा निदानं शशिनोऽन्वयस्य ॥ ५

बालः किलोत्सङ्गगतोऽपि मातु-
रादातुमिच्छत्युडुपं करेण ।
तेनापि हृष्यन्त्युरुचेतसो ये
तएव सन्तः शरणं ममापि ॥ ६

सुधोपमेयैः किरणैः सुधांशो-
र्जगन्ति पूतानि भवन्त्यजस्रम् ।
सुवर्णभावो वचसस्तदासां
स्पर्शात्ततः स्पर्शमणेरयोवत् ॥ ७

विलोचनात् प्रादुरभूत् किलात्रेः
शीतांशुरेकांशतया हरस्य ।
अधःकृतो यस्य गुणैरुदारै-
रूर्द्ध्वङ्गतः सप्ततुरङ्गमोऽपि ॥ ८

सुधाऽवदातोज्ज्वलपादजालैः
पुण्यैः स्पृशन् यो जगतां शिरांसि ।
अनन्यसाधारणमुन्नतात्मा
यशस्तुषारप्रतिमं प्रपेदे ॥ ९

सन्तापहेतुः किल रश्मिपूरः
सहस्ररश्मेर्यमवाप्य सद्यः ।
प्रह्लादयत्यात्मगुणप्रकर्षा-
न्महत्प्रभावो ह्यविचिन्तनीयः ॥ १०

अन्यायमार्गागतचारुलक्ष्मी-
रनन्वयोऽसह्यतरप्रतापः ।
न्यायार्जितैश्वर्य्यपरम्परोऽन्यो-
धाम्नोज्ज्वलः स्वस्वधिगम्य एव ॥ ११

सहायमेकं मदनोऽपि लब्ध्वा
यमुज्ज्वलं पेलवपुष्पचापः ।
चलानि लोकस्य मनांसि भिन्द-
न्नवाप कीर्त्तिं त्रिजगज्जयीति ॥ १२

यस्मिन् प्रकृत्या मधुरे करोति
कामं कलङ्कोऽप्यकलङ्कलक्ष्मीम् ।
निलीयते यस्य गुणेषु दोषः
स धाम सौन्दर्य्यपरम्पराणाम् ॥ १३

एकां कलां यस्य पिनाकपाणि-
स्त्रिलोकनाथोऽप्यतिनिःस्पृहोऽपि ।
बिभर्त्ति गङ्गार्चितोत्तमाङ्गे
किमुच्यते तस्य समुन्नतत्वम् ॥ १४

द्विजौषधीनामनुभूय राज्यं
स राजसूयं क्रतुमाजहार ।
जगज्जयोपार्ज्जितसम्पदुच्चै-
र्यदीयदीक्षाविधिदक्षिणाऽऽसीत् ॥ १५

साक्षादिवानङ्गमनुत्तमाङ्गी
तारा समालोक्य रतेरनूना ।
तं कामयामास विलासिनीनां
प्रायेण सौन्दर्य्यभवोऽनुरागः ॥ १६

अथावलेपादवलुप्तधैर्य्यो-
दारान् गुरोरप्यहरन्महौजाः ।
अप्यार्य्यमन्तःकरणं प्रमाथी
हरत्यकस्मात् खलु पुष्पधन्वा ॥ १७

व्यतिक्रमोद्दीपिततीव्रमन्युः
सदेवसैन्योऽथ स देवमन्त्री ।
मन्त्राभिचारैर्व्विफलप्रयत्नो-
ऽकरोच्च पश्चान्नगरीन्तदीयाम् ॥ १८

ततः प्रवृत्तं समरं सुघोरं
निवर्त्तयामास विरिञ्चिरेत्य ।
तारां च साम्ना गुरवे प्रदाय
निजाय धाम्ने विरजाः प्रतस्थे ॥ १९

काले गते सा सुषुवे कुमारं
स्फुरत्प्रभाजालसमुज्ज्वलाङ्गम् ।
प्रभातसन्ध्याऽखिलवन्दनीयं
लोकोत्तरं बालमिवांशुमन्तम् ॥ २०

सूनुर्म्ममेत्याङ्गिरसः प्रतीत-
स्ताराऽङ्गजं प्रेक्ष्य जिघृक्षुरासीत् ।
इन्दीवरश्यामलकान्तयेऽभू-
च्चन्द्रोऽपि तस्मै स्पृहयालुरेव ॥ २१

शान्तात्मनोरप्युभयोर्विवादः
सन्तानहेतोरुदपादि भूयः ।
सीमन्तवत्याकरवत्सशोभा-
दनन्तरत्नौघभृतोरिवोर्व्यैः ॥ २२

ततो महेन्द्रप्रमुखैः समस्तै—
स्तारां समाहूय सुरैः सपुत्राम् ।
सम्मानकामैः क्षितिपैरिवान्यै—
रक्ते सभा मध्यमतामुपेतैः ॥ २३

वत्से, सुतोऽयं कमलायताक्ष—
श्चन्द्रस्य वा देवगुरोर्भवेद्वा ।
धात्रेति पृष्टा सुरसंसदन्त—
र्मन्द्राक्षमिन्दोरिति सा बभाषे ॥ २४

विधुस्तमादाय चकार नाम्ना
बुधं विधानात्तनयं नयज्ञः ।
अथाभिषिच्य स्वपदे तमुच्चै—
स्तिरोदधे तारकवृन्दनाथः ॥ २५

कामाभिरामो वपुषा वपुष्मान्
गुरूपमेयो गुणगौरवेण ।
पित्रा प्रदत्तं पदमभ्युपेत्य
निजाधिकारं स पुरश्चकार ॥ २६

वैवस्वतो नाम मनुर्मनस्वी
पुत्राय गोत्रास्वतये स्थितिज्ञः ।
त्रिवर्गलाभार्थमिवाग्रपत्नीं
समाजहारेष्टिमभीष्टयोग्याम् ॥ २७

यस्मिन् प्रजा रक्षयति क्षितीशे
श्लाघ्योमहौघविवस्वतस्य पश्चात् ।
अनन्यपूर्व्वोऽपुरादियाय पूर्व्वं
समुन्नतोमञ्जुलराजशब्दः ॥ २८

यस्मिन् प्रजासर्गधुरं विधाता
श्लाघ्योन्नतौ राजनि संक्रमय्य।
रश्मिं विवस्वानिव शीतरश्मौ
गणोत्तरे वाच्यविवर्जितोऽभूत् ॥ २८

पवित्रकीर्त्तिप्रभवस्त्रिलोक्यां
यएकएव स्फुरदप्रतेजाः।
आकाशवङ्गूतपरम्पराणां
महीपतीनां प्रथमोबभूव ॥ ३०

हिरण्यगर्भादिव सर्गभेदाः
वटादिवानेकविधप्ररोहाः।
शिलोच्चयादच्छतरा इवापा-
मनन्यसामान्यगुणाः प्रवाहाः ॥ ३०

वाग्प्रभेदादिव संविशुद्धात्
प्रत्येकशोऽपि स्पृहणीयसत्वाः।
यस्त्ववजा यन्त्रितकार्य्यभाजः
फलोच्चयादेवतरोरिवौघैः ॥ ३२

अनेकमार्गा इव भव्यतीर्थात्
स्वर्गापवर्गादिफलोदयार्थाः।
यस्मात् समुद्रादिव रत्नसंघा-
भूपान्वयाभिन्नगुणा बभूवुः ॥ ३२

यथा महाभूतगणस्य तैस्तै-
रतिप्रसिद्धैः परिणामभेदैः।
जगत्त्रयोच्चावचभेदभिन्नै-
र्यदन्वयेर्य्यामभूत् परस्तात् ॥ ३४

गुणप्रकर्षैर्जनकं महौजाः
कान्तो विवस्वन्तमपि व्यजेष्ट।
तेजोविशेषैर्जगदेकपूज्यैः
साक्षाद्विवस्वानिव कश्यपं यः॥ ३५

देवास्तदा सोमरसं पिबन्तः
पुरोधसां गौरवमादधानाः।
समाददाना हविरुल्लसन्तं
हविर्भुजं वन्ध्यमिव व्यकार्षुः॥ ३६

होतुः किल प्रादुरभूत् प्रमादा—
दिलेति कन्या कलधौतकान्तिः।
समिद्धयज्ञानलतोमनोज्ञा
प्रह्लादनी स्निग्धतमा शिखेव॥ ३७

तामेकनारीं नयनैर्नराणां
मुहुर्मुहुर्निर्विशतां मनांसि।
न तृप्तिमापुर्यजमानएव
किञ्चित्परिम्लानमुखो बभूव॥ ३८

सिद्धावसिद्धावपि तुल्यरूपान्
प्रारम्भवैफल्यभवो विषादः।
अप्यल्पमात्रं न दुनोति किन्तु
दुनोत्यनल्पं महतोऽपचारः॥ ३९

नुनाव मित्रावरुणौ स राजा
पुत्रो मम स्यादियमित्यतन्द्रः।
सा तत्प्रसादादिलइत्यभिख्यः
सुदुम्ननाम्ना च सुतो बभूव॥ ४०

तस्मात्स्वधामात्मजमात्मवन्तं
लोकान्तरादागतवद्विलोक्य ।
न केवलं संमुमुदे स तेन
कुलञ्च मेने स्थितमर्च्चितेन ॥ ४१

स यत्र राज्यं भुजतर्ज्जितारि-
श्चकार लोकोत्तरबाहुवीर्य्यः ।
पुराविदस्तं मुनयः प्रदेशम्
इलावृतं नाम वदन्त्यभिज्ञाः ॥ ४२

गुरोः सुरेन्द्रस्पृहणीयलक्ष्मी-
स्तन्देशमादेशवशात् प्रपन्नः ।
मनुष्यलोकेऽपि वसन् महौजाः
स देवलोकं बुभुजे नृदेवः ॥ ४३

हरप्रकोपात् पुनरप्यवाप्तः
स्त्रीभावमाविष्कृतचारुभावम् ।
निसर्गकान्तेन वपुर्महिम्ना
योषिद्गुरूरप्सरसोऽप्यजैषीत् ॥ ४४

ऊर्द्ध्वं लसद्धारिदचारुखण्डं
स्फुरत्प्रभाजालमिवेन्दुबिम्बम् ।
विलम्बबालातपशोभनीयं
नीलाम्बुजाश्लिष्टमिवाम्बुजातम् ॥ ४५

समुल्लसत्श्यामलभक्तिरुच्चै-
रादर्शवृन्दारकवत् प्रसन्नम् ।
मौलिप्रभाभिः प्रतिभिन्नशोभं
तस्या मुखाब्जं रुचये न कस्य ॥ ४६

तदाननं वीतकलङ्कराङ्कु
स्निग्धप्रभासुन्दरमिन्दुबिम्बम् ।
अपर्वकालेऽप्यथवा विलोलो-
विधुन्तुदो मौलिमयः प्रपेदे ॥ ४७

तत्केशपाशे मसृणे नितान्तं
विडम्बिते मेचकचामरेण ।
कामं नितम्बोपरि लम्बमाने
सीमन्तको दण्ड इवावभासे ॥ ४८

सिन्दूरबिन्दूज्ज्वलचारुवर्णं
ललाटपट्टं गुणवत्तदीयम् ।
मनांसि यूनां सुतरां चकर्ष
स्मरस्य साक्षादिव शासनाङ्कम् ॥ ४९

कर्णान्तविश्रान्तविलोचनाभ्यां
प्रफुल्लनीलोत्पलसन्निभाभ्याम् ।
आहार्यसौन्दर्यगुणोत्तरत्वात्
प्रत्यादिदेश प्रमदाऽवतंसम् ॥ ५०

स्थाने सुधास्यन्दिकथाप्रबन्धा
जिह्वा जवापुष्पदलोपमेया ।
रराज तस्याः परुषा कथं स्या-
द्विनिर्गमे शीतगुशीतलस्य ॥ ५१

तस्याः कपोलौ कलधौतकान्ती
नितान्तलावण्यगुणप्रसन्नौ ।
प्रत्यग्रलीलामणिदर्पणौ वा
रराजतुः पुष्पधनुर्धरस्य ॥ ५२

तस्याः प्रवालाधरबिम्बलग्नं
स्मितं यशःखण्डमिवाननेन्दोः ।
आरक्तमेघान्तरलक्ष्यमाणं
विशेषनक्षत्रमिवावभासे ॥ ५३

जगन्ति जेतुस्त्वरसा यियासोः
प्रयाणशङ्खो मकरध्वजस्य ।
कण्ठः सुकण्ठ्याः स्वनविघ्नलोकः
प्रत्यादिदेशाश्रितपञ्चबाणान् ॥ ५४

मृणालवत्कोमलमानताङ्ग्याः
बाहुद्वयं कण्टकनिर्व्यपेक्षम् ।
स्वबन्धपाशत्वमियेष नेतुं
विलासिलोको विलसत्प्रमोदः ॥ ५५

अमान्तमन्तस्तनुगात्रयष्टेः
समुद्गिरन्ताविव शुद्धरागम् ।
बालप्रवालारुणतान्दधानौ
तस्याः करौ रेजतुरप्रमेयौ ॥ ५६

हैमं यदि श्रीफलयोर्द्वयं स्या-
द्धेमव्रतत्यां लसदिन्द्रनीलम् ।
ततोऽनुकुर्य्याच्चतुरस्रचारु
स्तनद्वयं श्याममुखं कृशाङ्ग्याः ॥ ५७

सम्पृक्तहैमाम्बुजयोर्विलोलं
वातेरितव्रह्मसरस्तरङ्गम् ।
विडम्बयामास गुणाधिकत्वात्
स्तनद्वयस्योपरि तारहारः ॥ ५८

अन्तर्नवप्रेमरसार्णवोयो—
वयःसमुद्भेदविलुप्तधैर्य्यः ।
भृशप्रवृद्धे वलयस्तदीया·
विरेजुरस्योर्म्मिपरम्परेव ॥ ५९

आहृत्य लावण्यमयान् पदार्थान्·
तत्सारभारैः सृजतोविधातुः ।
निःशेषलावण्यतयेव तस्या—
नाभिर्गभीरा तनु मध्यमासीत् ॥·६०

गङ्गातरङ्गप्लुतसैकताभं
शुभ्रांशुकप्राहृतमानताङ्ग्याः ।
चकार लोलांस्तरलांश्च यून—
स्तस्या ललामं जघनं घनञ्च ॥ ६१

तां रामरम्भामपि हस्तिहस्तं·
पुरा विनिर्म्माय गुणप्रकर्षम् ।
लब्ध्वा विधिश्चारु विनिर्म्ममे यत्
तदूरुयुग्मं परिपीवरोर्व्याः ॥ ६२

लीलाप्रयातं यदि नाभविष्य—
द्रणोत्तरं नूपुरशिञ्जितेन ।
असंशयं हंसगतेन तस्या—
स्तदोपमां तस्य जनोव्यधास्यत् ॥ ६३·

ज्योत्स्नाविधौताम्बरमध्यभागा—
त्तारावलीनामिव चारुकान्तिः ।
तुषारजालादिव लक्ष्यमाणा
स्निग्धप्रभा भानुमती दिनादौ ॥·६४·

छाया विविक्तादिव दर्पणान्तात्
काचान्तरालादिव चित्रलक्ष्मीः ।
सा सूक्ष्मवस्त्रान्तरलक्ष्यकान्ति—
र्धाम्नेव बाला स्नपिता बभासे ॥ ६५ युग्मकम् ।

वपुर्गुणानामवधारणा स्या—
दियत्तया वा कुतएव तस्याः ।
कोनाम संख्यातुमलं मनीषी
रत्नानि रत्नाकरगोचराणि ॥ ६६

ततो हिमाद्रेर्नवशष्पमय्या—
मुपत्यकायामिव कालिकायाम् ।
सा सञ्चरन्ती द्रुतकाञ्चनाभा
रराज बाला तरलेव विद्युत् ॥ ६७

अथाप्सरोभिः परिभुक्तशोभे
निकुञ्जपुञ्जे विपिने लसन्तीम् ।
यदृच्छया तत्र गतोविलासी
तां चन्द्रजश्चन्द्रमुखीं ददर्श ॥ ६८

गङ्गाम्भसाऽऽकाशइव प्रसन्नः
पादाचलो वा शरदम्बुदेन।
दूर्व्वादलश्यामलकान्तिरञ्चै-
र्यस्तारहारेण रराज भूयः ॥ ६९

एकोजगत्यामुपमानभूतो-
विलासिनां यः प्रथमो बभूव ।
येनात्मजेनात्मवतां स लेभे
श्लाघ्यं शशाङ्कः परिभावमङ्कम् ॥ ७०

वाचस्पतौ सत्यपि लब्धवर्णे
कान्ते तथा चन्द्रमसि त्रिलोक्याम् ।
यमाप्तवाचो बुध इत्यभिख्यं
सौम्याख्यया च प्रवदन्त्यमिथ्या ॥ ७१

सा तं युवानं विपिने चरन्तं
कान्त्या स्मरं स्मेरमुखी विलोक्य ।
लोकोत्तरानिन्दितरूपमुग्धा
दशान्तरं स्वल्पवशा प्रपेदे ॥ ७२

तस्यापि तस्यावदनारविन्दे
चन्द्रप्रतिद्वन्द्विनि दृष्टिपातात् ।
तदीयकान्तिस्नपितान्तरत्वात्
सत्वोदयं मानसमुल्ललास ॥ ७३

तामानताङ्गीमतितुङ्गपीनां
बालां बुधोलोलविलोचनाभ्याम् ।
चिराय कामं परिपीय लेभे
फलं किलाक्ष्णोरनिमेषतायाः ॥ ७४

दशान्तरं सोऽथ जगाम तस्या—
विलोचनश्रीविदितानुरागः ।
साक्षादिवानेन यथा जनानां
प्रतीयते गूढतमोऽपि भावः ॥७५

परस्परं नेत्रपथक्रमेण
प्रेमैकलोलं विमलञ्च चेतः ।
स्वच्छोपलं रागइव प्रविष्टा—
वुभावुभौ नन्दयतः स्म सान्द्रम् ॥ ७६

विलीनवैयात्यरसम्परम्बा
तन्नेत्रयोर्नेत्रयुगं निविष्टम् ।
चिरादिवोद्भूतक्रिया विबुद्धा
क्लेशोत्तरं सा विवशा चकर्ष ॥ ७७

यत्प्रेक्षितज्योतिरितादिगन्तं
द्विषद्घटाः सोढुमशक्नुवन्तः ।
जहार नेत्रं त्रपया स तस्मा—
द्दावस्थिता नास्ति जगत्यवस्था ॥ ७८

विलोचनान्येव तयोर्वियुक्ता—
न्यन्तः प्रविष्टौ न परस्परन्तौ ।
चित्ते खलु प्रेमरसावसिक्ते
मूर्त्तिः प्रियस्योज्ज्वलवज्रलेपः ॥ ७९

आकुञ्चितभ्रूलतमप्यरूढै—
राकृष्यमाणः किल रश्मिपूरैः ।
मञ्जागुणैरिन्दुरिवेन्दुसूनु—
स्तस्याः सकाशं विवशः प्रपेदे ॥ ८०

परस्परप्रेमरसानुविद्धं
पुनर्विलोलेक्षणसन्निकर्षात् ।
तयोर्मिथोऽपि प्रथमानुराग—
श्चिरादिवागाच्चरितार्थभावम् ॥ ८१

चिरस्य तौ निर्वचनावभूतां
हृदस्तु भावैकरसालसत्वम् ।
परस्परप्रीतिनिरीक्षितानि
परस्पराभ्यां कथयाम्बभूवुः ॥ ८२

कपोलयोर्विम्बितमात्मविम्बं
निर्व्वर्ण्य चाघ्राय कषायसान्द्रम् ।
निःश्वासमालिङ्गनमेव तस्या-
स्तव्धं बुधोऽमन्यत पक्ष्मलाक्ष्याः ॥८३

तस्यास्तदात्मन्यनुरागभावात्
स तावदासीत् प्रकृतिप्रपन्नः ।
आगन्तुकोपप्लवसन्निवृत्तौ
यथा स्थितिस्थापकवत्पदार्थः ॥ ८४

श्लाघ्यस्तवालोकनतोऽद्य मन्ये
समुद्भवं भाविनि, मे जगत्याम् ।
अनिन्दितं त्वद्वदनारविन्दं
न येन दृष्टं ननु वञ्चितोऽसौ ॥ ८५

का त्वं विशालाक्षि, वनान्तराले
क्षिणोषि मां सुन्दरि, चारुकान्त्या ।
इति प्रसक्तः कथितान्वयः सन्
स तामशेषेण समन्वयुङ्क्त ॥ ८६ युग्मकम् ।

तस्याः प्रवृत्तिं विनिशम्य सम्यक्
तां चन्द्रसूनुः पुनरप्युवाच ।
लोलं मनः पारदविन्दुवन्मे
कारुण्यमात्रात्तव साध्यमेतत् ॥ ८७

नितान्तलोलं वशवर्त्तिनं मां
कामन्तदालोकनकौतुकेन ।
न त्वं विशालाक्षि, निषेद्धुमर्ह--
स्याभाष्य लीलाचतुरैः कटाक्षैः ॥ ८८

अर्हस्यनुज्ञातुमतः पिपासुं
कल्याणि, तावन्मधुराधरं माम्।
कामं शरच्चन्द्रमरीचिरग्र्या
भूयश्चकोरैः परिपीयमाणा ॥ ८९

ज्वलत्प्रभे, त्वं ज्वलनस्य पुत्री
सुधामयस्यापि विधोः सुतोऽहम्।
तस्मान्नितम्बिनि, कुरुष्व संविधत्तां
साम्यं परीरम्भमहोत्सवो नौ ॥ ९०

इत्युत्सवस्यैवमपेतधैर्य्या
प्रत्यग्रहीत् सा प्रणयं इतीव।
प्रत्यादिशेत् का पुरुषं विविक्ते
नितान्तमात्मन्यनुरागवन्तम् ॥ ९१

तयोरथ श्लाघ्यतरप्रसङ्गात्
पुरूरवा नाम सुतो बभूव।
विशेषवाय्वोरिव सन्निपाता—
ज्जलाभिधानो विमलः पदार्थः ॥ ९२

आकारैरनुमितभाग्यसम्पदन्तं
प्रस्निग्धस्ततनुरुचा परिस्फुरन्तम्।
निर्वर्ण्य प्रियतमया तया विसृष्टः
स्वं धाम प्रतिगतवान् बुधः प्रतीतः॥ ९३

इति चन्द्रवंशे महाकाव्ये पुरूरवःसम्भवो
नाम प्रथमः सर्गः।

---

## द्वितीयः सर्गः ।

अथ शापान्तमासाद्य सुद्युम्नः स्वां पुरीं ययौ ।
तमात्मजं समादाय कुमारमिव शङ्करः ॥ १
बालएवातिवल्गुत्वाज्जहार जगतां मनः ।
अयनं दक्षिणं प्राप्तः सहस्रांशुरिवाशु सः ॥ २
अल्पोऽपि वपुषा नम्रः स गुरुर्गुणगौरवैः ।
सुगन्धिभिः फलैः पुष्पैर्बालस्तरुरिवाबभौ ॥ ३
स तु सर्व्वगुणाढ्योऽपि न राज्यं प्राप पैतृकम् ।
राज्ञः स्त्रीत्वे किलोत्पन्नः परस्य हि सुतोऽभवत् ॥ ४
वशिष्ठवचनात्तस्मै प्रतिष्ठानं नृपोददौ ।
गङ्गा च यमुना चोभे यत्रास्तां परिखे इव ॥ ५
परां प्रतिष्ठामगमत् पुरे तत्र पुरूरवाः ।
श्रेष्ठा हि पुरुषाः प्रायः स्वगुणैरेव विश्रुताः ॥ ६
प्रकृत्या स्पृहणीयोऽभूत् प्रजानां संयतेन्द्रियः ।
स निर्म्मलयशा लोके मिथ्याचारपराङ्मुखः ॥ ७
अथ गौरीगुरोः शृङ्गे तपसा परमेश्वरम् ।
आराध्य किल साम्राज्यं स प्रापोर्ज्जितविक्रमः ॥ ८
त्रयोदशद्वीपमयीं महीं महितशासनः ।
शासनाङ्कां शशासोर्व्वीं गुणराशिवशानुगाम् ॥ ९
षाड्गुण्यपरिशुद्धस्य तस्य राज्ञो महीश्वराः ।
जगृहुर्हितमायत्यामादेशमुपदेशवत् ॥ १०

अमोघाः सायकास्तस्य सम्पाश्च धियोगुणाः ।
साराज्यस्य हये कुर्युः साम्राज्यं प्रति का कथा ॥ ११
प्रजापालनधर्मेण सम्प्रीतः पुरुषोत्तमः ।
स्वयमर्द्धासनं तस्मै गुणगुल्कमकल्पयत् ॥ १२
न रूपमन्वयं वाऽपि गुणमेवोन्नताश्रयाः ।
स्तुवन्त्यल्पो रजःक्षीणमणिः श्लाघ्योमनीषिणाम् ॥ १३
अथ जातुचिदत्युच्चैः स रथं कामचारिणम् ।
मनोरथमिवारुह्य चचार मरुतां पथि ॥ १४
ह्रियमाणां परित्रस्तां चित्रलेखामथोर्व्वशीम् ।
केशिनाऽप्सरसः साक्षात् स्वर्गलक्ष्मीमिवैक्षत ॥ १५
भिया विलीनकल्पन्तदुर्व्वश्या मुखपङ्कजम् ।
जहार सहसा तस्य दयालोः सुतरां मनः ॥ १६
प्रकृत्या रमणीयानां रामाणां सम्भ्रमादिभिः ।
म्लानाऽपि मुखपद्मश्रीरभिख्यामिति कामपि ॥ १७
तन्वङ्गी नृपतेस्तेतो लोलतामनयत्तथा ।
लिखितेव यथा तत्र चित्रितेव च साऽभवत् ॥ १८
विक्रमावसरं प्राप्तो राजा तस्य व्यतिक्रमम् ।
न कोपाच्चक्षमे क्षत्रो मिथ्योचितपराङ्मुखः ॥ १९
आस्कन्द्यमाने ह्यबले संरम्भो बलिनां यथा ।
न तथा बलवत्येषां स्वभावः सोऽयमीदृशः ॥ २०
तां वेपमानां विवशां शूली मायामृगीमिव ।
आश्वासयन् महेष्वासं ज्यया स समयोजयत् ॥ २१
प्रसर्पन्तमिवालोकं प्रासादः सेतुरुन्नतः ।
अम्भसामिव संघातं तं रुरोध धराधिपः ॥ २२
भूभृतोच्चैस्तरेणोच्चैः प्रत्याहतगतिक्रमः ।
प्रवाहवन्निम्नगाया भग्नवेगो बभूव सः ॥ २३

शरवर्षैश्च जग्राह राजानं दनुजेश्वरः ।
अविच्छिन्नैरिवासारैः सानुमन्तं घनाघनः ॥ २४
वरूथिनीनिर्व्यपेक्षावुभावपि विचक्षणौ ।
पुरतोऽप्सरसां प्राप्तविक्रमावसरो रणः ॥ २५
आमिषं रमणीरत्नं चित्रलेखा तथोर्व्वशी ।
किन्तत्र येन संरम्भो न तयोर्विपुलो भवेत् ॥२६ युग्मकम् ।
द्वयोर्हस्तवतोर्घोराः सञ्चरन्तो निरन्तरम् ।
महान्तः शिञ्जिनीघोषा वाग्विरोधं न सेहिरे ॥ २७
ज्वलद्भिरस्त्रैरालीढः श्यामलो दानवेश्वरः ।
दावानलसमाश्लिष्टशिलोच्चयइवाबभौ ॥ २८
वायुदैवतबाणेन दनुजं मनुजेश्वरः ।
दूरमुत्सारयामास क्षुद्रं कक्षमिवानिलः ॥ २९
संहृतज्यस्ततः प्राज्यामुर्व्वशीमाससाद सः ।
भुजवीर्य्याधिकप्रीतां मूर्त्तामिव जयश्रियम् ॥ ३०
तावद्वृषाऽपि सम्प्राप्तः समन्विष्यन् किलोर्व्वशीम् ।
क्रियमाणाममित्रेण कीर्त्तिं मूर्त्तिमतीमिव ॥ ३१
अथ तामब्रवीद्राजा योऽलभ्यां लब्धुमिच्छति ।
दैत्यस्त्वामवलेपान्धः स सुन्दरि, पराजितः ॥ ३२
अयञ्चाखण्डलश्चण्डि, त्वद्वियोगव्यथाऽऽकुलः ।
शचीमपि परित्यज्य विहस्तस्त्वामुपस्थितः ॥ ३३
तं लीलामधुरालापैः सम्भावयितुमर्हसि ।
निस्वनैर्भ्रमरस्येव वल्ली मलयमारुतम् ॥ ३४
अवदानेन देवानामपि प्रार्थितविक्रमम् ।
प्रति तं पृथिवीपालं पिप्रिये पाकशासनः ॥ ३५
ततस्तत्पूर्व्वमुर्व्वीशे वीर्य्यनिष्क्रयसुन्दरम् ।
सख्यमासीन्महेन्द्रस्य नरलोकसुदुर्लभम् ॥ ३६

पुरूरवसमादाय स्वां पुरीममरेश्वरः।
ययावप्सरसां लाभात् पुलकाञ्चितविग्रहः॥ ३७
ददौ चार्द्धासनं तस्मै स्वाङ्गमङ्गेन पीड़यन्।
गुणेभ्यो नम्रतामेति काममुच्छ्रिरसां शिरः॥ ३८
समक्षं सर्व्वदेवानामुर्व्वश्याश्चामरेश्वरः।
बहुमानञ्चकारास्य श्लाघ्यवीर्य्यस्य संसदि॥ ३९
यथा यथा स राजर्षिर्वज्रिणा प्रतिपूजितः।
आसीत्तथा तथोर्व्वश्या मुग्धं लोलञ्च मानसम्॥ ४०
अथ तस्य प्रमोदार्थं व्यादिदेश विशाम्पतिः।
लीलाङ्गहारसुभगव्यापारं प्रति तां वृषा॥ ४१
प्रागेव मानसं तस्याः पुरूरवसि सस्पृहम्।
लीलाविलासव्याजेन भावो व्यक्त इवाभवत्॥ ४२
लोलचित्ततया तस्याः प्रयोगेषु व्यतिक्रमम्।
न चक्षमे शचीनाथो यशः स्वमिव लङ्घितम्॥ ४३
इतोभ्रष्टा दुष्टचित्ते, कामसंमूढ़मानसे,।
कियन्ति वस वर्षाणि क्षिताविति शशाप ताम्॥ ४४
पुनश्चोवाच राजर्षिममुं प्रियसखं मम।
तवापि त्राणकर्त्तारमनुवर्त्तितुमर्हसि॥ ४५
दुष्प्रापमपि सा स्वर्गं तं विना किल वञ्चनाम्।
तत्सङ्गशंसिनं शापं मेने परमनुग्रहम्॥ ४६
समाभाष्य ततः शक्रं प्रत्यावृत्तः पुरूरवाः।
स्वां पुरीं पुरुषव्याघ्रः पारिजातस्रजोज्ज्वलः॥ ४७
अथ भेजे भुजश्लाघ्यं तमुर्व्वीपतिमुर्व्वशी।
ततो महीतलस्थोऽपि स स्वर्गसुखमन्वभूत्॥ ४८
शयनस्यान्तिके स्थाप्यौ पुत्रकावुरणौ मम।
उत्सृष्टशयनीयं त्वां न द्रक्ष्यामि दिगम्बरम्॥ ४९

आवयोः समयः सोऽयं यदैव परिहास्यते।
गमिष्यामि तदैवाहमितुग्रवाच तमुर्व्वशी॥ ५० युग्मकम्॥
सा किलाखण्डलेनैवं वियोगाकुलचेतसा।
आदिष्टेति ययाचे तमकामेव मनस्विनी॥ ५१
तथेति तस्याः प्रथमं प्रणयं प्रणयोत्सुकः।
अपालयन्महीपालः सोच्चैरप्रीयत प्रिया॥ ५२
तां समालिङ्ग्य भूपालो लेभे यत् सुखमञ्जसा।
बुधो विद्यामिवासाद्य कोऽन्यस्तद्वदितुं क्षमः॥ ५३
यस्यामानापनोदाय शक्रस्य प्रणतिक्रमः।
स्वयमालिङ्गनं तस्याः कं नानन्दयति क्षितौ॥ ५४
क्लिश्यन्ते तपसाऽत्यन्तं यदिच्छन्तस्तपस्विनः।
अयत्नोपस्थितन्तस्य तत् सुखं नृपतेरभूत्॥ ५५
गन्धर्व्वलोकादानीय त्रेताग्निं सोऽग्निसन्निभः।
अग्निहोत्रं समाजह्रे सकलत्रः कुलाग्रणीः॥ ५६
क्रतूनां शतमाहर्त्ता यशोव्यस्तं शतक्रतुः।
श्लाघ्येन तेन सुहृदा प्रीतिमानन्वमोदत॥ ५७
दानवानां चमूनाथानपि पार्थिवसत्तमः।
किङ्करानिव सन्निभान् महर्षीनुदवाहयत्॥ ५८
जिज्ञासमानस्तं जातु त्रिवर्गः समुपस्थितः।
गीतकीर्त्तिं सुरस्त्रीभिर्मूर्त्तिमानवनीश्वरम्॥ ५९
अनर्घ्यशीलः सोऽर्घेण सर्व्वान् प्रत्यग्रहीद्बुधः।
धर्म्मायाकल्पयद्भूयोबहुमानं महामनाः॥ ६०
तं प्रत्यर्थस्य कामस्य कामं मन्युमगच्छताम्।
उचितक्रममप्यल्पोमन्यते ह्यवमाननाम्॥ ६१
बलावलेपादन्धोऽसि मूढ़, मामवमन्यसे।
कामार्त्तो विकृतिं गच्छेरिति कामः शशाप तम्॥ ६२

20,123

लोभातिशयदोषेण स्वात्मनेव वियोक्ष्यसे।
व्यर्थाभिमानिन्नत्यन्तमित्यर्थोऽप्यशपन्नृपम्॥ ६३
राजधर्म्मप्रवीणन्तं धर्म्मोराजानमादरात्।
अवदद्वदतां श्रेष्ठः सस्मितः स्मयवर्ज्जितम्॥ ६४
स्त्रियां यशानलोत्थायां जातस्त्वममृतद्युतेः।
कुले कुलप्रदीपोऽसि निर्म्मले मलवर्ज्जितः॥ ६५
यस्य श्लाघ्यां कलामेकां बिभर्त्ति शिरसेश्वरः।
तदन्वयस्य ते राजन्नुचितैवोन्नतेच्छुता॥ ६६
उद्भवस्यानुरूपैव बुद्धिः शुद्धतरा तव।
कुतोनिर्म्मलता न स्यादूर्म्मिषु क्षीरवारिधेः॥ ६७
तदायत्तां महाराज, परां निर्वृतिमाप्स्यसि।
यशश्च शाश्वतं नास्था लौकिकेषु सुखादिषु॥ ६८
काममर्थश्च कामश्च तुभ्यं मन्युमगच्छताम्।
अवलिप्तः किलात्मानं न स्यात् कलयितुं क्षमः॥ ६९
त्रिलोकगीतयशसा स्वयं कुलिशपाणिना।
यत् सख्यं कृतमेतत् ते गुणानां खलु गौरवम्॥ ७०
करेण सादरं धत्ते कमलं कमलेक्षणः।
मदान्धः परिमृद्नाति तदेव सहसा गजः॥ ७१
साधूनामादरः श्लाघ्यः परेषां लङ्घनेन किम्?
तमःकवलितोऽपीन्दुरभिनन्द्यो महात्मनाम्॥ ७२
तस्मा व्यथिष्ठाः सन्मार्गे स्थेयाः स्थितिमतां वर,।
खलानामवलेपेन स्मितं कुर्व्वन्ति साधवः॥ ७४
अथ पार्थिवमाभाष्य भाभिराभाभासयन् दिशः।
तिरोबभूव धर्म्मोऽपि प्रसादसुमुखः क्षणात्॥ ७५
सोऽपि शापप्रसादाभ्यां परीतः पृथिवीपतिः।
गूढाग्निरत्नराशिभ्यां महीधर इवाबभौ॥ ७६

अथ सुरवनिताभिर्गीतकीर्त्तिः परेषा—
मविरतधृतदण्डो दण्डनीतिप्रवीणः ।
भुवमिव गुणरत्नामुर्व्वशीं निर्व्यपेक्ष—
स्तदितरमहिलायां भूमिपालोऽन्वभुङ्क्त ॥ ७७

इति चन्द्रवंशे महाकाव्ये धर्म्मप्रसादो नाम
द्वितीयः सर्गः ॥

---

## अथ तृतीयः सर्गः ।

अथ प्रजानामनयोज्झितानां
निःक्षिप्य रक्षां सचिवेष्वचिन्तः ।
ययौ विलासी प्रियया विहर्त्तुं
हिमाद्रिपादोपवनान्तरेषु ॥ १

गङ्गातरङ्गोक्षितसैकतान्ते
महीधरोद्गीर्णजलप्रपाते ।
दूर्व्वादलश्यामलताभिरामे
विकीर्णवैदूर्य्यमणिप्रकर्षे ॥ २

प्रफुल्लकल्पद्रुमपारिजात—
छाये समाच्छन्नसुगन्धिमध्ये ।
शृङ्गे सुतुङ्गस्तनया समेतो—
महाभुजो यौवनमन्वभुङ्क्त ॥ ३　युग्मकम् ।

चिराय गोत्रस्खलितापराधात्
पादानतं वल्लभमाक्षिपन्त्याः ।
कस्याश्चिदारक्तमुखं मृगाक्ष्या—
रेमे स कामी मधुरं निरीक्ष्य ॥ ४

अधित्यकायां मृगलोचनायाः
स्वच्छोपलायां स किलोपविष्टः ।
चुम्बन् मुखं तत्प्रतिबिम्बदर्शी
विनैव रेमे मणिदर्पणेन ॥ ५

भूयिष्ठनिर्व्विष्टनिकुञ्जपुञ्जा—
स्वाकृष्टनाकद्रुतिरञ्जितासु ।
स हेमकूटस्य दरीषु रेमे
कृशोदरीप्रेमरसप्रतीतः ॥ ६

चैत्रे ततश्चैत्ररथं प्रपन्नः
समुन्नतश्रोणिविशालयाऽसौ ।
आवर्ज्य शाखाः सदयं तरूणां
विनिर्व्विशन्त्या कुसुमान्तराणि ॥ ७

प्रेम्णा प्रयुक्तं सुरसुन्दरीभि—
र्दोलोत्सवं पेशलमध्यया सः ।
आलिङ्गितस्तत्कृतलब्धभाग्यं
विशाम्पतिस्तत्र विनिर्व्विवेश ॥ ८

लाक्षारसालिप्ततलस्य तस्याः
पादस्य सम्पर्कवशात् प्रफुल्लः ।
न खल्वशोको न विलासिवृत्ति—
रभूदसूयाविषयो नृपस्य ॥ ९

तस्या मधुश्चन्द्रिकयाप्रबन्धै-
विलुप्तसौभाग्यगुणोत्तराय ।
न कोऽपि लोकः स्पृहयाम्बभूव
पुंस्कोकिलानां कलकूजिताय ॥ १०

शुचौ तुषाराद्रिशुचिप्रदेशे
समुच्छ्रिते निर्झरशीकराद्यैः ।
शिरीषपुष्पोत्तरपुष्पशय्ये
भूयो विहारा नृपतेर्बभूवुः ॥ ११

प्रालेयसम्पर्कनिवारितौष्ण्यान्
रवेर्मयूखान् सुतरां दिवाऽपि ।
स चन्द्रपादानिव लोककान्तान्
नृपः प्रकाशैकफलान् सिषेवे ॥ १२

दवाग्निदीप्तातपतीव्रतप्ते
वनस्थलेऽप्यस्खलितप्रचारः ।
तया चरन् खल्वपि भूमिपालो-
न वासरौष्ण्यं गणयाञ्चकार ॥ १३

काले च शीतौष्ण्यवती च काले
तस्योर्वशी स्पर्शवती बभूव ।
मूर्त्तिः प्रिया प्रेमरसस्य सत्य-
मर्थानुरूपम्परिणाममेति ॥ १४

ततः पुरोवातसखः प्रगर्जन्
संस्तूयमानस्तृषितैः पतङ्गैः ।
प्रियासमाश्लेषसुखानुकूलः
सखेव राज्ञो जलदागमोऽभूत् ॥ १५

गुहाविसर्पिप्रतिशब्दघोर—
घनावलीगर्जितवेपिताङ्गी ।
निशाचरास्कन्दभियेव भूयः
स्वमुर्वशी वल्लभमालिलिङ्ग ॥ १७

तां स्निग्धरेखामिव चारुहेम्नः
समुल्लसन्तीं निकषोपलान्तः ।
असम्मनीया जलदेषु विद्युत्
पुनः पुनर्व्वीक्ष्य ह्रियेव लीना ॥

पुष्पोपचारच्युतशस्यकेश—
कलापलीलाश्च कलापवत्यः ।
विडम्बयन्त्यः परुषस्वरत्वा—
न्न साम्यमापुर्मधुराचरायाः ॥ १८

तस्याः कपोलोपरि लम्बमानः
कदम्बपुष्पश्रवणावतंसः ।
परागपुञ्जेश्चणदूषणत्वात्
राज्ञो विलासैकसखो बभूव ॥ २०

धन्यस्य यत् श्रोत्रपुटैकपेयं
भावार्द्रचेता रसवत्प्रकूज ।
शीत्कारमिश्रं तदपि ब्रुवानो-
घनागमः श्लाघ्यतमो बभूव ॥ २१

ततो नदीनामुदकानि तावद्-
वयोऽवसाने प्रमदामदा वा ।
व्यलीकलोकान्यपि कार्श्यमापुः
को वा सुखी स्यात्गमाकुलस्य ॥ २२

कामं सुरस्त्रीभिरथावतीर्य्य
भूयिष्ठनिर्विष्टजला स्रुदिन्यः।
श्लाघ्या बभूवुर्व्वपुषः कशल्वेऽ-
प्यन्योपकारी गुणएव भूयान्॥ २३

हैमं मृणालं परिभुज्य कामं
ब्रह्माभिधानात् सरसो निवृत्ताः।
नितम्बिनीशिञ्जितलोलचित्ता-
विलम्ब्य जगमुः किल राजहंसाः॥ २४

ज्योत्स्नाविधौतामलकान्ति तस्या-
राजा विनिर्व्विश्य मुखं रजन्याम्।
तृप्तिं प्रपेदे न हिमांशुपादै-
र्विचुम्बितं फुल्लमिवारविन्दम्॥ २४

मुखश्रियं लिप्सुरिवेन्दुरस्या-
श्छायाविशेषं बहुशोऽपि पुष्यन्।
न काङ्क्षितं प्राप फलं स लेभे
निर्वेदभावाद्विकललमेव॥ २६

तस्याश्चकोरैः परिभूयमाणं
मुखं मृगाक्ष्याः क्षितिपस्तदानीम्।
पुनः पुनस्त्रातुमनास्तरस्वी
क्षती न तावद्विफलोद्यमोऽभूत्॥ २७

प्रीत्यै प्रियायाः सुरसिन्धुपद्मं
समाददानं मदगन्धमिश्रम्।
तमन्यनारीजनसङ्गशङ्का
रणत्पदा सा प्रणतं जघान॥ २८

पौरस्त्यवातः पयसां गुरुत्वं
सम्पादयन्नेत्य तुषारवर्षी ।
गाढ़प्रियालिङ्गनमङ्गनानां
स्मरेण सन्दिष्टमिवादिदेश ॥ २९

स दीर्घरात्राञ्ज्वलितौषधीनां
ज्वालाप्रदीपोज्ज्वलितान्तरासु ।
दरीषु रेमे भुजमध्यलीना-
मस्थूलमध्यां परिरभ्य भूयः ॥ ३०

तस्या मधूच्छिष्टयुताधरोष्ठं
मुक्तासमाश्लिष्टमिव प्रवालम् ।
पिपासतः पेशलमप्रसन्नं
विलासिनस्तस्य मनो बभूव ॥ ३१

न पङ्कजान्तिकपटुस्तुषारो-
मुखारविन्दस्य चकार किञ्चित् ।
व्यलीकमस्याः खलु सारशून्यो-
निःसारमुन्मूलयितुं हि शक्तः ॥ ३२

तथापि तस्या व्रणलेशखिन्नो-
विलोलमल्पेतरलालसस्य ।
तस्याधरस्पर्शरसासहत्वात्
मनाग् दुनोति स्म मनः कपोलः ॥ ३३

कुन्दस्रजा चुम्बितकेशहस्त-
स्तस्या विलासचुरतचारुबन्धः ।
उद्दान्तमुक्ताफलवच्चकार
स्मराकुलं मानसमस्य भूयः ॥ ३४

श्रोणी तदालिङ्गनसम्भवं यद्-
विशेषसौभाग्यरसानुबन्धि ।
निर्व्वापितस्तेन हिमालयेऽपि
न कामयामास करीषवह्निम् ॥ ३५

ज्योतींषि सोमप्रमुखाणि सर्व्वा—
ण्यग्राणि शैलस्य वनान्तराणि ।
क्लिष्टानि तावन्ति तुषारवृष्टैः
प्रेमा तयोः केवलमुज्ज्वलोऽभूत् ॥ ३६

इति प्ररूढ़स्मरनिम्नचेता—
स्तया रसात् स्वर्गसुखाभिलाषम् ।
प्रविस्मरन्त्या शरदः स रेमे
क्रीड़ामरत्या मदनोपमानः ॥ ३७

प्रकाममभ्यर्थपतिः प्रतीतः
स निर्व्विशन्निन्द्रवदिन्द्रियार्थान् ।
चिराय कामान्धतरान्तरत्वात्
तमेव मेने त्रिगणस्य सारम् ॥ ३८

शुद्धोऽप्यमन्दद्युतिमानपीन्दु—
र्विद्योतते व्योमनि तावदेव ।
यावन्न मेघो न हिमागमो वा
दोषातिरेको हि गुणावलोपी ॥ ३९

चारुप्रभायाश्चिरविप्रयोगं
दिवौकसः सोढुमशक्नुवन्तः ।
द्यां नेतुमेतामचिरादिवोच्चै—
र्निसर्गकान्ताः भृशमलपन्त ॥ ४०

समेत्य गन्धर्व्वगणोऽथ सर्व्व—
स्तदुर्व्वशीपुत्रकमिषयुग्मात् ।
प्रभावदुर्लक्ष्यवपुः क्षणेन
क्रोशन्तमेकं निभृतं जहार ॥ ४१

आकर्ण्य तत्क्रन्दितमप्रमत्ता
सेन्दीवराक्षी क्षितिपं बभाषे ।
केनापि सत्वेन कुतोऽपि नीतो—
मत्पुत्रकः सम्प्रति पश्यतस्ते ॥ ४२



तं त्रातुमर्हस्यतिमात्रदीन—
मदीनसत्वोऽसि दयार्द्रचित्तः ।
तरस्विनो नाम समक्षतश्चेत्
क्षतं तदस्यैव यशः क्षिणोति ॥ ४३

उवाच राजा ऋजु शान्तयित्वा
कान्तामलं सुन्दरि, कातरोक्त्या ।
दिगम्बरो नालमितोऽस्मि गन्तुं
प्रसीद तद्देवि, कृतोऽञ्जलिस्ते ॥ ४४

स्थिरप्रतिज्ञं नरनाथमेवं
कर्त्तुं स्खलद्वृत्तमपारयद्भिः ।
तैरेव भूयः सहसा न सत्वै—
र्न तावदन्योऽप्युरणो हृतोऽभूत् ॥ ४५

पुनः पुनः प्रार्थनयाऽपि भूपं
बभूव नोत्थापयितुं समर्था ।
अथातिनिर्व्विण्णमना रुरोद
सा मुक्तकण्ठं कुररीव रामा ॥ ४६

सा मानिनी किञ्चिदभाषमाणा
मही‌पतिं केवलमाकुलाक्षी।
चक्रन्द संक्रन्दनमाक्षिपन्ती
क्षिपन्त्यतिस्थूलतमाश्रुबिन्दून्॥ ४७

अनाथवत्यस्मि हृतौ सुतौ मे
वीरो न कोऽप्यत्र कथं करोमि।
अधिक्षिपन्ती क्षितिपालमेवं
विलोलकेशा विललाप भूयः॥ ४८

उष्णास्रबिन्दुप्रकरैस्तदीयै-
र्वाग्भिश्च दुःसह्यतराक्षराभिः।
उल्काभिरुच्चैरभिहन्यमानो-
दन्तीव कान्तः स भृशं चुकोप॥ ४९

पुरूरवस्यत्र धनुर्धरेऽपि
को नाम पुत्रं हरति प्रियायाः।
समीक्षमाणेऽपि शिशुं मृगेन्द्रे
के वा मृगा लङ्घयितुं क्षमन्ते॥ ५०

द्विपेन्द्रमारुह्य बलावलेपा-
दसह्यगन्धोरुकटप्रवाहम्।
निरङ्कुशः काङ्क्षति कोऽद्य गन्तुं
कृतान्तपुर्यामतिथिर्भविष्यन्॥ ५१

अलं विलापेन विशालनेत्रे,
पश्य प्रिये, मद्भुजवीर्य्यमद्य।
अवेहि पाटच्चरमुच्चरन्तं
लोकादितस्त्वं खलु वीरपत्नी॥ ५२

देवोऽथवा दानव एव वा स्यात्
सिद्धोऽथ गन्धर्व्वगणो मनुष्यः ।
तं पातयिष्ये निशितैः पृषत्कै-
र्व्वातः खरो भूमिरुहानिवोच्चैः ॥ ५३

तं गृध्रपक्षैः परिवीज्यमानं
मूर्च्छान्तरं कान्तिमदभ्युपेतम् ।
सुराङ्गनाः सङ्गतचारुवेशाः
विलोभयिष्यन्त्यधुना विलासैः ॥ ५४

इतीरयित्वा धनुराततज्यं
करे समादाय स च प्रतस्थे ।
गन्धर्व्वलोकैर्युयुजे च सद्यो-
विद्युद्विशाला जलदं विनैव ॥ ५५

दिग्वाससं वासवदर्शनीयं
नृपं समालोक्य विशालनेत्रा ।
तिरोहिताऽभूत् सहसा तड़िद्व-
त्तदोर्व्वशी विद्रुतहेमगौरी ॥ ५६

न केवलं भूतलमेव तस्याः
स्थानन्तिरोधानवशाद्बभूव ।
अज्ञातघोरव्यसनातिपातं
मनोऽप्यकस्मान्नृपतेर्विदद्रे ॥ ५७

ततः कथञ्चिन्मनसश्चलत्वं
स्थानस्य सोऽम्लानमुखो निगृह्य ।
शरासनारोपितसायकोऽभूत्
स्थिरप्रतिज्ञा हि सदा महान्तः ॥ ५८

तत्कार्मुकस्याशनिशब्दकल्पं
ज्याघोषमाकर्ण्य परे विभग्नाः ।
हुङ्कारमात्रेण हरेर्विदूरं
सहस्रशो नाम मृगाः श्रयन्ते ॥ ५९

आदाय दायादयुगं प्रियायाः
प्रत्यागतः स्वं निलयं नृपालः ।
अनीक्षमाणो हरिणीक्षणां तां
नितान्तमुच्चैः समतप्यतान्तः ॥ ६०

हर्षः प्रिया प्रार्थितसिद्धिजन्मा
विषादहेतुर्नृपतेर्बभूव ।
स्रोतस्वतीस्रोत इवानिवार्य्या
गच्छत्यजस्रं हि जगत्यवस्था ॥ ६१

विलुप्तहर्षो न तथा दिदीपे
सोऽन्तःप्रियाशोकतमोऽवलीढः ।
गतप्रकाशो दिवसावसाने
ध्वान्तैरिव च्छन्नतरो महीध्रः ॥ ६२

तत्पुत्रकद्वन्द्वमसौ लताभि-
र्निबध्य दध्यौ मनसा द्रुतेन ।
गता किमेषा परिहासपूर्व्वं
समागमिष्यत्यधुनैव भूयः ॥ ६३

गता भवेत् स्वर्गसुखं स्मरन्ती
प्रियानुरागस्तु मनस्विनीनाम् ।
विशेषतः प्रार्थितवस्तु सोऽहं
नितान्तमेवैकरसोऽस्मि तस्याम् ॥ ६४

परस्परप्रेमरसानुविद्धं
लोलं मनो नाम परस्परस्य।
सुदुर्लभं यत्त्रिदशालयेऽपि
तदावयोरप्यनपायमेव॥ ६५

गता भवेद्वा तरलायताक्षी
सा बान्धवप्रीतिमनुस्मरन्ती।
मनस्तु नार्य्या दयिते यथा स्या-
त्तथा न भावाद्गुरुतरं परेषु॥ ६६

स्वयञ्च सा प्रेमरसैर्निषिच्य
त्यजेत् कथं मामविलक्षमेव।
कृतेऽपराधं न तथाविधायाः
पराङ्मुखी स्निग्धजने प्रवृत्तिः॥ ६७

पुरा स्मरस्यैव निदेशतः सा
विलासिनी मे स्पृहयालुरासीत्।
इयन्ति वर्षाणि न चायताक्ष्या
स्तस्या न भावो मयि लक्षितोऽभूत्॥ ६८

मूर्त्तेव कीर्त्तिः सुदती मघोन-
स्तां निर्व्विशङ्कस्मि न तेन सोढ़ः।
तस्यानुकूल्ये सति नाम कोऽन्यो-
नयेदितस्तां मयि बद्धभावाम्॥ ६९

मित्रं न तावन्न सहस्रनेत्रो-
गता नताङ्गी कतमः क्रमोऽयम्।
श्रेयस्यकल्पे सुहृदोऽपि चेतो-
द्वेषोन्मुखा तप्यतइत्यमिथ्या॥ ७०

नामत्यभाग्यं सुरलोकलक्ष्मी—
र्दिगम्बरं प्रेक्ष्य नितम्बिनी सा ।
दैवोपपन्नात् समयातिपातात्
यद्वा किमत्यन्तमभूत्तथैव ॥ ७१

इतीरयमन्तर्गलदस्रुपूर—
श्चिराय राजा परिचिन्त्य किञ्चित् ।
अपारयन् धारणया नियन्तु—
मुच्चैःस्वरं तद्व्यसनं रुरोद ॥ ७२

स निर्ययौ निर्जितमन्नुपक्ष—
स्त्राता मघोनोऽपि रणप्रवीणः ।
अलब्धवस्तुप्रतिबद्धलक्ष्यो—
वर्णान्तराक्रान्तमुखो मनस्वी ॥ ७३

प्रिया-विलासच्युतमेखलायाः
श्लाघाविशेषात् सकलं दधानः ।
अलक्षितायामपि पद्मपंक्तौ
मतङ्गजो नालमिवावशिष्टम् ॥ ७४

निर्व्विष्टपूर्व्वेषु निकुञ्जपुञ्जे—
ष्वसौ प्रियां प्रेमरसो विचिन्वन् ।
चलासु वल्लीषु विलासमस्या—
भूयोविलासी सदयं ददर्श ॥ ७५

लतासु हेमस्तवकासु हैमी—
ष्वासज्य तृष्णातरलं स चक्षुः ।
क प्रस्थिता सुन्दरि, मां विहाये—
त्याभाष्य कामी परिषस्वजे ताः ॥ ७६

पुरा त्वयन्तान्तरवल्कलान्त:
स धातुरागैर्लिखितां विलोक्य ।
आसादिता यक्षि, चिरात्प्रसीद
प्रसादये त्वां शिरसेत्यवोचत् ॥ ७७

अत्यन्ततृष्णातरलेक्षणाभ्या
मनन्यदृष्टिः स पिबन्नजस्रम् ।
तां चित्रितां मत्तचकोरनेत्रे,
दासे प्रसीदेति बभूव नम्र: ॥ ७८

आलेख्यशेषामथ तां स कामी
चिराद्विनिश्चित्य गलज्जलाक्ष: ।
तदाकृतेर्दुर्लभदर्शनत्वात्
प्रायस्तदालोकसुखो बभूव ॥ ७९

अत्यन्तमालोकपथव्यतीते
लघौ पदार्थे प्रतिबिम्बमेव ।
स्लाघ्यन्तदाकारसमर्पकत्वात्
लोले मनस्युत्क्षणशोकशङ्को ॥ ८०

विलुप्तसर्व्वेन्द्रियवृत्तिरासीत्
मुहूर्त्तमज्ञातगुरुव्यलीक: ।
मिथ्याप्रियाऽऽश्वासवचोभिरच्चै:
पुन: प्रबोधं नृपति: प्रपेदे ॥ ८१

प्रिये प्रपश्येस्तनयं त्वयन्त—
दानीतमानीतमितीरयित्वा ।
चिरादथोत्थाय विलम्ब्य भूयो—
मा तावदित्याशु पुर: ससार ॥ ८२

तुङ्गाद्रिमालिङ्ग्य समुन्नसन्तीं
विलोलचेतास्तड़ितं विलोक्य ।
प्रियारुचिप्रायतया स किञ्चित्
प्रकाशमानामनकान्तिरासीत् ॥ ८३

चण्डि, प्रसीदाऽसि चिरेण दृष्टा
स्निग्धाऽसि हैमी निकषेव रेखा ।
इतीव यावत् प्रणतोऽनुनेतुं
तावद्विलीना जलदेषु विद्युत् ॥ ८४

चिरेण मूर्द्धानमथोन्नमय्य
प्रियामपश्यन् द्विगुणावसन्नः ।
अस्तोत्तरां तत्र विलुप्तकल्पां
दृशं दधे निश्चलपक्ष्मपंक्तिम् ॥ ८५

बाष्पातिरेकादवरुद्धकण्ठ-
श्चिराद्व्यवस्थाप्य गिरं कथञ्चित् ।
हृदि स्थितामस्थिरवर्णसंघं
प्रियां समाभाष्य नृपो बभाषे ॥ ८६

एतावतीमस्मि दशां त्वदर्थे
गतो न किञ्चिद्दयसे तथापि ।
पद्मस्य युक्ता मृदुतैव कस्मा-
द्रसोद्भवस्याशनिसारता स्यात् ॥ ८७

तुषाररश्मिर्दहनं विषं वा
कदापि वर्षेदपि नाम कामम् ।
तथापि रौक्ष्यं न भवेद्भवत्यां
कोऽयं क्रमो हन्त गताऽसि कान्ते ॥ ८८

अथापरस्याः ककुभः प्रवृत्त—
माघ्राय तद्भावसमानगन्धम्।
शीघ्रं परावृत्त्य ससङ्गं दृष्टिं
ततोऽग्यलोकोत्तरमस्तलुम्पाम् ॥ ८९

सत्वावलोपविकलः स महीरुहादीन्
पप्रच्छ वार्त्तमनिशं विवशः प्रियायाः।
इत्थं गतः कथमपि क्षितिपो ददर्श
प्राणेश्वरीमपि लतां कुरुजाङ्गलेषु ॥ ९०

स प्रश्नतीर्थमनु हैमवतीत्यभिख्ये
क्षान्तीं सरस्यनुगतामपरापरोभिः।
भूयः प्रमृज्य नयने प्रणिधानपूर्वं
सैवेयमित्यतिचिरेण विनिश्चिकाय ॥ ९१

स्नपिततरमिवास्याः कान्तमालोक्य वक्त्रं
शुचमलघयदल्पं तत्क्षते सोऽप्यनल्पाम्।
इयमिह परिदुन्वन् विप्रयोगोऽपि यूनोः
सुखपरिणतिकश्चैरेकमिष्ठः क्षिणोति ॥ ९२

इति चन्द्रवंशे महाकाव्ये पुरूरवोविप्रलम्भोनाम
तृतीयः सर्गः।



## चतुर्थः सर्गः ।

अथोर्व्वशी प्रेक्ष्य तथा क्षितीश्वरं
कृशं रजोधूसरमुत्कमानसम् ।
मुहूर्त्तमानन्दलवं किलान्वभूत्
चिराय रूपं तु निनिन्द चेतसा ॥ १

विनिःश्वसत्येव वयस्यया मिथः
कृतानुयोगा हृदयप्रविष्टया ।
जगाद बाष्पोद्गमगद्गदाक्षरं
न बान्धवानां प्रणयो विलङ्घ्यते ॥ २

महीपतीनां प्रथमोधुरन्धरी-
वसुन्धरामम्बुधिविम्बमेखलाम् ।
प्रजानुरागाद्भुजवीर्य्यनिर्जितां
प्रशास्ति यः शस्तमनीषयाऽनिशम् ॥ ३

हविर्भिरुच्चैर्मधुरैर्हविर्भुजः
तपोभिरुग्रैः शशिखण्डशेखरः ।
प्रतर्पितो येन विशुद्धबुद्धिना
न कोऽपि दीनो भुवि यस्य दत्तिभिः ॥ ४

बलावलेपादवलोकयत्यपि
ज्वलत्प्रतापे बलसूदने च माम् ।
अनाथवद्दानवनाथलङ्घितां
न चक्षमे यः क्षतरक्षणोचितः ॥ ५

गुणावलीभिर्विनतोऽपि लङ्घयन्
प्रसिद्धदेवासुरसिद्धकिन्नरान् ।
स्वशक्तिमात्रार्जितमन्यदुर्लभं
तदासनं गोत्रभिदोऽप्यधिष्ठितः ॥ ६

शचीस्वहस्तेन सुरद्रुमाहृतै—
र्मुहुर्मुहुर्व्वारितभृङ्गलङ्घनैः ।
स्रजं प्रसूनैर्घटितां वृषोचितां
बभार योऽचोभमयेन वच्चसा ॥ ७ युग्मकम्

विलोलमाखण्डलभोगनिस्पृहं
नसिद्धगन्धर्व्वगणानुरञ्जितम् ।
मनोमदीयं मदनेऽप्यनादरं
बभूव यस्मिन्नतिभूमिमागतम् ॥ ८

अहं महेन्द्रस्य निदेशवर्त्तिनी
द्युलोकतो मध्यमलोकमागता ।
इयन्ति वर्षाणि निमेषवन्मुदा
सुखोषिता यस्य गृहे यशस्विनः ॥ ९

मया कथञ्चिच्चिरसञ्चितैः शुभैः
प्रलभ्य यत्प्रेम वधूसुदुर्लभम् ।
अलं गतैः सङ्गतया वयःफलै—
र्लघर्द्युलोकोऽपि सुखेन विस्मृतः ॥ १०

विचिन्त्यमानोऽप्यतिचित्तजन्मनो-
रतोत्सवो यस्य मतोनतभ्रुवाम् ।
विलोलमाप्याययति चणेन नः
चिनोति चेतः प्रकरोति चोत्सुकम् ॥ ११

स खल्वयं श्लाघ्यतमोज्ज्वलोरसो-
रसः स वीरश्च शरीरवानिव ।
सुधांशुवंशैकधुरन्धरः क्षितौ
पुरूरवा नाम नरोत्तमोमतः ॥ १२

अहो युवा कोऽप्यतिमानुषक्रम—
श्चिराय धन्याऽसि सखीति तां प्रति ।
तदा वदन्त्योऽप्सरसोऽन्तरात्मना
तदीयसौभाग्यमिवाभ्यसूयिताः ॥ १३

ततः पिबन्त्योनयनैस्तमङ्गनाः
रसालसैस्तृप्तिरसं न लेभिरे ।
व्रजन्ति शान्तिं न खलूर्म्मिमालिनी—
महोर्म्मयश्चन्द्रमसि स्फुरत्प्रभे ॥ १४

चलाऽपि लक्ष्मीर्यमवाप्य निश्चला
विलोक्य तं निश्चलविग्रहाः स्त्रियः ।
अमन्दमानन्दजवाष्पविन्दुभि—
र्विभेदमापुः खलु चित्रवस्तुनः ॥ १५

स चापि तावद्विकसन्मुखच्छवि—
र्जवादुपेत्य प्रणतः प्रियां प्रति ।
प्रसीद चण्डि, प्रभुभिर्व्विंतन्यते
गुरुर्न दण्डः स्वजनेष्विति ब्रुवन् ॥ १६

प्रभेव भानोर्गगनं, महीधरं
समुन्नता विद्युदिवाम्बुदां निधिम् ।
शिखा जलान्मेरिव, मामुपप्लुतं
पुनः समालिङ्गितुमर्हसि प्रिये, ॥ १७

इति ब्रुवन्तं परिरभ्य भामिनी
प्रहर्षवाष्पव्यतिदूषितेक्षणा ।
उवाच राजन्, सुरराजशासनात्
गताऽस्मि भूयस्त्रिदिवं सुदुःखिता ॥ १८

प्रजानिषेकः किल वंशवर्द्धन—
स्तवोरुकीर्त्तेर्नृप, विद्यते मयि ।
प्रसूतया नाम पुनर्निशीथिनी
समं त्वयैका विहरिष्यते मया ॥ १९

ततस्तमाभाष्य ययुस्त्रिपिष्टपं
प्रकामगम्भाः खलु देवयोषितः ।
सुधाक्तवाग्भिः प्रियया प्रबोधितो—
नृपोऽपि नातिप्रमनाः पुरीं ययौ ॥ २०

अथायुरित्यप्सरसोमहीपते—
रजीजनत् पुत्रममित्रकर्षणम् ।
तमःप्रभेदे चतुरं निशाकरं
दिशो यशोभिः सुरभिं मुनेरिव ॥ २१

धनुर्भृतां दुर्मदशासनोचितः
स वानिनीप्रार्थितयौवनोदयः ।
गुणानवाप्तः प्रभवानुयायिनो—
व्यदर्शि पित्रोः सदृशोदगुणस्त्रः ॥ २२

प्रियागतं प्रेम नृपस्तदुद्भवे
विशेषतः श्लाघ्यगुणे सुते न्यधात् ।
परं न पित्रोः प्रियतानिदर्शनं
वराऽप्यसौ मूर्त्तिरिति प्रचक्षते ॥ २३

परेऽपि तस्यात्मतनयाः प्रजज्ञिरे
महीपतेर्नाम महायशस्विनः ।
यदन्वयैर्भिन्नकुलैर्महीतल—
मलङ्कृतं व्योमवदृक्षसञ्चयैः ॥ २४

अथास्य दैवात् प्रकृतिर्विपर्य्ययं
जगाम शुद्धाऽपि विशुद्धजन्मनः ।
यथाऽऽत्मनः काऽपि दशा विनिर्म्मला
मनःप्रसङ्गान्नितरां व्यतिक्रमम् ॥ २५

सुदुर्लभोयस्त्रिदिवेऽपि भूपतेः
प्रजाऽनुरागस्तमसौ यदृच्छया ।
अमार्जयद्दुर्जयदुर्म्मदोदया—
ज्जनापवादं निजमात्मवानिव ॥ २६

करैरनेकैः परिपीड़िताः प्रजा—
गृहीतसाराः कृशतां प्रपेदिरे ।
विवस्वदजस्रैः प्रचुरैर्हृतोदका-
स्तपे समस्ताइव सिन्धुयोषितः ॥ २७

प्रजावलीनां नृपतौ विशोषके
नकिञ्चनत्वं समभूत् क्षमावहम् ।
भुजङ्गमानामपराभिवञ्चतः
शिरःसुरत्नव्यपरोपणे यथा ॥ २८

वियोज्य भर्त्रा भुजवीर्य्यदुर्म्मदो—
बलात् परेषां बुभुजे स योषितः ।
लतावलीं पादपसङ्गनिश्चलां
विकृष्य वातोग्रपयत्यपक्रमः ॥ २९

स पश्यतो भर्तृकुलस्य निश्चयः
सकज्जलास्रुस्नपितस्तनान्तराः ।
प्रवेपमाना भयमन्युविह्वलाः
समालिलिङ्गापनयः कुलाङ्गनाः ॥ ३०

तदीयवक्त्रं गलिताञ्जनास्रुभिः
परिप्लुतं शैशिरशर्व्वरीश्वरम् ।
विधुन्तुदोद्दामदवाम्बरान्तरा—
च्चुचुम्ब भूयः किल कज्जलाविलः ॥ ३१

महाऋषीणामपि सोऽतिलोलुपो—
जहार तावद्वसु यागसाधनम् ।
भवेत् कथं नाम विचारगोचरा
विचारमूढस्य मतिर्गुरुष्वपि ॥ ३२

प्रबाधमाने नृपतौ शुभोदयाः
ययुर्व्विलोपं धनसाधनाः क्रियाः ।
सएव वर्णाश्रमधर्म्मरक्षिता
कएनमेनोनिरतं प्रतीपयेत् ॥ ३३

विधुन्तुदस्येव विधुस्तथाऽंशुमान्
अविन्धनाग्नेरिव सिन्धुरुन्नतः ।
दवानलस्येव तरुव्रजोऽवशः
जनो विषेहेऽनयमस्य भूपतेः ॥ ३४

ततो वषट्कारविलोपदूषिते
महीतले वारितमङ्गलोत्सवे ।
व्यतिक्रमोद्दीपिततीव्रमन्यव—
स्तदोपसर्गं त्रिदशाः समाव्रजन् ॥ ३५

पुराऽभवद्भूपतिरादरास्पदं
ततः प्रकोपस्य पदं दिवौकसाम्।
प्रयोजनप्रत्ययजो हि कृत्रिमो—
लघौ गुरूणां प्रणयो न तत्त्वतः॥ ३६

सनत्कुमारोऽथ नयैकशेवधिः *
पथश्युतं बोधयितुं बुधात्मजम्।
अवातरत्तत्प्रथमं नभस्तलात्
शरीरवत् पुण्यमिवाम्बरौकसाम्॥ ३७

जनव्रजैः सूर्य्यद्दर्शेक्षितः चणं
द्युलोकतोमध्यमलोकमीरितः।
प्रजाव्यलीकेन दयालुरित्यतो—
भुवस्तलं धर्म्म इवागतस्ततः॥ ३८ युग्मकम्।

अथाङ्गसारैर्नमयन् भुजङ्गमं
गुणातिरेकैर्व्वसुधां समुन्नयन्।
मनुष्यलोकेऽप्यतिलोकविक्रमः
क्रमेण मृग्यं चरणं मुनिर्न्यधात्॥ ३९

अथार्घ्यपाणिस्तमनर्घ्यमादरात्
स दुर्म्मदः प्रत्युदियाय पार्थिवः।
तथाविधानास्तपसाऽप्यचेतनाः
वशानुगाः कैव कथा शरीरिणाम्॥ ४०

स्वहस्तदत्ते मणिकाञ्चनासने
निवेशयामास तमागतस्त्रपः।
स वक्तुमेनं मुनिरग्रतः स्थितं
स्थितेर्व्विभेत्तारमथोपचक्रमे॥ ४१

हृषानुरोधात् प्रथमेन वेधसा
विसर्ज्जितस्त्वां प्रति सम्प्रति स्वयम्।
निबोध तावद्धितमप्यतत्प्रियं
जनः प्रभूणामुपदेष्टुमक्षमः॥ ४२

कुले प्रसूतोऽसि मनोर्महात्मनः
प्रसिद्धशीतांशुसुतात्मजोऽप्यसि।
श्रुताधिगन्ताऽसि गुरोरनन्तरं
यशःप्रकाशोऽस्यतिलोककर्म्मभिः॥ ४३

तथापि कोऽयं मतिविभ्रमः पथि
न्यधाः पदं यद्विदुषां विगर्हिते।
मनुष्यलोकादुपरिक्रमोचितो—
न खेचरो नीचपथेन गच्छति॥ ४४

महाजनानां स्थितये महीपति—
र्न जातु तेषामपकारकारणात्।
शमीतरोः साम्प्रतमग्न्युपप्लवो—
न सुन्दराश्चन्दनपादपादपि॥ ४५

भवद्विधादुच्छ्रिरसो जनः सदा
धनं महौघ्रादिव नाम काङ्क्षति।
भवान् स्वयञ्चेदपहारमिच्छति
च्युतस्तदा हन्त चिरन्तनो विधिः॥ ४६

परोपकारैकफलः पराक्रमः
परापकाराय तवाधुना भवन्।
दुनोति लोकं तड़ितां विवर्त्तनैः
सुदुर्जयो वज्रइव प्रवर्त्तितः॥ ४७

तुषाररश्मिः किरणैः प्रतापये-
दपि स्वगन्धैः सुरचन्दनद्रुमः ।
हिमं दहेच्चापि तथापि युज्यते
न ते विकारः श्रुतपारदृश्वनः ॥ ४८

पुरा शरत्पार्व्वणचारुचन्द्रवत्
प्रमृष्टमुक्ताफलवत्तवोज्ज्वलम् ।
असंशयं यत्सदृशं तथा जनैः
प्रसन्नमासीदपकल्मषं मनः ॥ ४९

न तन्नितान्तप्रतिकूलगामिभिः
कृतं कृतान्तैर्न मनस्तवेदृशम् ।
प्लुतं तरङ्गैर्लवणोर्म्मिमालिनो-
र्दुनोति गङ्गाम्बुद्रवाद्य मानसम् ॥ ५०

अतः किमन्यन्मतिमङ्गलाग्रणी-
र्भवेज्जगत्यामयशस्करं वद ।
पुरा प्रजारञ्जनरूढ़िरञ्जिते
यदञ्जसा राजनि तद्व्यतिक्रमः ॥ ५१

विरक्तलोकस्य विलुब्धचेतसः
सदा समास्कन्दभयाकुलात्मनः ।
जनैर्व्विषस्यामृतशब्दवद्वृथा
विड़म्बना राजपदं प्रयुज्यते ॥ ५२

सदैव राज्ञः प्रतिषिद्धमुद्धतो-
यशस्य, दस्यूचितमाचरन् मुहुः ।
जनैर्म्महाराजइति प्रबोधित-
स्त्वमात्मना ब्रूहि कथन्न लज्जसे ॥ ५३

यशः स्वमुच्चैश्चरितेन दूषयन्
सुदुर्लभं नाम यदृच्छया भवान्।
अहो धनव्याजकलङ्कपङ्किल—
स्तथापि तावन्न कथं विबुध्यते॥ ५४

बलेन किं यद्भयमावहेत् सतां
धनेन किं यज्जनयेच्च किल्बिषम्।
धिया च किं या सततं कुतर्कयेत्
किमात्मना योऽप्ययशः समाप्नुयात्॥ ५५

यशोविपद्वारणधर्मकारणात्
धनार्जनं नाम मनीषिणाम् मतम्।
करोति यस्तत्त्रितयव्यतिक्रमं
न तद्धनं तन्निधनं प्रचक्षते॥ ५६

विशुद्धमार्गेण यदेव लभ्यते
तदेव लोके यशसे सुखाय च।
अतोऽन्यथा सज्जननिन्दितन्तु त-
न्न जातु दस्योरिव तस्य शान्तये॥ ५७

अपि प्रकामश्रुतवानसि स्वयं
त्वमेव बुध्यस्व विचार्य्य चेतसा।
नराङ्कके खल्वपि काचभङ्गुरे
त्रिलोकराज्यार्जितसम्पदैव किम्॥ ५८

करैः किमङ्ग, प्रकृतीः प्रपीड़य—
त्यनेकधा लोभवशंवदो भवान्।
सहस्रसंख्यैरपि तैः प्रतापयन्
न भानुरुच्चैः पदमश्नुते चिरम्॥ ५९

यदाऽस्तमायात्यवशो विभावसु-
र्न रश्मयस्तस्य सहस्रसंख्यकाः ।
अपि क्षमन्ते क्षणमात्ररक्षणे
तदेतदालोच्य हृदा सुखी भव ॥ ६०

परं हरेः कौस्तुभरश्मिरञ्जितं
विशालवक्षःस्थलमप्युपेत्य या ।
सुखेन लक्ष्मीर्जनमन्यमाश्रयेद्-
बुधस्य तस्यां कइवातिनिर्भरः ॥ ६१

इयं हि वीरक्षतजामृतोक्षिता
शिरोभिरेषां बहुशः पुरस्कृता ।
यदा न धत्ते स्थिरभावमात्मनः
तदा कएनामपि निघ्नतां नयेत् ॥ ६२

अथ त्रिलोकीज्वलितेन तेजसा
नयेन चोच्चैस्तरवस्तुतस्थुषा ।
स्थिरत्वमस्या नरनाथ, मन्यसे
सदध्वनः प्रस्खलसि स्वयं कथम् ॥ ६३

भवद्विधानार्यनिवासदूषणै-
र्निसर्गसौभाग्यमनोरमा रमा ।
स्वभावलोलेत्यपवादमुच्चकै-
रमार्जनीयं गमिता किलाभवत् ॥ ६४

स्वभावतः स्वादुरसोत्तराऽपि या
कलिन्दकन्येन्दुविनिर्मलोदका ।
अवाप्य सा संश्रयदोषमुल्बणं
विचक्षणैर्नीलजलेव लक्ष्यते ॥ ६५

त्रिलोकलक्ष्मीमपि भोक्ष्यसे बला-
द्यथापि लोभस्य न शान्तिमेष्यसि ।
अयं हि भोगैः परिवर्द्धते मुहु-
र्गदः कुपथ्यैरिव सान्निपातिकः ॥ ६६

असाम्प्रतं कामविधेयमानसो
यदन्यदुच्चैर्मलिनं समाचरः ।
क्षिणोति तत्ते यशसा समं वपु-
स्तथापि राजन्, न कथं विबुध्यसे ॥ ६७

उभौ नराणामपयस्तरस्विनौ
वदन्ति तावत् परिपन्थिनौ रिपू ।
विधेयतामेव तयोर्भवान्
स्वतन्त्रतामात्मन इत्यवैति किम् ॥ ६८

न पूर्यते सिन्धुजलैर्निरन्तरं
प्रपूर्यमाणोऽपि यथा महार्णवः ।
तथैव काम्यैर्विषयैः प्रपूरणे
सदा कृतेऽप्यस्ति तयोर्न पूर्णता ॥ ६९

पदं विनिर्विश्य यदेकमादरात्
कृतार्थमात्मानमवैषि मानद ।
वृथैव तन्नाम मनोरथान्तर-
स्ततोऽपि भूयस्तुदतीह मानसम् ॥ ७०

जनिप्रभृत्यामरणान्तमेव वा
मनोरथौघैर्व्यथितोऽभवस्यपि ।
न जालमीषामवसानमेष्यसि
प्रमाथिनस्ते हि रिपोरनन्तराः ॥ ७१

मनोऽभिलाषाः हि गृहाश्रमोचिता-
स्तथाप्यमी खल्ववधिव्यपाश्रयाः।
प्रहर्द्धिरेषामृषिभिर्विगर्ह्यते
कलेवरस्थानिलमुख्यधातुवत्॥ ७२

अहो शरीरान्तरचारिणं रिपुं
न चेद्विजेतुं जयशील, शक्यसे।
कथं परान् जेतुमना न लज्जसे
गदीव साक्षाद्वलिनं सुदुर्ब्बलः॥ ७३

अतोमितैर्भोगसुखैर्मनीषिण—
श्चिराय राजन्, परितृप्तमानसाः।
समीहमानारिचिवर्गे त्वनुत्तमं
त्रयं च्यवन्ते न महात्मवर्त्मनः॥ ७४

अथोपभोगं कलुषान्तरात्मना
प्रबुध्यसे चेत् पुरुषार्थमुत्तमम्।
ततो निवृत्तव्यसनोद्यतात्मवान्
सतामवाच्यं विषयं समाश्रयेः॥ ७५

द्विषां यदुच्चैर्जनयेत् कुतूहलं
मुखप्रसादं सुहृदां विलोपयेत्।
त्रपां विदध्यात्महतीमथात्मन—
स्तरन्ति धीरा न तदार्य्यगर्ह्यितम्॥ ७६

वहन्नहो ग्लानिपरम्परामसौ
मनस्युदारामवधीरितक्रमः।
तुषानलैर्दग्धइवान्तरात्मना
सुखी कथं स्यादपचेतनेतरः॥ ७७

मिथोऽनुतापैः परिहीनमानसो-
विलज्जितो लोकमुखावलोकने।
तथापि मन्दः किल निन्दितं चर-
न्नहो यथाऽऽत्मानमवैति निर्वृतम्॥ ७८

स्खलन्नजस्रं नयतो महीपतिः
परःसहस्रव्यवसायमाश्रितः।
न पूर्व्वलक्ष्मीमपि रक्षितुं क्षमः
कथं प्रवर्द्धेत ततोऽतिलालसः॥ ७९

श्रियं विलुम्पेत् परलोकसम्पदा
वपुर्यशोभिः क्षिणुयादसंशयम्।
जनापवादैर्विपदं समानयेन्
महीपतीनामनयः सुदारुणः॥ ८०

तत्तात, प्रकृतिमितो निजां प्रपन्नः
स्वन्तावच्चरितमनुस्मरातिमक्रम्।
गाम्भीर्य्यं परिहरतोऽपि चन्द्रपादै-
रम्भोधेः सलिलभरो न चातिवेलः॥ ८१

इत्येवं वदति मुनौ तथेति राजा
जग्राह प्रसृतमना वचस्तदीयम्।
अभ्यर्णे खलु विदुषामलोकगम्यं
निर्व्वेदद्रुतमिव बालिशस्य चेतः॥ ८२

अङ्गज्योतिर्ज्व्वलितमसकृद्व्योम कुर्व्वन्महौजा-
धाम प्राज्यं मुनिरथ ययौ कामचारः क्षणेन।
प्रायः सन्तः परपरिचयं कारणात् संश्रयन्ते
वृत्ते तस्मिन् क इव चतुरस्तत्र तिष्ठेद्वृथैव॥ ८३

मार्गो रजःपरिचितः क्षणमम्बुसिक्तो—
भूयोऽपि पांशुलइव प्रविलीनतोयः।
दीप्ताग्नितप्ततरधातुरतिद्रुतोऽपि
यातः पुनः कठिनतामिव तद्वियोगात्॥ ८४

दावाग्निदग्धविटपीव जलाभिषिक्तो—
भूयः स्वकोटरगतज्वलनावलीढः।
तस्यानुशासनवशात् क्षणमात्रसौम्यो—
राजपुरेव स जगाम निजामवस्थाम्॥ ८५
युग्मकम्।

इति चन्द्रवंशे महाकाव्ये सनत्कुमारानुशासनोनाम
चतुर्थः सर्गः॥ ०॥

---

## पञ्चमः सर्गः ।

तस्य लोकपरिभावपङ्किलं
लौल्यमाशु पुनरप्यवर्द्धत ।
कोऽपि दैवहतमप्युपक्रमै-
र्विक्रमैश्च परिरक्षितुं क्षमः ॥ १

तं प्रतीपयितुमन्यपार्थिवा-
वर्त्तमानमपि गर्हिते पथि ।
न प्रशीकुरतिशक्रविक्रमं
घोरदैवमचिरादलङ्घयत् ॥ २

अप्यनिष्टकरमिष्टपादपं
रक्षितोपवनतोऽधिकारवान् ।
उद्विपाट्य किल तत्पदेऽपरं
रोपयत्ययमसौ विधेः क्रमः ॥ ३

लोकवृत्तमतिवर्त्तिनोऽभव-
द्दैवहएव मुनिशापभस्मसात् ।
ब्रह्मचर्ययजनावनार्ज्जितं
कर्म्म तस्य न तु धर्म्मरक्षितम् ॥ ४

अप्यलोकसुलभोरुविक्रमो—
दीक्षितः क्रतुविधावनन्तरम् ।
दुर्म्मदात् स खलु किल्विषोत्सुको-
नाव्यशोचिमनुजैर्दिवं गतः ॥ ५

तैस्तथापि परतः पुरस्कृते
कीर्त्तितः स धुरि कीर्त्तिशालिनाम् ।
तस्य खल्वतिशयोऽप्यतिक्रमः
स्वल्पएव गुणसंघतोऽभवत् ॥ ६

स्वर्गतस्य गुणगौरवं यथा
स्मर्य्यते न च तथा व्यतिक्रमः ।
शान्तितिग्ममहसः प्रकीर्त्यते
ध्वान्तभेदपटुता न तीक्ष्णता ॥ ७

आयुरस्य तनयोऽथ मेदिनी—
मन्वभुङ्क्त भुजवीर्य्यनिर्जिताम् ।
तत्र राज्ञि जनता यथोचितं
पूर्व्ववत् स्वपदमभ्यपद्यत ॥ ८

सत्त्ववत्यनयशून्यपार्थिवे
भास्करे समुदिते यथा पुनः ।
लोकवादविधिवाददेशिता
प्रादुरास सकलैव सत्क्रिया ॥ ९

गाढतप्तजनतामतिक्रमैः
स्वर्गतस्य पितुरुत्क्रमस्य सः ।
अम्बुवाह इव शस्यसम्पदं
दुर्गतैकविकलामनन्दयत् ॥ १०

पूर्व्वदोषपरुषां प्रजावलीं
सोऽनयत् सरसतां मधुर्यथा ।
शैशिरैः शिशिरविन्दुवर्षणै-
र्म्लानगुल्मतरुवल्लरीं भुवम् ॥ ११

तेजसैव रिपुमण्डलं वशी
ध्वान्तराशिमिव हव्यवाहनः ।
नाजयन्न करवालवल्लरी
धूमराजिरिव तस्य वीतये ॥ १२

बद्धमूलबलयोऽविकत्थनः
सारवानतितरां समुन्नतः ।
सोऽभवत् परबलेऽप्यचञ्चलः
शैलराजइव वातरंहसि ॥ १३

धर्म्मतः स परिपाल्य मेदिनीं
लोकमात्मसुकृतैरुपार्जितम् ।
भोक्तुमाप विबुधालयं कृती
लोभयन्नतितरां सुरस्त्रियः ॥ १४

द्यां गते पितरि शत्रुमर्द्दनो-
मित्रवर्गपरिभोगवर्द्धनः ।
सैंहिकेयतनयासमुद्भव-
स्तत्सुतोऽथ नहुषः शशास गाम् ॥ १५

सोऽधिकारमधिगम्य पैतृकम्
अतशीत परिरक्षणैर्गुरुम् ।
पूर्व्वमेव नरलोकदुर्लभैः
स्वैर्गुणैरलघुविक्रमैस्तथा ॥ १६

सोऽवजित्य निखिलान् महीपतीन्
घोरबाहुतरसा तरस्विनः ।
यक्षपितुरगराक्षसादिकान्
शासनं स्वमखिलानकारयत् ॥ १७

वर्णजातमथ चाश्रमव्रजं
श्रौतमार्गनयनादपश्रमः।
शङ्करोऽप्यतितरामसङ्करं
स्वस्वधर्मसुभगं चकार सः॥ १८

दस्युसंघमभिभूय भूपति—
र्व्विक्रमैः करमृणोनदापयत्।
पृष्ठतश्च पशुवत् स तानमून्
बाहुवीर्य्यविजितानवाहयत्॥ १९

वर्षणैस्तमखिलेश्वरं वृषा
प्रार्थनीयकिरणैर्गभस्तिमान्।
चन्द्रमाश्च कमनीयरश्मिभिः
श्लाघ्यवीर्य्ययशसं सिषेविरे॥ २०

धार्म्मिकं न धनिनश्च दुर्म्मदाः
कामिनीं न कुलजां बलाद्दिटाः।
दुर्व्वलं न बलिनो बबाधिरे
तत्पदे न बलिनं विकत्थनाः॥ २१

राज्ञि रक्षति न कोऽपि धार्म्मिके
निर्धनो जनपदेष्वदृश्यत।
भूपतेरनयदोषसम्भवं
सत्यमाहुरशिवं प्रजास्वपि॥ २२

आत्मजां पितृगणस्य सत्वया—
नर्थतोऽपि विरजां रजोऽतिगः।
स त्रिलोकमहिलाकुलव्रपां
स्त्रीचकार सहधर्मचारिणीम्॥ २३

दीक्षितः स हविषा हविर्भुजं
देववृन्दमथ सन्ततावरैः।
दक्षिणाभिरपि ऋत्विजोऽपरा-
नर्थिनश्च ददमैरतर्पयत् ॥ २४

तस्य नाम महिषी महाशयान्
शुद्धवृत्ततनयानजीजनत्।
श्रौतमार्गपरिशीलिता मतिः
प्रार्थितानिव शुभानुपक्रमान् ॥ २५

क्वापि व्यसननिर्जिते हरौ
देवसिद्धऋषिभिः किलार्थितः।
मेदिनीमिव दिवं स लीलया
संबुभोज भुजवीर्यदुर्जयः ॥ २६

स्यन्दनेन हरिवर्णवाजिना
वाजिना च जलराशिजन्मना।
दन्तिना च स नितान्तपाण्डुना
सञ्चचाल मरुतामथाध्वनि ॥ २७

वासवस्य शयने समुज्ज्वले
वैजयन्तनिलयान्तरे नृपः।
संविवेश सुरराजचामरै-
र्वीज्यमानकरणः सशिञ्जितम् ॥ २८

क्लृप्तकल्पतरुपल्लवास्तरे
स्वर्णदीपुलिनसीम्नि सङ्गतः।
अङ्गहारसुभगं सुराङ्गना-
लास्यमाशु मुमुदे विलोक्य सः ॥ २९

पारिजाततरुवारितातपे
नन्दने तमरविन्दलोचनाः ।
लोभयन्ति ललनाः स्म नर्त्तनै-
र्दैशिकैस्त्रिदशपं धृतस्रजः ॥ ३०

अञ्जलिव्यथितहस्तपल्लवा-
देवतास्तमुपतस्थिरे विभुम् ।
वन्द्यमानमहिमानमादरा-
त्तुष्टुवुश्च सुरवन्दिनः सदा ॥ ३१

वारिवाहगजराजवाहनं
वर्त्तमानमथ देववर्त्मनि ।
तं किलाप्सरसएत्य सादरं
वन्दनीयचरितं ववन्दिरे ॥ ३२

आविवेश तमथो विभूतिजो-
दुर्म्मदो यमवतामपश्चिमम् ।
दुर्लभः खलु तथाविधोजनो-
योमनागपि धनैर्न्न हार्य्यते ॥ ३३

श्रीमदो हि विषमो मदान्तरात्
येन नाम सहसा गुणावली ।
उज्ज्वलाऽपि पुरुषस्य लीयते
दीपराजिरिव वातरंहसा ॥ ३४

अल्पका यदमितं विकुर्व्वते
वस्तुभिः कइव तत्र विस्मयः ।
चालयन्ति विषयाः प्रलोभना:
सत्ववन्तमपि सत्ववत्पथात् ॥ ३५

एकवेणिमथ जातु सोऽभिकः
धूसरालकमिलन्मुखच्छविम् ।
अश्रुजालविकलां व्यलोकयत्
श्वासशुष्यदधरां पुलोमजाम् ॥ ३६

वासवस्य भ्रमलक्ष्मणोयथा
क्षीणकान्तिमलिनामुपप्लवात् ।
कौमुदीमिव तथापि पश्यतां
कुर्वतीं सरसविस्मयं मनः ॥ ३७ युग्मकम् ।

प्रेक्ष्य मन्मथशराहतोऽभवत्
तां प्रभाविजितमन्मथप्रियाम् ।
सुन्दरी हि ललनाऽवलोकिता
लोलयत्यतितरां नृणां मनः ॥ ३८

तामदृष्टदयितप्रभाकराम्
म्लानवक्त्रकमलां मिथः सतीम् ।
सम्पिपासुरधरामृतं मदा—
दब्रवीन्नृपमधुव्रतो वचः ॥ ३९

वज्रमम्बुधरसुन्दरन्धनु—
र्वैजयन्तममरावतीन्तथा ।
एवमादिविषयं विपश्चितः
स्थानिधर्म्ममृषयः प्रचक्षते ॥ ४०

ऐन्द्रमिन्दुवदने, पदं मया
प्रार्थितेन दिविजैरुपप्लुतैः ।
कल्पविद्भिररिनिग्रहार्थिभिः
प्राज्यमाहुतरसाऽद्य भुज्यते ॥ ४१

तेजसैव निरुद्धोततेजसः
पूर्व्वदेवनिवहानहं किल ।
काममभ्यभवमिन्द्रतां मयि
प्राप्तवत्यपि कथा न संयतः ॥ ४२

तावदिन्द्रविषयैर्व्वनिन्दिते,
त्वं यदि प्रथममेव कीर्त्त्यसे ।
वञ्चितोऽस्मि नियतं शुचिस्मिते,
दैवतैरपरभोग्यवस्तुभिः ॥ ४३

वल्लरीव तरुतः प्रियादृते
शोभनाऽपि दयिते, न शोभसे ।
विद्युतः किमिव चारुताऽधिकं
यद्यसौ जलधरे न राजते ॥ ४४

हन्त सप्तभुवनैकसुन्दरं
माल्यमुल्लसितषट्पदावलि ।
नोपयुक्तमिव तिक्तमुज्ज्वलं
रूपमेतदपि ते निरर्थकम् ॥ ४५

तद्भजस्व दयिते, वृहद्भुजं
मामपीन्द्रमवले, त्वदाश्रवम् ।
एवमाशु खलु पूर्व्ववासवं
प्रस्मरिष्यसि रसादसंशयम् ॥ ४६

मानिनि, त्वमपि मुग्धमानसा
वञ्चिताऽसि नियतं विरिञ्चिना ।
यन्मयि प्रणययाचनाञ्जली
संदुनोषि वपुरब्जपेलवम् ॥ ४७

बाढ़मद्य भवती मया समं
सङ्गमय्य हृदयं रसालसम् ।
लप्स्यते फलमथान्ययोषितां
यन्न याति किल कल्पनापथम् ॥ ४८

एकएवनृपतिस्त्रिपिष्टपे
देववृन्दपरिवन्दितोदयः ।
सोऽहमिन्दुवदने, तवाधुना
नर्म्मशिष्यइति शर्म्म शाधि माम् ॥ ४९

यस्य लोकपरिभावितेजसः
स्मेरवक्त्रकथया न केवलम् ।
सुप्रसन्ननयनान्तवीक्षणैः
प्रार्थयन्ति दिविजाः कृतार्थताम् ॥ ५०

उन्नतेन शिरसाऽद्य पादयोः
सन्निपत्य पुरतः स याचते ।
प्रार्थ्यते हि दयिताऽनुकूलता
सा त्वयन्नसुलभोद्यता त्वयि ॥ ५१ युग्मकम् ।

काममद्य वशगा त्वमर्थये
त्वान्तथाप्यवनतः कृताञ्जलिः ।
मानिनी हि वनिता विमानिता
नैव जातु रतये मनस्विनाम् ॥ ५२

यः प्रसह्य पुरुषान्तरः स्त्रियं
लङ्घयत्यतितरां रिरंसया ।
एष वेद हृदयं न योषिता—
मात्मभोगपरिलालसो वृथा ॥ ५३

कोमलं कुलवधूजनस्य त—
न्मानसं प्रियजनातिलङ्घनात् ।
लीयते हुतभुजः समागमा-
दप्यनल्पसरसं हविर्यथा ॥ ५४

मानसं सरसमप्यनारतं
योषितामभिहतं प्रियोष्मणा ।
वारि वह्निपरिपक्कवन्मुहु—
स्तापयत्यरुणतप्तरेणुवत् ॥ ५५

स्नेहपूर्णहृदयं मृगीदृश—
स्तप्यमानमतिविप्रियाग्निना ।
तापयेदतितरां न केवलं
स्वं वपुर्दयितदेहमादहेत् ॥ ५६

एवमुज्झितनयेन मानिनी
प्रार्थिताऽनुचितमश्रुबिन्दुभिः ।
इन्दुकान्तिमुखमाविलेक्षणाऽऽ—
प्लावयन्नलिनवन्नशीतलैः ॥ ५७

लोचनं विकचमेचकोत्पलं
त्रासलोलहरिणीक्षणस्तथा ।
तन्न सोढुमशकत् परिप्लवं
स्वोपमानपदवीमधिष्ठितम् ॥ ५८

वारितोऽपि बहुशो यदाऽभिकोऽ—
वारयन्न दुरितोन्मुखं मनः ।
तं गुरोर्व्वचनतस्तदा शनै—
र्मत्तचित्तमबलेत्युवाच सा ॥ ५९

कामसूत्रमधिगम्य तीर्थत—
स्त्वं किलासि रतिधर्म्मकोविदः ।
योषितां हृदयविद्व काङ्क्षति
त्वां न का चतुर, वामलोचना ॥ ६०

यानमाशु ऋषिवाह्यमुज्ज्वलं
सोऽधिरुह्य यदि मां प्रपद्यसे ।
नूनमस्मि वशगा तवैष मे
प्रश्रयः स भवताऽनुमन्यताम् ॥ ६१

तन्निपीय वचनामृतं मितं
श्रोत्रपेयमतिमात्रसुन्दरम् ।
काममुत्कमनसा मृगीदृशां
कीर्त्तये प्रतिविशुश्रुवानसौ ॥ ६२

अस्तहेतुमपि सोऽन्वमंस्त तत्
मङ्क्षमाय हृदयङ्गमं लघुः ।
कामिनामपरकामिनीजने
सा स्पृहा न परिमृश्यते यया ॥ ६३

सन्निपात्य स ऋषीनपक्रमः
सन्निपातविकृतिर्यथाऽहितान् ।
आदिदेश निजयानवाहने
मुग्धबुद्धिरिव कालचोदितः ॥ ६४

सत्वरं जिगमिषुः पुलोमजां
कालसर्पमिव कुम्भसम्भवम् ।
यानशीघ्रगतिमीप्सुरञ्जसा
पूर्व्वदेववदसौ पदाऽस्पृशत् ॥ ६५

तस्य घोरमपचारमीदृशं
नो ममर्ष सुतराममर्षण: ।
अप्यशीतकरपादलङ्घिता
तत्‌शिला ज्वलति का कथा नृणाम् ॥ ६६

क्रूरबुद्धिरसि मूढ़, दुर्मते,
मा चिरेण भव तद्विलेशयः ।
इत्यमर्षविवशो महान्नृषि—
स्तं शशाप मदमत्तमानसम् ॥ ६७

सोऽपतच्च सहसा दिवस्तला—
त्तत्‌क्षणोपनतभोगिविग्रहः ।
कीर्त्तिलोपिमहदत्ययोमहान्
सद्य एव परिपच्यते सताम् ॥ ६८

पुण्यलक्ष्यमपि रक्षणायत-
न्नालमास फलदो व्यतिक्रमः ।
बाधके हि बलवत्युपस्थिते
साधकस्य शतमप्यनर्थकम् ॥ ६९

आस्थिते खलु मणौ विरोधिनि
प्रस्फुरन्नपि च हव्यवाहनः ।
लग्नकक्षमपि दग्धुमक्षमः
प्राप्नोति हि घनो दिवाकरम् ॥ ७०

अभजत सुतमस्य राज्यलक्ष्मीः
क्षितिपतिमौलिसमर्च्चपादपद्मम् ।
गुणगणविवशेव तस्य यूनो—
र्नहि पुरुषे निवसत्यसौ प्रमत्ते ॥ ७१

श्रुतसमधिगमादुदारचेता—
स्त्रिदिवगतेऽपि पदे निवृत्तलौल्यः ।
यतिरिति तनयः क्षितावजातो—
विमलमतिर्यतिधर्म्ममाश्रितोऽभूत् ॥ ७२

तदखिलभुवनान्तरालकीर्त्तिः
कविरिव नीतिविदामुदारचेताः ।
विनयपरवशो ययातिरासी—
त्तदनुजनिर्युवतोऽग्रजोऽपि राजा ॥ ७३

इति चन्द्रवंशे महाकाव्ये नहुषवर्णनो नाम
पञ्चमः सर्गः ॥ ० ॥

———

## षष्ठः सर्गः ।

स प्राप्य राज्यमधिराजपदाभिधेयः
प्रह्लादयन् सकललोकमनः शशीव ।
शास्ति स्म शासनवशो रजसा विमुक्तो—
मुक्ताफलामलयशःस्रजमाहरिष्यन् ॥ १

प्रक्षालनाय नयनाविलकज्जलाना-
मस्राम्भसां पृथुकणैः प्रसृतये स्तनानाम् ।
तद्बाहुवीर्यमनयं भुवमुद्धरिष्य-
दाचार्यकं समकरोद्रिपुसुन्दरीणाम् ॥ २

यज्वा स एव यजमानगुणव्रजोऽभू—
द्राजा प्रजानिकररञ्जनतः स एव ।
मित्रं सएव विपदन्तविधानदक्षः
साक्षादमित्र इह निन्दितवृत्तभाजाम् ॥ ३

आखण्डलः स्वभुजदण्डविनिर्जितारिं
क्ष्मापालमौलिमणिरञ्जितपादपीठम् ।
तं प्रत्युदारयशसं स्वयमात्मवन्तम्
अतन्त्रलोलहृदयः सदयोबभूव ॥ ४

तद्दिव्यकाञ्चनसुदञ्चितकिङ्किणीक-
मुत्तुङ्गमुत्तमतुरङ्गमसुत्पताकम् ।
तस्मै स भास्वरमनोऽतिगवेगवन्तं
कान्तं रथं नृपतये मघवा दिदेश ॥ ५

तेन स्फुरद्रुचिरसौ स्फुरता रथेन
खे नेव भानुरनिशं विचरन्महौजाः ।
दुर्द्धर्षशास समरेषु नृपः परेषां
कोलद्युयेदनलगोज्ज्वललोहपिण्डम् ॥ ६

अल्पेतरद्युतिरनल्पबलः स राजा
स्वल्पेन तेन दिवसेन भुवं व्यजेष्ट ।
ज्योतिर्घनेन सहसा प्रसरेद्दिगन्तं
वह्निः क्षणात् सपवनो भुवनं दहेच्च ॥ ७

राजा जगाम गहनं सुरभावभीरु-
रल्पानुयायिपरिमेयपुरःसरोऽसौ ।
आकर्णकृष्टनिशितोरुशिलीमुखैः स्वैः
प्राणान् करानिव हरन्मृगयूथपानाम् ॥ ८

एकः स जातु गजराजपदानुगः सन्
भूयः पिपासुरवशः किरणैः खरांशोः ।
पद्माकरान्वितमनुव्रतकुञ्जपुञ्जं
पानीयमीप्सुरगमत् कमपि प्रदेशम् ॥ ९

व्यक्तातिमुक्तपरिसक्तचूतसंघं
भृङ्गव्रजोत्पतनसुन्दरसिन्धुवारम् ।
रक्तै रशोकनिकरैर्मकरध्वजस्य
राशीकृतै रुधिरदिग्धशरैरिवाप्तम् ॥ १०

उच्चावचैर्विकसितैः प्रसवैस्तरूणा-
मल्पेतराल्पतरकान्तिमयैः समन्तात् ।
व्योम ग्रहर्क्षनिकरैरिव रोचमानैः
सान्द्रान्तरालरमणीयमुदारगन्धम् ॥ ११

पुष्पेषु कार्मुकचयेष्वथ पुष्पकेतोः
सम्पर्कमग्र्यमभिलभ्य शिलीमुखश्रीः।
चक्रे ध्वनिं यममुना मनुजान्तरेषु
लब्धावकाशकुसुमेषुनिदेशवृन्दम्॥ १२

चूतांकुरप्रणयिभिर्मधुमत्तचित्तैः
पुंस्कोकिलैरविरलं मधुरञ्च किञ्चित्।
कूजद्भिराशु परिमुग्धविलासिलोकं
भावार्द्रवागधिकरोत्यपरस्य चित्तम्॥ १३

छायातरुव्रजनिवारितवासरोष्णं
मन्देन चन्दनवनोद्भवमारुतेन।
आमोदितं सुरभिमासनिदेशहेतोः
शङ्के परागपरिरञ्जितशाखिपुञ्जम्॥ १४ कुलकम्।

तत्र क्षणं क्षितिपतिः सरलद्रुमाणां
निश्वासलेशवहगन्धवहप्रतीतः।
कादम्बकेलिलुलिताम्बु सरः प्रपश्य-
न्नम्भोजरेणुपरिपिञ्जरवारि तस्थौ॥ १५

विद्युल्लतोपमलसद्युति रत्नभाभि-
राकल्पचित्रमिव हृष्टचापखण्डम्।
आलोकयन्नलनिसूदनतुल्यकान्तः
कन्याकुलं तुहिनकान्तिकुलप्रदीपः॥ १६

स्थूलेन्द्रनीलनवशाड्वलराजिरम्ये
गुल्मादिसंकुलतरे कलधौतकल्पम्।
मेघावृतस्य नभसो निभृतप्रदेशे
तारासहस्रमिव लब्धतरप्रकाशम्॥ १७

वल्लिव्रजं किसलयावलिशोभमानं
पूर्णेन्दुबिम्बनिचयं मृदुवीचिभिन्नम्।
लोलेक्षणच्छलमधुव्रतपातरम्यं
ताम्रारविन्दमथवा मकरन्दगन्धि॥ १८

एकान्ततः सवयसां समवायतो वा
पुंसां प्रवेशकलुषेतरदेशतो वा।
विस्रम्भभाषितशतं श्रुतिमात्रपेयम्
अन्योन्यमेत्य विदधन्मधुराधराश्च॥ १९ विशेषः

काचिद्विशेषमधुपानवशात् प्रमत्ता
स्वां प्रेयसीमपि रसात् परिपाययन्ती।
लीलाद्विरेफपरिलीढसहस्रपत्रं
संभावयन्त्यतितरां जहसेऽपराभिः॥ २०

अन्या कलाचरसुदञ्चितपञ्चमेन
गीतेन कोकिलवधूरवधूतचित्ताः।
शश्वत् स्वरानुकरणे विफलोद्यमत्वात्
बाला चकार खलु किन्नरचारुकण्ठी॥ २१

किं चण्डि, दण्डमतिमात्रमसि प्रदातुं
स्निग्धे जने व्यवसिताऽसि तवेतुरदीर्घ्यं।
मुग्धा सखीं प्रणयकोपवशाद्विलोला
निश्चित्य पुष्पितलतामपराऽऽलिलिङ्ग॥ २२

स्निग्धप्रसन्नविमलाभिरथाबलास्ता-
स्तं दृष्टिभिर्मृगदृशश्चक्षुर्युवानम्।
को नाम दृप्तकरणो हरिणेक्षणानां
लीलाविलोकनमतिक्रमितुं समर्थः॥ २३

इन्दीव कान्तविलसत्कमलावलीनां
भूपः सकाशमुपगम्य विलासिनीनाम्।
तस्थौ चणं स्थितिमतां प्रथमो विलुप्त-
धैर्यान्तरस्तदवलोकननिश्चलाङ्गः॥ २४

अन्यासु पुष्पितलतास्विव कल्पवल्ली
रम्यासु लोकललनास्विव देवकन्ये।
सोऽपश्यदीप्सिततमे सविशेषकान्ते
द्वे तत्र चन्द्रमकले इव तारकासु॥ २५

एकामतीव कमनीयतमां महीपः
पप्रच्छ का त्वमरविन्दमुखि, त्वकान्त्या।
रेखा तुषारकिरणस्य यथा धरित्रीं
साक्षात् प्रकाशयसि गाढतमोवलीढाम्॥ २६

पश्य प्रभाभिरिव धौततरा तवेयं
श्यामा वनावलिरतीवतरां चकास्ति।
गङ्गातरङ्गकलितेव कलिन्दकन्या
वैदूर्यराजिरिव रत्नमरीचिभिन्ना॥ २७

देवापगेव लतिकेव महौषधीनां
स्निग्धप्रसादविमलोत्तरचारुकान्तिः।
आध्यं समुज्ज्वलवपुर्गुणवृन्दमुच्चै-
र्बाला विलोचनरुचा खलु वर्धयन्ती॥ २८

स्निग्धारुणच्छुरितचारु नखप्रभाभि-
रापूर्यमाणविवराङ्गुलि पादपद्मम्।
शितान्तरच्च करभोरु, तवादरेण
संवाहयत्यनुचितं ननितेव केयम्?॥ २९ युग्मकम्।

तस्मे कुतूहलमिदं यदि न क्रमः स्या–
न्नो वा रहस्यमपनेतुमथार्हसि त्वम्।
एषा निसर्गमधुराकृतिरेव तावद्–
दामित्वगे,मुखरतामकरोन्मदीयाम्॥ ३०

साऽपि प्रगल्भवचना तमुवाच साधो,
सञ्जीवनीयमतिमुक्तलतेव चूतम्।
अध्याश्रिता विबुधसद्गुरणैकनेता
यो नीतिमार्गमतिसृत्यगुणस्ततान॥ ३१

अहन्दमेव पदमेति सदद्वितीयं
यो लोकबन्धुरभिवर्षति वारिवृन्दम्।
पुष्णाति चौषधिचयं करुणार्द्रचेताः
सन्तः परोपकृतये प्रणयानपेक्षाः॥ ३२

यस्येन्द्रमौलिमणिरश्मिविचुम्बिताङ्घ्रिः
साक्षात् क्षमासुखगुणावलिवासभूमिः।
गङ्गा यथा हिमवतोऽस्मि तथाशुभाङ्गी
काव्यस्य तस्य तनया किल देवयानी॥ ३३ विशेषकं

लोकोत्तरोऽसि चतुरः खलु लोकवृत्ते
सम्यग्वितर्ककुशलः कृतधीरमुष्याम्।
प्रायेण तर्कनिपुणैरनुमीयमाने
दुर्लक्ष्यकेऽपि विषये सुलभोऽविवादः॥ ३४

तातस्य शिष्यतनया वृषपर्वपुत्री
दासी विशेषदयिता च सखी ममैषा।
नातेऽति मामखिलकृत्यविधौ विधिज्ञा
छायेव बिम्बमवलम्ब्य धियं विशुद्धाम्॥ ३५

तीरस्थितानि वसनानि निमज्जितानाम्-
मस्माकमत्र विपिने पवनच्छलेन ।
संघट्टितानि किल वासवदुर्व्विलासै-
र्व्वासो मदीयमवशेयमथाचकर्ष ॥ ३६

शिष्यात्मजाऽसि जनकस्य कथं मदीयं
वासः शुभे, परिदधासि न युक्तमेतत् ।
इत्युक्तवत्यनयरूक्षतराक्षिपातं
शर्म्मिष्ठयाऽस्मि परिनिष्ठुरमेवमुक्ता ॥ ३७

स्तुत्यस्य नाम तनयाऽस्मि नराधिपस्य
त्वन्तु प्रमूढ़हृदये, स्तुतिपाठकस्य ।
मा गर्व्वमुद्वह मया सह दुर्व्विनीते,
स्वच्छन्दता न खलु निम्नजनेऽस्ति काचित् ॥ ३८

चिक्षेप मामियमुपेक्षितशिष्टवृत्तिः
कूपे नितान्तविषमे परिवेपमानाम् ।
उच्छृङ्खला हि बललेशभवावलेपाः
क्षुद्रा गुरूनपि परानवमानयन्ति ॥ ३९

तं कूपमेत्य किल कोऽपि जलाभिलाषी
मत्कातरध्वनिवशात् करुणामगच्छत् ।
आक्रन्दितं प्रविलसद्व्यसनाकुलानां
चेतो न चेदधिकरोत्यफलः प्रबोधः ॥ ४०

विश्वम्भरामिव हरिः प्रलयोर्म्मिलीनां
पातालरन्ध्रत इव प्रगभीरकूपात् ।
मामुज्जहार कृपया स करावलम्बो
सद्यः फलत्यविफलः खलु सत्प्रसङ्गः ॥ ४१

उद्धृत्य मामवनिमध्यगतामिवैकां
रत्नावलीमतिकृपार्द्रमनाः स साधुः ।
अङ्काय निर्वृतिमगात् परमां भवन्ति
सन्तोऽनुगृह्य सुखिनो व्यसनोपतप्तम् ॥ ४२

आकृष्य मामतितरामसुरेन्द्रपुत्री
भूयोबभूव कलुषव्यथितान्तरात्मा ।
क्रोधानलव्यपगमे खलु मानवाना–
मन्तः स्फुरत्यलघुबाष्प इवानुतापः ॥ ४३

मन्योः कथञ्चिदुदयादवमत्य किञ्चि–
ल्लोकः सखीन् समवलुप्तविवेकशक्तिः ।
अङ्काय तद्व्यतिकरोपनतानुतापै–
र्निर्धूमपावकनिभैः परिदह्यतेऽन्तः ॥ ४४

तादृग्विनाननसुदग्रमसोढपूर्व्वं
सख्या विसोढमसमशक्य न मिथः सखीनाम् ।
प्रेम्णः किलातिकुटिलाथि विनैव हेतोः
किं कारणे स्फुरति रोषभरोऽभिमानः ॥ ४५

भूयस्तथा न तु परस्य यथाऽल्पमात्रं
स्निग्धस्य रौक्ष्यमविसह्यमुदाहरन्ति ।
नातिप्रचण्डकिरणोऽपि तथा निदाघे
रेणुर्यथा व्यथयते ततएव तप्तः ॥ ४६

साक्षात् ज्वलन्तमपि हव्यवहं कदाचि–
ल्लोकः क्षमेत ननु धारयितुं कराभ्याम् ।
तैलन्तु दाहमधिकं विदधाति तस्य
ज्वालाभिरभ्युपचितोष्णमथ क्षणेन ॥ ४७

तस्मां विरक्तहृदयामनुनेतुकामा
सान्द्राकुलाऽभवदियं दनुजेन्द्रपुत्री ।
तातो हि नाम सततं व्यसनातिपाताद्—
रक्षत्यचिन्त्यमहिमाऽखिलपूर्व्वदेवान् ॥ ४८

प्लुष्टं यथा हिमऋतुव्यतिषङ्गमात्रात्
पङ्केरुहव्रजमतीव वसन्तकालः ।
तीव्राभिषङ्गविलसत्प्रलयावलुप्तं
लोकं यथा विधिरुपेक्षितवाञ्छकतरः ॥ ४९

दावं विशालदवहव्यवहप्रसङ्गै—
र्मेघो यथाऽमृतरसैर्लपितं समन्तात् ।
घोरज्वलत्त्रिदशशस्त्रविलुप्तसंज्ञं
सञ्जीवयत्यसुरराजकुलं पिता मे ॥ ५० युग्मकम् ।

इत्युव्रतं स्वमपहाय महानुभावा
मद्दास्यमाशु चकमे किल मे वयस्या ।
लोकोपकारविषये परिकल्पते चेम्
मेघाम्बुवत् पतनमप्यभिनन्दनीयम् ॥ ५१

साक्षादनङ्ग इव सुन्दरमङ्गमास्मो—
देवाङ्गनाऽभिलषणीयविशेषकान्तिः ।
अस्मद्विलोचनसमर्जितपुण्यपुञ्जै-
र्नूनं वनाम्सुभूमितोललनामनस्तः ॥ ५२

स्फूर्ज्जद्विशालभुजगेन्द्रभुजो महौजा-
ब्राह्मीं गिरं वदसि मेघगभीरकण्ठः ।
रूपेण वेशनिकरेण च भासि साधो,
राजेव कस्य तनयोऽसि कुतोऽसि कस्त्वम् ॥ ५३

एक: शरासनकरो ननु कस्य हेतो:
प्राप्तोऽसि वा मम विलासवनं विलासी ।
आचक्ष्व पङ्कजदलाक्ष, विलासिनीषु
प्रीतोऽसि चेदिति मुदैनमथान्वयुङ्क्त ॥ ५४

तामब्रवीन्नरपति: शृणु चेत्तवास्ति
कौतूहलं सुकलकण्ठि, ययातिरस्मि ।
राजा सुधाकिरणवंशकर: पृथिव्यां
लोकद्वयैकनृपतेर्नहुषस्य सूनु: ॥ ५५

पूर्व्वाश्रमं समधिगम्य समस्तवेदान्
प्राप्तोऽहमाप्तवचस: सरहस्यकल्पान्
गुर्व्वाज्ञया जलधिमेखलया निबद्धा--
मुर्व्वीं विशालनयने, ननु पालयामि ॥ ५६

अभ्यागमन्तुरगनागशतैर्वनान्त—
माखण्डलोपनतजैत्ररथाधिरूढ: ।
सौभाग्यतस्तु गजराजपदानुसारी
प्राप्तो विलासवनमद्य वनाङ्गनत्या: ॥ ५७

बालप्रवालनलिनेन्दुमनोरमाङ्गी-
मालाप्य यन्मुहुरखेदयमात्मना त्वाम् ।
तत् क्षम्यतां सितकरप्रतियोगिवक्त्रे,ऽ-
नुज्ञायताञ्च ननु सम्प्रति साधयामि ॥ ५८

सख्याऽनया सममसौ वशगा तवाहं
दासीसहस्रसहिता च रसार्द्रचेता: ।
भर्त्ता सखा च भव मे न खलु प्रपन्नां
बालामुपेक्षितुमहो बलिन: क्षमन्ते ॥ ५९

इत्युदितक्रमं मधुरमक्षरमालपन्तीं
प्रत्यब्रवीदवनिपालपतिर्मृगाक्षीम् ।
क्षत्रान्वयस्त्वहमृषिपुत्रि, न तेऽहमर्ह—
स्त्वय्या इवापकलुषोऽपि जघन्यवर्णः ॥ ६०

तल्लोकनिन्द्यमरविन्दमुखि, प्ररूढ़ं
भावं कृशोदरि, निजं त्यजय प्रसीद ।
श्लाघ्यः सदा दिविषदामपि लोभनीयो
लाभो न मद्विधजनैः सुलभो भवत्याः ॥ ६१

भूयोऽप्युवाच नरपालमरालकेशी
राजन्, कृशानुतनयेन्दुसुतान्वयस्त्वम् ।
न क्षत्रियोऽसि परमर्षिकुलप्रसूतो—
मत्पाणिपीड़नविधौ कथमस्यनर्हः ॥ ६२

किं वा विचारयसि, मां त्वयि साभिलाषां
नूनं त्वमप्यभिलषस्यनुरक्तएव ।
अन्योन्यरक्तमनसोः प्रणयो हि यूनोः
स्यादन्वितो निकषकाञ्चनरेखयोर्व्वा ॥ ६३

राजन्, स्मरस्यवटमध्यगतां दयालु—
स्तीव्राभिषङ्गविकलां मृगयाविलासो ।
रोमाञ्चकञ्चुकतनुः किल वेपमानां
मामुद्धरिर्थ्या मदीयकरावलम्बी ॥ ६४

दैवेन मन्मथमनोरथवर्त्तिनाऽभू—
द्वृत्तः स नौ ननु करग्रहएव पूर्व्वम् ।
भूयोऽन्तरं तदिह नास्ति विचारणायाः
निष्ठां गते न खलु कर्म्मणि सा विधेया ॥ ६५

कोवाऽपरस्तदुपयुक्तमिमं करं मे
लोकः स्पृशेदपरलोकगतिक्रमायाः ।
दिव्यौषधिर्हिमकरोद्यतपक्षपातात्
धाम्ना ज्वलन्तमपि कौमुति नांशुमन्तम् ॥ ६६

बाले, परेण गुरुणा परवत्यसि त्वं
मा साहसं कुरु चकोरमनोहराक्षि, ।
एवं ब्रुवाणमवनीपतिमब्रवीत् सा
शङ्का व्यपैतु ननु दास्यति तातएव ॥ ६७

विज्ञापितोदनुजराजगुरुस्तयैवं
शापात् कचस्य नरनाथकृताभिलाषाम् ।
तामात्मजां समधिगम्य समाधियोगाद्—
राजानमेत्य निजगाद कृतप्रसादः ॥ ६८

एनां मनोभवनिदेशवशात् सकामां
त्वय्यप्रमेयगुणलङ्घितराजसंघे ।
प्रत्तां मयैव विधिनाऽधिकसङ्गताङ्गीं
पाणौ गृहाण गृहधर्मविधित्सया त्वम् ॥ ६९

सेयं तवास्तु महिषी च सखी च राज—
न्नाखण्डलस्य विधुखण्डलघुः शचीव ।
भूयोऽनया सुरवधूत्तमकान्तिमत्या
स्वर्लोकदुर्लभमितः सुखमाप्स्यसि त्वम् ॥ ७०

एषा च वक्त्रविजितेन्दुसहस्रपत्रा
दासीसहस्रसहिता दनुजेन्द्रपुत्री ।
कामन्त्वैव भविता शयने तथापि
नैनां स्पृशेरिति सदा भव सावधानः ॥ ७१

गृह्णन् ममैव वचनामृप, मत्प्रसूतां
पत्नीमितो न खलु मत्करशङ्कितः स्याः ।
पश्चाच्च मङ्गलमहं तपसः प्रभावा—
दङ्गाय सर्व्वमवनीश, शमं नयिष्ये ॥ ७२

अथ दनुजगुरूणामाश्रवः श्रीनिकेतः
श्रियमिव मनुजेन्द्रश्चन्द्रवद्वक्त्रलक्ष्मीम् ।
विधिवदवनिपालः पाणिमूलेऽग्रहीत्तां
सुरवनइव जातां वल्लरीं पारिजातः ॥ ७३

उपवनइव रम्ये तां प्रवालाधरोष्ठीं
व्रततिमिव महीपः सन्निवेश्यावरोधे ।
स्तवकवदभिरामश्रीस्तनां ताम्रहस्तां
मुदमगमदनल्पां भृङ्गवद्वां कृशाङ्गीम् ॥ ७४

शर्म्मिष्ठामवनिपतिः प्रियानुवर्त्ती
प्रस्थाप्य स्थितिविदुषामथाग्रगामी ।
तत्पादाहतिविकसद्विशोकवृन्दे
वन्दीवत् कुसुमवने परं वभार ॥ ७५

इति चन्द्रवंशे महाकाव्ये देवयानीपरिणयो नाम
षष्ठः सर्गः ॥

———

## सप्तमसर्गः ।

अथादितिः कश्यपतो महर्षे-
रुपेन्द्रसंक्रन्दनवत् सुतौ द्वौ ।
काले ययातेः किल देवयानी
यदुं तथा तुर्व्वसुमप्यसूत ॥ १

आमोदमादाय वनस्थलीना-
मुपस्थिते चन्दनगन्धवाते ।
पुंस्कोकिले कूजति पञ्चमाढ्यं
गुञ्जद्द्विरेफे च निकुञ्जपुञ्जे ॥ २

बालारुणप्रख्यकरप्रवाला
तुङ्गस्तनाग्रस्तवका लतेव ।
नवं वयः प्राप्य रराज बाला
स्त्रीधर्म्मिणी दानवराजकन्या ॥ ३ युग्मकम् ।

कामस्य साक्षादिव षष्ठमस्त्रं
विलोकयन्ती विपिनान्तलक्ष्मीम् ।
इतस्ततस्तत्र चचार बाला
प्रसूनमाला वनदेवतेव ॥ ४

तावत् निषिद्धानुचरो विलासी
वनान्तलक्ष्मीमवलोकयिष्यन् ।
यदृच्छया तत्र जगाम राजा
वपुर्ब्बलाभ्यां त्रिजगज्जयी यः ॥ ५

सख्या वसन्तेन समं वनान्ते
शरीरिणं काममिव स्फुरन्तम्।
तमादराम्मन्थरलोचनाभ्यां
पपौ मृगाक्षी नितरामतृप्ता ॥ ६

लीलान्तराऽभूद्धृदयस्य पूर्व्वं
नियन्तुमात्मानमथो न शेके।
प्रागेव सिन्धूर्म्मिरपास्तधैर्य्या
चन्द्रोदये किं पुनरुत्तरङ्गा ॥ ७

आत्मानमत्यन्तविलुप्तसंज्ञ-
मुपस्थितं लोकपतेः पुरस्तात्।
तदेकतानत्वमिव प्रपन्ना
न धीरनेत्रा सहसा बुबोध ॥ ८

निष्पन्दभावं गमिता मुहूर्त्त-
मस्पन्दितैः संवलितैर्नतैश्च।
विलोचनैर्ब्बालमृगाक्षिकल्पै-
रभाषमाणाऽपि तमाबभाषे ॥ ९

विलोचनं लोचनतो नृपस्य
भ्रूकुञ्चनेनाधिकलोभनीयम्।
चिरादिव ज्ञातसमागमं सा
व्यानम्रमानम्रमुखी जहार ॥ १०

अवाङ्मुखी भूतलमालिखन्ती
सरोजताम्राङ्घ्रिनखाग्रभागैः।
ह्रीसन्निवेशादवसन्नकण्ठी
कथञ्चिदाख्यन्मनसोऽभिलाषम् ॥ ११

रहस्यदोषां विहृतानुरागा-
मिन्दीवराक्षीमरविन्दनेत्रः ।
तामेकनारीं प्रति निर्व्यपेक्ष-
स्तदेकचित्तोऽपि जगाद भूपः ॥ १२

कुलेन शीलेन वपुर्गुणेन
लावण्यमय्या च विशेषकान्त्या ।
अनिन्दिता सुन्दरि, भामिनीना-
मवाङ्मुखत्वैकगुरुस्त्वमेका ॥ १३

श्लाघ्यं लसत्स्निग्धविलोचनाभ्यां
सुधाप्रतिद्वन्द्विकथं मुखन्ते ।
कथं मृगाङ्को नु जडोऽनुकुर्य्या-
ल्लीलाकटाक्षस्य सदा परोक्षः ॥ १४

गुणैरलं सुन्दरि, रूपमेतद्-
वशीकरोत्येव जनं क्षणेन ।
दूरादजिघ्रन्नपि चारुगन्धं
पर्य्युत्सुकस्तामरसेन लोकः ॥ १५

उपस्थितं रत्नमिवाप्रयत्नात्
को याचमानामविलुप्तबोधः ।
प्रत्यादिशेत् प्रार्थितदुर्लभां त्वां
न चेत् पराधीनरुचिर्मनुष्यः ॥ १६

त्वमेव जानासि पुरा सुरारेः
शुचिस्मिते, तेन पुरोक्षितेन ।
कृतप्रतिज्ञोऽस्मि कृतान्तनुन्नो-
नाकारयिष्ये शयने मम त्वाम् ॥ १७

यथस्युतानां पथि सन्निवेशं
विशाम्पतीनां करणीयमाहुः ।
सोऽहं कथं नाम निसर्गघोरे
पदं करिष्ये स्वयमेव मार्गे ॥ १८

समस्तभूतेषु नृपः प्रमाणं
कथं प्रतिज्ञां वितथां स कुर्य्यात् ।
विलङ्घयेच्चेत् समयं महीपः
परस्तदा कः परिपालयेत ॥ १९

अप्येकनिघ्नस्य जनस्य तावत्
स्वच्छन्दता नास्ति यदि स्वकृत्ये ।
यत्सत्यमुच्चैस्तरपारतन्त्र्यम्
कष्टप्रकारो मनुजेश्वरत्वम् ॥ २०

क्रूरैर्हतोऽहं पुरतः कृतान्ते–
र्न कामयन्तीमपि कामये त्वाम् ।
सा बद्धभावा मयि वञ्चिताऽसि
विरिञ्चिना चञ्चललोचने, त्वम् ॥ २१

ततो नरेन्द्रं दनुजेन्द्रपुत्री
विलोलमात्मन्यवलुप्तचित्ता ।
तप्यन्तमन्तः परितप्यमाना
चिराय लीलाचतुरा बभाषे ॥ २२

एकं व्रतं पालयतो विलोपो–
व्रतान्तरस्यापि भवेत्तवैवम् ।
धर्म्मोपचारेण तु चर्य्यते यो–
धर्म्मं प्रशंसन्ति न तं महान्तः ॥ २३

कोवा त्वयाऽर्थी न कृतः कृतार्थ—
स्त्रिलोकराज्येऽपि कृताभिलाषः।
तस्मा यशो लङ्घय दुर्लभं त—
न्मामर्थिनीमर्थवतीं विधेहि ॥ २४

या कामिनी कामयते च गम्या
रहस्युपारूढ़मनोरथार्त्ता।
पुंसः समर्थस्य निराक्रियाऽस्या—
दर्पात् परत्रेह च गर्हिता स्यात् ॥ २५

काव्यस्य कन्या दयिता सखी मे
पतिस्त्वमस्याः पृथुलोचनायाः।
पतिश्च सख्याश्च पतिः समौ द्वौ
समो विवाहोऽपि मतो मुनीनाम् ॥ २६

भूपाल, भार्य्यामधनां वदन्ति
तवास्मि तावन्महिषीभुजिष्या।
वश्यां विशेषात् परिभोगयोग्यां
मामर्थिनीं तामिव तद्भजस्व ॥ २७

शय्यासु मां नाह्वयसि क्षितीन्द्र,
त्वामाह्वयाम्येव तु याचमाना।
तदेहि मे त्वं विधिवद्विधिज्ञ,
पाणिं तव ग्राह्यमिमं गृहाण ॥ २८

तथेति गान्धर्व्वविधानतस्तां
जग्राह पाणौ मनुजाग्रगामी।
ततस्तु बालाऽधिगताऽस्युराशे—
रराज गङ्गेव तरङ्गहस्तम् ॥ २९

पुत्रानमुष्मात् शशिवंशकेतो-
र्नरेन्द्रचिह्नानसुरेन्द्रपुत्री ।
दृष्ट्वानुपूर्वान् जगतो विशेषान्
लेभे गुणान् त्रीनिव मूलहेतोः ॥ ३०

अथैकदाऽशोकवने चरन्ती
राज्ञा समं ज्ञातिसमृद्धिदीना ।
अल्पोन्नतान्देवकुमारकल्पान्
तान्देवयानी तनयान्ददर्श ॥ ३१

एते सुताः कस्य सकाकपक्षाः
महीक्षितां लक्षणलक्षिताङ्गाः ।
तेजोविशेषैकनिधानभूताः
स्फुरन्ति बालार्कवदुज्ज्वलाभाः ॥ ३२

धन्यस्य कस्याङ्कममी रजोभि-
रालिङ्गिताङ्गैरुपरञ्जयन्ति ।
कान्त्या च रूपेण च वर्चसा च
त्वामेव मन्ये नृप, संवदन्ति ॥ ३३

इति प्रगल्भं किल काव्यकन्या
मुहुर्ब्रुवाणा क्षितिपालवल्लभम् ।
न केवलं मन्युमलम्भयत् सा
स्वयञ्च दीना समतप्यतान्तः ॥ ३४

ततो हिमक्लिष्टमिवारविन्दं
म्लानप्रभं चारुमुखं वहन्ती ।
सन्तर्जयन्ती नृपतिं कटाक्षैः
किञ्चित् कुमारान् पुनरन्वयुङ्क्त ॥ ३५

ते पृष्टमात्राः शिशवः शशंसुः
प्रदेशिनीचालनया नृपालम् ।
दैत्यात्मजाञ्च प्रभवो कथञ्चित्
मन्युज्ज्वलन्त्यै किल देवयान्यै ॥ ३६

अङ्कं समारोढुमुदूढकामान्
शर्म्मिष्ठया कातरमीक्षितस्तान् ।
तस्याः समक्षं क्षितिपालमौलि—
र्दीनाननो नाद्रियते स्म बालान् ॥ ३७

व्यतिक्रमं सोढुमपारयन्ती
मूढेव किञ्चिद्गदितुञ्च बाला ।
बालातपोद्भिन्नसरोजवक्त्रा
मुहूर्त्तमेषा समदृश्यतान्तः ॥ ३८

यथा पुमांसो दयिताऽपचारं
न सोढुमत्यल्पमपि क्षमन्ते ।
तथैव पुंसामपि मानिनीना—
मसह्यएवान्यजनानुरागः ॥ ३९

अवाङ्मुखीं सम्भ्रमलोलदृष्टि—
स्त्रपाविशेषोदयविह्वलाङ्गीम् ।
प्रवेपमानामथ देवयानी
रुषा ज्वलन्ती किल तामपश्यत् ॥ ४०

तान्तर्जयामास विशालनेत्रा
नेत्रेण सा रोषकषायितेन ।
विद्युद्विलासेन पयोदमाला
तपात्यये निर्व्वपनामिवोर्व्वीम् ॥ ४१

तां म्लानपुष्पामिव चारुवल्लीं
पयोदराजी करकाभिरुच्चैः ।
जघान भूयो जघनप्रशस्तां
वाग्भिश्च दुःसह्यतराच्चराभिः ॥ ४२

सन्ध्येव तां मुद्रितनेत्रपद्मां
विधाय कोपारुणयैव दृष्ट्या ।
चक्रीकृतभ्रूलतया नृपालं
कोपादुपालब्धुमभूत्प्रवृत्ता ॥ ४३

पुनः पुनर्व्विस्फुरिताधरोष्ठी
चिराद्व्यवस्थाप्य गिरं कथञ्चित् ।
असम्प्रकारैरवरुद्धकण्ठी
वर्णान्तराक्रान्तमुखी बभाषे ॥ ४४

सुधांशुवंशस्य तवानुभावो—
महात्मनां बुद्धिपथं व्यतीतः ।
स त्वं महाराज, कथं न कुर्य्या—
उदारकीर्त्तेः सदृशं महिम्नः ॥ ४५

प्रेष्यां वयस्यामथ शिष्यकन्यां
यन्मत्पदव्यां व्यदधास्त्वमेनाम् ।
एतावता प्रेम तवानुमेयं
त्रिलोकनारीजनलोभनीयम् ॥ ४६

यदुच्यते स्निग्धजनप्रियेषु
पदेष्वपि प्रेम विमूर्च्छतीति ।
तत् सत्यमस्यां करुणा तवैषा
प्रीतिं मयि प्रौढ़तरां व्यनक्ति ॥ ४७

यदेतदद्योपकृतं त्वया मे
प्रदर्शितं मत्प्रवणं मनश्च ।
तेनास्मि सौभाग्यवतीषु धुर्य्या
गौर्य्यास्तपोऽप्यल्पमिवाभ्युपैमि ॥ ४८

कृतज्ञतां शंसितुमत्र मूढ़ा
क्षमा न खल्वस्मि विभो, क्षमस्व ।
अस्रैस्तदाह्लादवशप्रवृत्तै—
र्निवेद्यते सा कथमप्यवद्यैः ॥ ४९

अहो वतेयं व्रततिर्मनोज्ञा
कल्पद्रुमभ्रान्तिविलुप्ततत्त्वा ।
आपातरम्यं विषवृक्षमुच्चै-
रालिङ्ग्य जाता परिविह्वलाङ्गी ॥ ५०

विरिञ्चिना वञ्चितचित्तवृत्तिः
सोमान्वयप्रत्ययमोहलुप्ता ।
अग्निं पतङ्गीव समाश्रिता त्वां
शोच्यां दशामस्मि वत प्रपन्ना ॥ ५१

ऊढां त्वया क्रूरतरेण नीचै—
र्मामुत्तमां निस्त्रप, सङ्गमय्य ।
अभूत् कृतान्तोऽद्य यथार्थनामा
सर्व्वः समर्थः खलु दुर्ब्बलाय ॥ ५२

नूनं गुरुर्मे न विवेद योगं
मृगाङ्गनावन्मृगयौ समर्प्य ।
राजन्यबन्धौ कितवे दयालु—
र्यः श्लाघते श्लाघ्यतमां तनूजाम् ॥ ५३

प्रभुस्त्वमेकोऽत्र प, भूतधात्र्याः
कथं नु दास्यामनुरक्तश्चासीः ।
रूपैर्गुणैर्व्वंशकलादिभिर्व्वा
नात्येति मां प्रत्युत दैत्यकन्या ॥ ५४

त्वयाऽवरार्द्धेन परार्द्ध्यजाता
विमानितैवास्मि मदाविलेन ।
महर्षिविश्राणितपारिजात—
स्रगुत्तमाऽऽखण्डलदन्तिनेव ॥ ५५

अनार्य्य, सैनार्य्यविगर्हितेन
पापेन ते पाप, बलावलेपात् ।
न तावदेकैव विमानिताऽहं
तातोऽपि देवासुरमाननीयः ॥ ५६

ज्वलन्तमुच्चैर्ज्ज्वलनं मदान्धः
पदाऽस्पृशो हन्तभुजङ्गमं वा ।
क्षमिष्यते नैव गुरुर्व्विपाक—
मस्याचिराद्द भोक्ष्यसि, दुर्नयस्य ॥ ५७

प्रेमामृतैः कैतव, तर्पितोऽपि
भुजङ्गवन्मे हृदयेऽदशस्त्वम् ।
किमत्र कुर्म्मः प्रकृतिर्नराणां
ज्वालेव वह्नेर्न वियुज्यते यत् ॥ ५८

यन्मत्प्रसङ्गेऽपि तवाङ्ग, बुद्धि—
र्नीचानुगैवास्ति किमत्र चित्रम् ।
नैसर्गिकी दोषपरम्परा या
शक्या श्रुतेनापि न सा प्रमार्ष्टुम् ॥ ५९

भुजङ्गमस्येव लसन्मणिश्रीः
प्रवालशोभेव विषद्रुमस्य ।
दुष्टात्मनः प्रत्युत कान्तमूर्त्तिः
प्रज्ञादिसम्पत्क्षयहेतुरेव ॥ ६०

व्रजन्त्यनार्य्यस्य तथोपयोगं
प्रज्ञाऽन्ववायश्रुतसद्वयोगाः ।
अन्धोबिभेत्युत्पथगन्तुकामो-
लोकात्, प्रवृत्तोऽपि सुखेन साध्यः ॥ ६१

संलम्भितोऽप्युच्चपदं प्रयत्ना—
न्नीचानुगोऽभूः स्वयमेव भूयः ।
अप्यन्तरिक्षं रविरश्मिनीतं
पतत्यधस्तात् पुनरेव तोयम् ॥ ६२

इयं व्यतिक्रान्तगुरुप्रभावा
स्थितेर्व्विभेत्ता त्वमसि प्रमत्तः ।
प्रेमास्तु वां चारु निरन्तरायं
सुतुल्ययोः श्लाघ्यतमोऽपि योगः ॥ ६३

प्रियोऽसि मे त्वं नृप, दैत्यकन्या
प्रिया भुजिष्येति न वः करिष्ये ।
प्रेम्णोनवस्थान्तरमन्तरायः
पितुर्निकेतन्तदहं गमिष्ये ॥ ६४

सेयं नवोढ़ा तव धर्म्मपत्नी
कलाप्रगल्भा नवयौवनश्रीः ।
तदेतया कामसुखं निकामं
निर्व्विश्यतां वेशजनोचितं यत् ॥ ६५

इयं नवोद्भिन्नवयःसमृद्धा
प्ररूढ़तारुण्यदशाऽस्मि कामिन्, ।
किमस्ति तत्, येन तवानुरागं
लभेय दौर्भाग्यवती पुरेव ॥ ६६

आपातरम्याणि विलोभनानि
शाठ्यानि चास्याः शठ, नैव वेद्मि ।
तस्यां परित्यज्य रतो यदस्यां
शाठ्यस्य जातं सदृशं तवैतत् ॥ ६७

याः केवलं प्रेमरसस्य हेतो—
र्मनः शरीरेण सहार्पयन्ति ।
स्थाने नराणामपराऽनुरागात्
कृतघ्नता तास्वबलासु कर्त्तुम् ॥ ६८

अहो नितान्तानुगतामदोषा—
मनन्यनाथामपहाय पत्नीम् ।
सौन्दर्य्यमात्रादपराऽनुरक्ता-
विचारमूढ़ाः सुतरां पुमांसः ॥ ६९

यस्यां प्रभुत्वं बहु, धर्म्मपत्नीं
मर्म्मस्थिमां निर्दयमर्दयित्वा ।
निघ्नोभवन् दास इवापरस्या-
न वेद्मि किं वा सुखमत्र वेत्सि ॥ ७०

अदक्षिणोऽसि क्षितिनाथ, कामं
न बुध्यते दग्धमनस्तथापि ।
वताबलात्वं बलदर्पिताना—
मनादरस्यैव पदं नराणाम् ॥ ७१

आलोकमात्रात् प्रमदैकमूलं
ममासि सन्तापकरस्त्वमेव ।
प्रदीप्यमानोऽपि दिवाऽधिनाथः
पङ्कीकृताया इव पङ्कजिन्याः ॥ ७२

दूरोऽपि दुस्पर्शकरोऽपि भानु—
रानन्दयत्येव सरोजपंक्तिम् ।
सुधाकरस्त्वन्तिकतः स्थितोऽपि
दुनोति बन्धुः कुमुदावलीनाम् ॥ ७३

दन्दह्यते निर्दय, मानसं मे
प्रियस्त्वमन्याप्रणयाविलीयत् ।
आलिङ्गति व्योमफलं पतङ्गे
जाज्वल्यते तस्य शिला वराकी ॥ ७४

विनिष्ठुरे त्वय्यनुरागलोलं
मनोमदीयं सहतामिदानीम् ।
स्थाने फलं, हन्त दुनोति भूय-
स्तथापि मां त्वत्प्रणयाभिमानः ॥ ७५

निबद्धभावस्य सदा परस्या—
मार्द्रं वचो वह्निवदप्रसह्यम् ।
स्त्रीणामथात्मैकरसस्य पत्युः
श्लाघ्योऽनलश्चन्दनवञ्चितायाः ॥ ७६

ज्वलद्धुताशोपहितं शरीरं
प्रेम्णा समालिङ्गति यस्य पत्नी ।
तस्यान्यनारीजनपारवश्यं
रसोत्तरस्योचितमेव पत्युः ॥ ७७

वाच्यो विधिर्येन विधाय दीनां
त्वदेकनिघ्नामबलां बलाग्राम् ।
अकारि निष्कारणनिष्ठुरेण
तवैव नो निर्दय, मानसं मे ॥ ७८

तूष्णीं स्थितं भूपतिमाक्षिपन्ती
तदन्तिके सा बहुलं रुरोद ।
सशब्दवर्षेव पयोदराजी
शिलोच्चयाभ्यर्णमभि प्रवृत्ता ॥ ७९

अथातिकोपस्फुरिताधरान्तां
नितान्तबालारुणलोचनान्ताम् ।
सातङ्कमागस्करणात् शशङ्को—
जगद्गुरुर्गर्व्ववतीं जगाद ॥ ८०

परां न तावत् प्रतिपत्तुमेना—
मर्हस्यदोषां दितिजेन्द्रपुत्रीम् ।
सखी तवैषा सुमुखि, प्रसीद
सतां हि मित्राभ्युदये न मन्युः ॥ ८१

इमां समुद्दिश्य तवेति पूर्व्वं
मामादिशन्नामिनि, भार्गवोऽपि ।
तदात्मना सम्भवकालएव
प्राक् कामयन्तीं न निषेद्धुमीशे ॥ ८२

अहं न चैनां शयने वराकी—
मेषैव मामाह्वयति स्म बाला ।
विचारविज्ञाऽसि विचार्य्य राज्ञि,
पश्याधुना कोऽत्र ममापराधः ॥ ८३

सा पार्थिवस्यानुनयं न सेहे
नितान्तमन्तःपरितप्यमाना।
स्निग्धान्तराऽपि ज्वलनप्रभिन्ना
स्थालीव साचाज्जलबिन्दुसेकम्॥ ८४

प्रवेपमाना स्नपयन्त्यभीक्ष्णं
स्तनान्तरालं गलदश्रुपूरैः।
आक्षिप्य वाक्यं क्षितिपस्य रोषा—
दात्मानमेषा बहुशो निनिन्द॥ ८५

यावन्नृपालश्चरणावलग्नं
तस्याः स्वमात्मानमियेष कर्त्तुम्।
तावत् प्रतस्थे पितुरन्तिकं सा
विलोलकेशा स्खलदंशुकान्ता॥ ८६

सा प्राञ्जलिं नागणयन्नृपालं
स्निग्धाः स्वभावान्मधुराश्च नार्य्यः।
तेजोविशेषावसरे यथाऽऽपः
कोपे हि भूयः कठिना भवन्ति॥ ८७

क्षीरोर्म्मिमालेव विघट्टितान्त—
रसह्यवेगेन शिलोच्चयेन।
प्रियापचारोन्मथितान्तरा स्त्री
समुद्गिरत्युल्बणकालकूटम्॥ ८८

नितान्तरौक्ष्ये परिदर्शितेऽपि
विमानितोऽपि क्षितिपालमौलिः।
तामन्वगेव प्रययौ हतौजाः
प्राणाः स्त्रियः खल्वपरे नराणाम्॥ ८९

कामं मनस्तस्य पराऽनुरक्तं
तथापि तस्यामनुषक्तमासीत् ।
दूरोपनीतं पवमानवेगा—
च्चीनांशुकं नोज्झति केतुयष्टिम् ॥ ८०

कुमुद्वतीं रञ्जयतोऽपि कामं
प्रीतिर्हिमांशोरधिकैव रात्रौ ।
तस्यां लसन्त्यामपि विप्रयुक्त—
स्त्रियामया ग्लायति तत्क्षणं सः ॥ ८१

अथासुराणां गुरुरुग्रतेजाः
समग्रमाकर्ण्य तदाऽऽत्मजायाः ।
विमाननां सोढुमिवाक्षमः सन्
चुकोप भूयः क्षितिपेश्वराय ॥ ८२

वयोऽवलेपादवलुप्तबुद्धे,
विलङ्घितो मद्विनयो नयश्च ।
तन्मूढ, मत्तीव्रतपःप्रभावात्
भव त्वमद्येव जरानिधानम् ॥ ८३

इत्येवमुच्चैरशपन्नृपालं
तत्कर्म्मभिः क्षोभितचित्तवृत्तिः ।
गाढाविलं तोयमपि क्रियाभि—
र्ज्वलेत् कथा कैव शरीरिणां वा ॥ ८४

उद्वाम्य धातुद्रवमिश्रमग्नि—
माग्नेयशैलः सहसेव शान्तः ।
वर्षोपलोच्चैस्तरवातवर्षं
कृत्वेव पश्चाद्दिवसो गताभ्रः ॥ ८५

शश्वा नृपालं मुनिवंशकेतु—
स्तेनानुनीतः शशिवंशजेन ।
अभूत् प्रशान्तः शमसंस्कृतात्मा
क्षणप्रकोपा हि सदा महान्तः ॥ ९६ युग्मकम् ।

कृताञ्जलिस्तैनमुवाच राजन्,
कस्मिंश्चिदात्मप्रभवे त्वमेनाम् ।
जरां प्रभावान्मम संक्रमय्य
कामं पुनर्निर्व्विश चारुभोगान् ॥ ९७

स देवयानीसहितोऽप्रतीतः
स्वां राजधानीं प्रति सन्निवृत्तः ।
यदुं समानीय समानविद्य—
मुवाच वाचस्पतितुल्यवाग्ग्मी ॥ ९८

अङ्गान्ममाङ्ग, त्वमसि प्रयातः
शरीरमन्यत्तनयाभिधानम् ।
अतस्त्वया संस्मरताऽवदानं
गुरोर्निदेशः परिपालनीयः ॥ ९९

अकालएवेयमुपस्थिता मां
स्थितिघ्न, संस्थानपुरोगरूपा ।
तवैव मातामहकोपजाता
जरा महाक्लेशकरी नराणाम् ॥ १००

अजस्रदीक्षाव्रतसंयतात्मा
स यौवनस्याहमदृष्ट एव ।
सत्यां विभूत्यामनयाऽभिभूतो—
दीनामवस्थां गमितोऽस्मि दैवैः ॥ १०१

नवेन तस्मात् वयसा तवाहं
कामान् पुनर्व्वीर, विनिर्व्विशेयम्।
त्वद्दानया भोगनिवारितात्मा
धरामिमां पालय कालमल्पम्॥ १०२

भूयो जरां स्वां परिगृह्य पश्चा—
दजर्य्यमारण्यगणैः करिष्ये।
नवं वयः प्राप्य समुद्रनेमिं
क्ष्मां भोक्ष्यसे तात, पुनस्त्वमेव॥ १०३

त्वं जन्मना वंश्यगुणैश्च सर्व्वैः
पुत्रेषु मे पुत्र, यतो वरिष्ठः।
नार्हस्यतो मद्वचनं विभेत्तुं
स्थितो निदेशेषु सदा गुरूणाम्॥ १०४

पुत्राभिलाषी कृतएव लोक—
स्त्वञ्चेन्न मे पुत्र, वचः करोषि।
यः श्लाघनीयो विनयः स एव
नोत्शृङ्खलत्वन्तु फलं गुणानाम्॥ १०५

नैच्छद्यदा देवसमानरूपो—
जरां जरादोषविशेषदर्शी।
यदुर्म्महीपालपतिस्तदैनं
शशाप शापाकुलसन्नचेता:॥ १०६

राज्ञोगुरोरप्यवलेपतो मे
यस्मादवज्ञां कृतवानसि त्वम्।
तस्मात्प्रसूतिस्तव पापकर्म्मा
विलुप्तराज्या च भविष्यतीति॥ १०७ युग्मकम्।

स तुर्व्वसुं पार्व्वणचन्द्रकान्तं
जरामनिच्छन्तमुवाच राजा।
पितुर्न मे त्वं वचने स्थितोऽभू—
स्तन्म्लेच्छता म्लेच्छरुचेस्तवास्तु॥ १०८

द्रुह्युस्तथैवाविनयात् प्रकाल—
मनुस्तु लेभे यवनत्वमेव।
उप्तं गुरावुर्व्वरभूमिभागे
सद्यः प्ररोहत्यपचारबीजम्॥ १०९

विलोलचेताः स कुलप्रदीपं
नितान्तभोगान्तरलोपशङ्की।
पूरुं समाहूय परोपरोधं
जयन्तमाखण्डलवद्बभाषे॥ ११०

त्वं पुत्र, सर्व्वावरजोऽपि जात्या
गुणैर्गरीयान् गुरुविक्रमोऽसि।
तवैव तावद्वयसा चरेयं
समाः सहस्रं विषयान्तराणि॥ १११

तवाङ्गसङ्गादुपजातमेत—
दङ्गं तवादेशविधिक्षमं चेत्।
फलं किमन्यद्वद काङ्क्षणीय—
मवश्यमस्य क्षणभङ्गुरस्य॥ ११२

पुत्रेषु तावत् प्रभुतामुदारां
पितुर्महाराज, समामनन्ति।
आज्ञाविधेयेषु पुनर्न भूया
दनुग्रहार्हेषु विनिग्रहोऽयम्॥ ११३

प्राणानपि प्राणद, ते निदेशात्
स्वच्छन्दमानन्दमनास्त्यजेयम् ।
नियन्त्रणायाः करणावलीनां
परिग्रहे कैव कथा जरायाः ॥ ११४

महाप्रसादोऽयमितीरयित्वा
प्रणम्य पूरुर्ब्बहुमानपूर्व्वम् ।
जग्राह राज्ञः शिरसा तदाज्ञां
निदेशनिघ्ना हि गुरोर्महान्तः ॥ ११५

अथ स तनयमुच्चैर्व्वचसाऽऽलिङ्ग्य राजा
विगलितपरिशीतैर्व्वाष्पपूरैर्निषिच्य ।
जलधिवलयसीमां शाधि सर्व्वां त्वमुर्व्वीं
भव विमलगुणौघश्लाघ्यवंशस्य कर्त्ता ॥ ११६

दिवसकरकरौघो यावदेव प्रकाश—
स्तव सुविमलकीर्त्तिः स्थास्यति तावदेव ।
इति नरपतिरुक्त्वा तं जरां संक्रमय्य
कवितनयमहिम्ना यौवनेनान्वितोऽभूत् ॥ ११७
युग्मकम् ।

अभिमतगुणग्रामोदग्रप्रदेशगतोऽन्वहं
विविधविषयान् निर्व्विश्यासौ विहृष्टमनोरथः ।
अथ शमपथं प्राप्तः पूरुं विधाय महीपतिं
नियमितमतिः कृच्छ्रं राजा चकार मुनिव्रतम् ॥ ११८

इति चन्द्रवंशे महाकाव्ये पूरुराज्याभिषेको नाम
सप्तमः सर्गः ।

# अष्टमः सर्गः ।

रराज भूत्वा जरसा विमुक्तः
प्राध्वं पुनर्यौवनमादधानः ।
श्रोत्रप्रियोपप्लवसन्निवृत्तो
शशीव भास्वानिव भूमिपालः ॥ १

ऋत्विग्व्रजैः संयुयुजे स यज्वा
बुभुत्सुभिस्तत्त्वमगाधसत्त्वः ।
जिज्ञासुभिर्धर्म्ममधर्म्मशून्यो—
वीरैश्च सर्व्वैर्जगदेकवीरः ॥ २

निवेशितैः काञ्चनयूपसंघै—
र्धरातलं मेरुतटप्रदेशम् ।
स्रष्टेव सोऽष्टापदचारुरुच्चै—
स्तस्तार ताराभिरिवान्तरिक्षम् ॥ ३

आमूलफुल्लैरिव कर्णिकारै—
र्दूरादनालक्षितवर्णभेदैः ।
अल्पेतरैस्तैर्बहुलप्रपाया—
मपि क्षितिः क्षीणतमा बभूव ॥ ४

शुद्धः प्रकृत्या स्फटिकोपमेयो—
भूयोऽध्वरैः शुद्धतरो नृपालः ।
शिल्पिप्रयुक्तैः परिकर्म्मभेदैः
समुज्ज्वलात्मा स इवोपलोऽभूत् ॥ ५

श्लाघ्यः पुरैवामलकीर्त्तिरासी—
द्विशेषतोवैदिकसंविधानैः ।
प्रागेव पुण्यः परमात्मबोधः
श्रद्धादिभावैः किमुतोपपन्नः ॥ ६

महीं महीपः सुतरां यशोभि—
रसंशयं दर्शितलोकहर्षैः ।
प्रकाशयामास यथा शशाङ्कः
प्रसिद्धमुक्तागुणशुद्धपादैः ॥ ७

स्वां राजधानीमभितः स्थितस्य
स्थिरस्य शीतांशुरुचेरिव द्याम् ।
विरूढ़धाम्नो महता महिम्ना
दिगन्तरं व्यानशिरे प्रतापाः ॥ ७

दिवा दवाग्नेरिव तस्य तेजो—
न तत्त्वतोऽजातरिपोर्मुमूर्च्छे ।
तिरस्कृता भानुमतः प्रतापै—
स्तस्योपलाः खल्ववशा ज्वलन्ति ॥ ८

अपि प्रतिद्वन्द्विनि मन्दवीर्य्यैः
पराक्रमं प्रक्रमतेऽधिरोढुम् ।
निदर्शनं तत्र रजः प्रसर्पत्
प्रत्युत्तमाङ्गं चरणाभिहन्तुः ॥ १०

कामन्तमिस्रास्वपि गन्तुकामाः
श्यामारमण्यः प्रियमन्दिराणि ।
तस्येन्दुगौरामलकीर्त्तिजालात्
जहुर्न शुक्लाभरणांशुकानि ॥ ११

न केऽपि तावत् क्षितिपास्तदीयं
शुद्धं यशः प्रार्थयितुं समर्थाः ।
तमोपहाः कान्ततमाश्च दीपाः
कुतः पुनश्चन्द्रमसोऽनुकुर्य्युः ॥ १२

निवेश्य लक्ष्म क्षितिपस्त्रिलोक्यां
स्थिरं यशो भङ्गुरमात्मदेहम् ।
विहाय काले स दिवङ्गतोऽभूत्
दिवस्पतेरासनमारुरुक्षुः ॥ १३

तदङ्गजो गाङ्गजलावदातै-
र्यशोभिरानन्दितसर्व्वलोकः ।
ततः परं पीवरचारुवक्षाः
बभूव राजा जनमेजयाख्यः ॥ १४

स माधवीं माधवतुल्यतेजाः
राजा विनिर्व्विश्य रजोऽतिगः सन् ।
संसारबन्धान्नितरां विमुक्तो-
मुक्तात्मनां प्राप गतिं गतिज्ञः ॥ १५

प्राची जिता येन दिगप्रमेया
प्राचिन्वता तेन तदात्मजेन ।
जगत्प्रभुत्वं प्रभुणा प्रपेदे
स्वबाहुवीर्य्येण समूर्जितेन ॥ १६

ततस्तदन्ते तनयस्तदीयः
संयत्सु संयातिरिति प्रसिद्धः ।
भेत्ता परेषां परिगीतकीर्त्तिः
प्रापद्धरित्रीं क्रतुभिः पवित्रः ॥ १७

स पालयित्वा मकरालयान्तां
मही महीपालगणैकमौलिः ।
चकार राजा सुरसुन्दरीणां
प्रियेषु गोत्रस्खलितापराधम् ॥ १८

ततोऽप्यहंयातिरिति प्रतीतो—
राजा सुतस्तस्य सतां मतोऽभूत् ।
भुजावहंपूर्व्विकया यदीया—
वायोधनेषु व्रजतो विवादम् ॥ १९

स सार्व्वभौमं सुतमुन्नतांसं
क्ष्मारक्षणे क्षान्तमतिं नियुज्य ।
यथोचितं योगविधेयचेताः
बुधोपमेयो विबुधत्वमाप ॥ २०

स दण्डनीतिं नृपमण्डलानां
प्रभुः प्रभावोचितमभ्ययुङ्क्त ।
विकुर्व्वते केवलसामवादा—
च्छक्तिप्रदीप्ता इति बुध्यमानः ॥ २१

यदेव रोषारुणलोचनोऽभूद्—
व्यतिक्रमं सोढुमशक्नुवन् सः ।
तदाऽभवन् सम्भ्रमवेपथूनां
पाण्डूनि गण्डान्यरिसुन्दरीणाम् ॥ २२

तत्तेजसा संप्रतिपन्नभासः
कामं महीपालगणास्तथापि ।
तस्योदये मम्लुरशीतभानो—
र्ग्रहा इवोच्चावचभेदभिन्नाः ॥ २३

स धर्म्मपत्नीमनघः करिष्यन्
महायशाः कैकयराजकन्याम् ।
प्रयाचमानः किल तेन राज्ञा
सावज्ञमन्नेन निराकृतोऽभूत् ॥ २४

प्रशान्ततोये प्रतिबुद्धमीन—
संक्षोभजन्मेव नवोविकारः ।
तस्यापि मीनध्वजरोषजातः
प्रागेव चित्ते नृपतेर्ब्बभूव ॥ २५

अतो दृपिवोद्धतबाहुवीर्य्यो—
विमाननां तां क्षितिपो न सेहे ।
द्विपप्रयुक्तामिव गह्वरस्थ
विदारणां स्वस्य मृगाधिनाथः ॥ २६ युग्मकम् ।

तस्यावलेपादवलिप्तबुद्धे—
र्बभूव कोपात् परिलोहिताक्षः ।
अङ्गारमात्रोऽपि हिरण्यरेता—
ज्वलत्यलं लम्भितकक्षपातः ॥ २७

अथ प्रतस्थे विजयाय राजा
गजावलीगर्जितमिश्रतूर्य्यैः ।
ध्वजोज्ज्वलश्रीध्वजिनीसमेतो—
रजोऽधिकः केकयराजधानीम् ॥ २८

प्रयाणभेरीपटहप्रणादो-
मुमूर्च्छ भूयोऽथ दिगन्तरेषु ।
नूनं जनोदीरितमस्य राज्ञो—
नालोकशब्दं बहु मन्यतेस्म ॥ २९

बलैः प्रसर्पद्भिरथानुकूलैः
शैलोपमानेकपसंघट्टसैः ।
ध्वान्तैर्धरित्रीमिव वासरान्तो—
करोध राजा रिपुराजधानीम् ॥ ३०

न चाल्पसत्वः समकल्पतासौ
कामं परान् लङ्घयितुं तथापि ।
कृष्णे तमः चीणइव चपेशो-
भिस्त्वेव किञ्चिद्बलमुत्थितोऽभूत् ॥ ३१

स प्रत्यगृह्णाद्बलमप्रमेयं
मितैर्बलैर्व्वीरगणैरधृष्यम् ।
वात्याप्रवृद्धं जलधेस्तरङ्गं
स्फुरत्प्रभं गाङ्गइव प्रवाहः ॥ ३२

ऊर्द्धीकृता निर्म्मलखड्गलेखा—
स्तीव्रैः करैर्भानुमतः प्रदीप्ताः ।
न केवलं लोचनमेव जघ्नु—
स्तुरङ्गगं सम्भ्रममप्यकार्षुः ॥ ३३

चर्म्माणि चामीकरनिर्म्मितानि
तथैव रौप्याणि करोज्ज्वलत्वात् ।
दूरादलक्ष्यन्त नरापचारा—
दुत्पातसूर्य्या इव दीप्यमानाः ॥ ३४

इत्यल्पविद्युद्धतकल्पनेत्रा—
स्तूर्य्यध्वनिभ्यः श्रवणावरोधाः ।
योधास्तदानीं स्वपरावबोधं
कथञ्चिदभ्यासवशादवापुः ॥ ३५

वीरास्तु तेन ज्वलतेव घोरे
ज्योतिःप्ररोहेण रणे चरन्तः।
नैव प्रहारं प्रति नोदितत्वात्
कालं परिक्षेप्तुमलं बभूवुः॥ ३६

तुरङ्गमाणां खुरघातरूढै-
रथाङ्गसंक्षोभभवैश्च पश्चात्।
रणस्थली घोररजोभिरुच्चै-
र्वरूथिनी चापि समाकुलाऽभूत्॥ ३७

घोरे रजस्युद्धततूर्य्यशब्दे
विमर्द्दनिष्ठानि बलान्यभीक्ष्णम्।
उच्चारयामासुरनल्पमुच्चैः
परस्परं स्वप्रभुनामधेयम्॥ ३८

रजःसमाच्छादितदेहभाजो-
विच्छिन्नघण्टाः प्रतिपक्षनागाः।
जिघांसवोऽभ्यर्णमभिप्रवृत्ताः
प्रतीयिरे चारुरदप्रभाभिः॥ ३९

परेण विद्धोऽपिच कुम्भमध्ये
शरैः स्वघण्टाध्वनिनाऽनुमेयः।
आधोरणस्याङ्कुशपातशङ्की
गजस्तमेवाभिमुखो जगाम॥ ४०

सान्द्रेषु रेणुष्वसकृत् शराणां
परस्परं योधगणेरितानाम्।
संघर्षजन्मा ज्वलनोबभासे
गाढ़ान्धकारेष्विव विद्युदग्निः॥ ४१

हताश्वरीरादिवपुःसमुत्थं
रजोविशालं रुधिरं बिभेद।
बालप्रबालारुणमर्करोचिः
साक्षात् क्षपारूढमिवान्धकारम्॥ ४२

विच्छिन्नमूलोरजसां स राशिः
किञ्चिन्मरुद्वेगवशाद्विलोलः।
वाष्पीययन्त्रे शकटे प्रयाते
तस्योद्गतोधूमइव प्रतीये॥ ४३

तथाविधेश्चापि रजोभिरुच्चैः
रराज भूयो रुधिरप्रवाहः।
बालार्कभिन्नः शिशिरैरिवोद्यैः
पद्माकरो वातचलोऽमराणाम्॥ ४४

अथ द्विषां लोहितपङ्कुरन्ते—
स्तिरस्कृतानां नरपुङ्गवानाम्।
सुदारुणं सङ्गरकर्म भूयः
प्रलब्धवीर्य्यावसरं बभूव॥ ४५

छिन्नातपत्रध्वजवर्म्मवाणै-
र्व्विदारितैर्व्वीरतुरङ्गनागैः।
रणाङ्गणं संकुलमप्रमेये—
रभूत् क्षणेन क्षतजप्रदिग्धैः॥ ४६

तथा प्रवृत्तेऽपि रणे सुघोरे
महाभुजो निष्प्रतिघैकतेजाः।
दहन्निवान्यानुरुभिः प्रतापै—
र्व्वभौ विवस्वानिव सार्व्वभौमः॥ ४७

समापतन्तीं रिपुसैन्यराजिं
वरूथिनी तस्य वरं बिभेद ।
तरङ्गमालां खरमारुतोत्थां
सवाष्पयन्त्वेव तरिव्विशाला ॥ ४८

प्रतीपयामास विपक्षसैन्यं
जवातिरेकादधिराजशब्दः ।
स्रोतोवहस्रोत इवातिरंहो-
वेलोद्गमो वारिनिधेर्व्विवृद्धः ॥ ४९

वीरा झटित्यप्सरसां प्रमोदं
करिष्यमाणा रुधिरोच्चिताङ्गाः ।
मुक्ताफलस्थूलतमैर्बभूवुः
श्रमाम्भसां व्याप्तमुखाः पृषद्भिः ॥ ५०

कठोरपातैर्द्दिषतां कृपाणै-
र्दन्ता द्विपानां ज्वलिता महान्तः ।
बलिप्रदीपा इव वीरकीर्त्तेः
प्रतीयिरे तत्क्षणमात्रदीप्ताः ॥ ५१

द्विषद्विमुक्ता निशिताः पृषत्का-
स्तैरन्तरीक्षे लघुशोविलूनाः ।
प्रतीतविद्याधरमुक्तपुष्प-
रेणूपमेयाः परितो निपेतुः ॥ ५२

धृतत्सरुर्हस्तवतोऽग्रहस्तो-
निकृत्तमूलोऽपि शिलीमुखेन ।
प्रफुल्लपङ्केरुहशङ्कितवान्,
हंसादिवोच्चैरवधीद् द्विषन्तम् ॥ ५३

कश्चिद्रथी हस्तरिपुक्षुरप्रै-
श्छिन्नं ध्वजं निक्वणकिङ्किनीकम्।
न चक्षमे चत्रकुलप्रदीप-
श्चिच्छेद तस्याशु किरीटकोटिम्॥ ५४

कश्चित् परस्यन्दनमप्रमत्तः
शरैः समाच्छन्नमनन्तरालैः।
आसारवर्षैस्तरसा विरूढैः
शिलोच्चयं वारिदवच्चकार॥ ५५

शरोत्करैरुत्पतितैः परेषा-
मन्यः समाच्छन्नरथो बभासे।
निःशेषलेशं शलभैरिवोच्चैः
खद्योतजालैरिव पादशैलः॥ ५६

तथाविधः कोऽप्यनुमेय आसीत्
स्फुरत्पताकः समरे परेषाम्।
भित्त्वा तमोनैशमणुप्रकाशैः
करैरुदेष्यन्निव सप्तसप्तिः॥ ५७

कश्चित् शरानग्निमयानजस्रं
समुद्गिरन् गौरवमादधानः।
आग्नेयशैलः खलु दुष्प्रधर्षः
समुद्वमन् वह्निमिवावभासे॥ ५८

पदातिरप्युद्धतसाहसोऽन्यः
स्तम्बेरमं विस्तृतकुम्भमध्ये।
मुक्ताव्रजैरुत्प्रहरन् पतङ्गी
रराज साक्षादिव पुष्पवर्षैः॥ ५९

कश्चित् द्विषत्खड्गनिकृत्तमूर्द्धा
मर्त्त्योऽपि सद्योऽमरतां प्रपद्य ।
सुराङ्गनाऽऽलिङ्गितदिव्यदेहो—
रिपुं जयोत्फुल्लमुखं जहास ॥ ६०

समुद्यतासिः समरे प्रहर्त्तुं
द्विपन्तमेकोद्विषता क्षणेन ।
छिन्नोत्तमाङ्गोऽपि च कण्ठनाला—
दपातयत् पङ्कजचारुवक्त्रम् ॥ ६१

आविद्धदेहो द्विषतां पृषत्कै—
रलक्ष्यतान्यः समरे प्रसर्पन् ।
उत्पातवातादिव चाल्यमानः
शिलोच्चयः पुष्पितकर्णिकारः ॥ ६२

मुक्ताऽवदातोज्ज्वलवर्म्मधारी
विलोलचामीकरतारहारः ।
अन्यः समाश्लिष्टशिखः कृशानो—
स्तुषारगौरः शिखरीव रेजे ॥ ६३

अस्त्रैः परे सादितसादिसैन्या—
स्तुरङ्गमैः सङ्गरलब्धवर्णैः ।
आनृण्यकामैर्निहताः प्रभूना—
मुत्प्लुत्य वेगात् पतितैः शिरःसु ॥ ६४

यथा क्षरद्गैरिकरक्तशैलो—
यथोन्नतः पुष्पितपारिजातः ।
बभौ तथाऽन्यः क्षतजोक्षिताङ्गः
शस्त्रक्षतालङ्करणा हि वीराः ॥ ६५

रुषाऽतिदष्टस्फुरिताधरोष्ठै-
र्निकृत्तकण्ठैर्मधुगन्धगर्भैः ।
रणस्थली शोणितवीचिलोलै-
र्व्याप्ताऽभवत् पद्मनिभैः शिरोभिः ॥ ६६

प्रवर्त्तितायाः सरितः प्रकामं
वीरद्विपास्फालितकरवालमय्याः ।
च्युतं शिरस्तो नरपुङ्गवानां
शिरस्त्रमावर्त्त इवावभासे ॥ ६७

असृक्प्रवाहैः परिलोलमेकं
शिवाऽपकर्ष्टुं भुजमुद्यताऽपि ।
मुष्टौ निविष्टां करवालवल्लीं
विलोक्य भीता विनिवर्त्तते स्म ॥ ६८

लोलैर्विहङ्गैरभिकृष्यमाणं
तेभ्यः समाक्रम्य कठोरशब्दः ।
स्खलन् मुहुः शोणितपङ्किललात्
श्वा च्छिन्नमूलं चरणं जहार ॥ ६९

बले परैरुन्मथितेऽतिवेलं
ग्लायद्बलः केकयलोकपालः ।
अस्तं गमिष्यन्निव हेममाली
प्रतापजालैः परिहीयते स्म ॥ ७०

शक्तिप्रदीप्तोऽपि बली स नेता
नैवात्यगादुद्गीतबलोत्तरं तम् ।
तथाहि भूयानपि वारिवाहो-
न वातवेगं समतीत्य याति ॥ ७१

लब्धप्रतिष्ठेन ततोऽयुलोकेऽ-
प्यसौ प्रतिष्ठानपुराधिपेन।
सुधीः स्वयं दुर्ब्बलतामुपेतः
सन्धातुमैच्छद्बलवत्तरेण॥ ७२

महौजसा तेन महाभुजोऽसौ
सन्धानसन्धिं विधिवद्दधत्त।
कालोचितं या विविनक्त्युपायं
विनिर्म्मला सैव मतिः प्रशस्ता॥ ७३

सुतां सुनन्दामरविन्दवक्त्रा-
मिन्दीवरश्यामलकान्तयेऽसौ।
पद्मोपमेयामनवद्यरूपां
सत्कारपूर्व्वं सुदतीं दिदेश॥ ७४

घोरस्तयोरशमयत् कमलायताक्षी
लक्ष्मीपतेरिव लसल्ललनैकमूर्त्तिः।
एकामिषोत्थममरासुरयोर्व्विरोधं
सेतुक्रियेव विपरीतजलौघयोः सा॥ ७५

अथ ललितविलोचनां कृशांगीं
मुदितमना नृपतिश्चिरेण लब्ध्वा।
निजनगरमितस्तया विजह्रे
निधुवनकेलिकलाप्रगल्भयाऽसौ॥ ७६

इति चन्द्रवंशे महाकाव्ये केकयाधिपविजयो नाम
अष्टमः सर्गः।

———०———

## नवमः सर्गः ।

महितेच्छः पालयित्वा महीमर्णवमेखलाम् ।
वर्णैरारञ्जितां भेजे स नन्दनवनश्रियम् ॥ १

जयत्सेनः सुतस्तस्य भुजे भुजगसन्निभे ।
केयूरवद्भुवो भारं बभार विधिवत्ततः ॥ २

उपयेमे स वैदर्भीमदभ्रगुणगर्व्विताम् ।
तया च शुशुभे सोमो विष्टुत्येव विशाम्पतिः ॥ ३

अवाचीन इति ख्यातस्तस्यामस्यात्मजोऽभवत् ।
सुताविव प्रतिस्तोतुः पाकशासनसम्मदः ॥ ४

पृथिव्याश्चतुरन्तायाः पालनायामलत्विषम् ।
तमादिश्य निदेशस्थं त्रिदशत्वमियाय सः ॥ ५

तस्मिन्नपि कथीभूते महाभौमस्तदात्मजः ।
बभूव भूमिवलये लोकपालः कुलाग्रणीः ॥ ६

स प्रसेनजितः पुत्रीं सुयज्ञां नाम याज्ञिकः ।
सधर्म्मचारिणीं चक्रे सप्ततन्तुरिवाहुतिम् ॥ ७

तस्मादयुतनायीति भानुः पूर्व्वाचलादिव ।
आसीत् पुरुषमेधानामयुतं यः समानयत् ॥ ८

स्थापयित्वा स्थिरं सोऽथ यशःस्तोममिवात्मनः ।
तमुर्व्वीमर्णवान्तायां निर्व्विवेश सुराङ्गनाः ॥ ९

स पृथुस्रवसः श्रीमान् सुतायाममितद्युतिम् ।
पुत्रमक्रोधनं नाम सुजनं समजीजनत् ॥ १०

विनीतान्तरमादिश्य तमन्ते धरणीश्वरः ।

समाजह्रे स कालिङ्गीं कन्यां राजभिर्हृताम् ।
सिंहदंष्ट्राकवलितं कुलिङ्गः पिशितं यथा ॥ १२
तस्यामुत्पादयामास देवातिथिरितिश्रुतम् ।
देवोपमेयन्तनयमातिथेयं महामतिः ॥ १३
तस्मिन् सुरपुरस्त्रीणां वल्लभे श्रीः कुलागता ।
तमालजम्बे तरुणं वानिनीव नितम्बिनी ॥ १४
तस्मादरिह इत्यासीदरयो हतविक्रमाः ।
हरिणेव मृगा येन संयुगे युगबाहुना ॥ १५
गुरावमरतां प्राप्ते गुणैर्गुरुरुदारधीः ।
शुचिष्केशशुचिः श्रीमान् वंशश्रियमवाप सः ॥ १६
देवभूयं गते तस्मिन्नयवेत्ता तदात्मजः ।
क्ष्मामरक्षद्विशालाक्षो नाम्ना ऋक्ष इति श्रुतः ॥ १७
सूनुस्तस्य तदन्तेऽभून्मतिनारो महामतिः ।
नरपालः कपालीव भूतानुगतिहर्षितः ॥ १८
स रोधसि सरस्वत्याः सुतरां धीरमानसः ।
आजहार महाराजः सत्रं द्वादशवार्षिकम् ॥ १९
समुद्ररशनां रोषादिव सा स्वयमादरात् ।
करप्रदानादकरोदधिविन्नामधिश्रियः ॥ २०
तंसुमंशं दिगीशानां सुतमस्मादवाप सा ।
उद्यानवापिका पद्मं वसन्तसमयादिव ॥ २१
गुरौ सुरवधूक्रीड़ारसहर्षितमानसे ।
श्रिया समालिलिङ्गेऽसावनङ्ग इव मूर्त्तिमान् ॥ २२
तस्मादैलिन इत्यासीदनल्पमनलोपमः ।
अलिः पुष्परसस्येव गुणराशेरधीश्वरः ॥ २३
स कुलोचितमैश्वर्य्यं भुक्त्वा दुष्मन्तमात्मजम् ।

धीरेण तेन धरणी केवलं न प्रसाधिता।
वर्धिताऽप्युदधेरूर्म्मिः पूर्णेनेव हिमांशुना॥ २५
अर्णवा वरुणस्येव वेदा इव महाधियः।
चत्वारोऽपि भुवोभागास्तस्यासन् वशवर्त्तिनः॥ २६
स पूतानकरोत्तेतान् म्लेच्छानपि मलिम्लुचान्।
मलावलुप्तसौन्दर्य्यान् धातुभेदानिवानलः॥ २७
वीरः समुद्रावरणान् क्रमशः स दुराक्रमान्।
द्वीपाननेकानजयत् वशीन्द्रियगणानिव॥ २८
अकृष्टपच्यशस्योच्चैराकरैरुपशोभिता।
वसुन्धरा यथार्थत्वं राज्ञि तस्मिन्नपद्यत॥ २९
अथर्व्वनिर्व्यपेचत्वादुत्पातैरनुपप्लुताः।
प्रजास्तस्मिन् प्रजापाले स्वं स्वं धर्म्मं सिषेविरे॥ ३०
आसीदहरहर्दानं प्रजासु सकलास्वपि।
मदोदयस्तु दुःसह्यस्तदा द्विरदपंक्तिषु॥ ३१
मृगयामगमत् कर्त्तुं स कदाचिद्दिशाम्पतिः।
वनं मृगगणाकीर्णं पतत्रिकुलकूजितम्॥ ३२
स ददर्श ततोदूरादाश्रमं श्रमनिःसहः।
कण्वस्योन्नमितैर्व्याप्तं शाखिभिर्व्विहगान्वितैः॥ ३३
प्रफुल्लकुसुमोपेतैः पादपैः पल्लवोत्तरैः।
प्रांशुभिः सङ्कुलं साक्षात् ध्वजैरिव विड़ौजसः॥ ३४ युग्मकम्
अर्च्चयिष्यन् मुनिं धीमान् तं प्रत्यभिमुखोऽभवत्।
अयत्नोपस्थितं श्रेयः कः प्रेक्षावानुपेक्षते॥ ३५
सोऽपश्यन्मालिनीं नाम कलहंससमाकुलाम्।
निम्नगामपुरपस्पर्शादनिम्नगतिदायिनीम्॥ ३६
वल्कलप्लवकालुष्ये क्षोभेऽपि जलवासिनाम्।
कुम्भयोनेरनदृशे[illegible]

अनेकैः कमलैः कीर्णां विकसद्भिः सितोदकाम् ।
मुक्ताशुभ्रामिव ज्योत्स्नां नक्षत्रखचिताम्बराम् ॥ ३८
तरङ्गमालासंभिन्नपतङ्गप्रतिमोज्ज्वलाम् ।
शरत्पयोमुचः पंक्तिं सञ्चरच्चञ्चलामिव ॥ ३९ कलापकम्

तामुत्तीर्य्य महीपालोवलिशोभितसैकताम् ।
प्रापदाश्रममश्रान्तोवातैः शीकरवर्षिभिः ॥ ४०
धौतवल्कलनिस्यन्दकषायरसविन्दुभिः ।
भूयिष्ठमनुकुर्व्वद्भिर्भक्तिशोभामिवाध्वनः ॥ ४१
अक्षमालावल्कलाद्यैः शाखास्वेष्ववलम्बनात् ।
नूनं तरुभिरप्युच्चैः प्रतिपन्नमुनिव्रतम् ॥ ४२
विनिर्व्विष्टफलैः स्पष्टं सदयं द्रुमगोचरैः ।
स्तम्बावशिष्टैर्नीवारैरेकतः परिवारितम् ॥ ४३
सानन्दं मुनिकन्याभिरम्बुच्छवपिताण्डजम् ।
वृक्षकाणां जलघटैः सिच्यमानालवालकम् ॥ ४४
श्रद्धया मुनिपत्नीभिरुटजाभ्यन्तरेऽनिशम् ।
इन्धनैः सावधानाभीरक्ष्यमाणहुताशनम् ॥ ४५
खगैस्तदर्थमुत्सृष्टनीवारवलिसञ्चयम् ।
कूजद्भिश्च पतद्भिश्च निर्व्विशद्भिरलङ्कृतम् ॥ ४६
क्वचिदातपमानीतं नीवारं चरतोमृगान् ।
विनिवारयितुं भूयः सम्भ्रान्तमुनिकन्यकम् ॥ ४७ कुलकम्

प्रसूतामंगने यत्र मृगीं मङ्गलदीपकैः ।
इंगुदीस्नेहरचितैरभ्यनन्दन् मुनिस्त्रियः ॥ ४८
न कोऽपि पादपो यत्र लताऽऽलिङ्गनवर्जितः ।
नापुष्पिता लता काचिन्न पुष्पं षट्पदोज्झितम् ॥ ४९
विपन्नमातृकं यत्र सिंही कलभमादरात् ।
लिहती पाययामास स्तन्यं स्वशिशुभिः समम् ॥ ५०

नष्टप्रसूतिमवशं व्याघ्री हरिणशावकम्।
सानन्दं योजयामास जनन्या यत्र सादरम्॥ ५१
वनान्तरादुपायातं मृगयूथं मुनिव्रजाः।
यत्र सम्भावयन्तिस्म वलिभिः सलिलैरपि॥ ५२
तरवोऽपि फलैः पुष्पैर्विहङ्गकलकूजितैः।
छायया च पुरा यत्र पूजयन्त्याश्रमागतम्॥ ५३
पुष्परेणूत्‌किरैर्यत्र पवनैर्मदनातुरैः।
कान्ताइव विटैः शश्वद्बलादालिङ्गिता लताः॥ ५४
अपूर्ण्णशिरसः सर्व्वे शाखिनस्तत्र जातुचित्।
नौद्धत्यं तेष्वभूदासन् विनम्रा विनयादिव॥ ५५
मिथ्याऽनभिज्ञाः सर्व्वेऽपि प्रकृत्या विनयान्विताः।
तत्र सत्यमभूद्गुप्तं विभ्यन्नागरिकादिव॥ ५६
तदाश्रमपदं प्राप्य नमस्तेलिननन्दनः।
सतां वेत्तीव हृदयं भविष्यदपि मङ्गलम्॥ ५७
स शून्यमाश्रमपदं कण्वेनाप्रतिमौजसा।
विलोक्य लोकपालश्रीस्तत्र क्षणमपेक्षत॥ ५८
लतागृहान्तरात् काचित् कमलायतलोचना।
निश्चक्राम ततो वाला चपलेव वलाहकात्॥ ५९
तया सत्कृतमात्मानं बहु मेने विशाम्पतिः।
वपुर्व्विशेषोपनता मनःप्रह्लादनी क्रिया॥ ६०
का त्वं कस्यासि सुश्रोणि, समयानुचितक्रमम्।
बिभर्षि तापसीवेशं आला शङ्खमिवेन्दवी॥ ६१
इति वाला सनिर्व्वन्धं नृपेण कथितान्वया।
पृष्टा जगाद सुदती किञ्चिदुच्छ्वसितान्तरा॥ ६२
अप्सरःसम्भवां साधो, मां निबोध शकुन्तलाम्।
विश्वामित्रस्य राजर्षेरौरसीमुग्रतेजसः॥ ६३

पालनादन्नदानाच्च कण्वोऽपि मुनिसत्तमः ।
मत्पितेत्येतदस्माभिस्तस्मादेव पुरा श्रुतम् ॥ ६४

अथ तां कामयामास कामयन्तीं महीपतिः ।
गान्धर्व्वेण विवाहेन गन्धर्व्वोनवमद्युतिः ॥ ६५
सा तेन सुतरां रेजे सङ्गता ललिताङ्गना ।
विनयेनेव विपुला लक्ष्मीरक्षतविक्रमा ॥ ६६
तया सङ्गम्य रहसि प्रियया नरपुङ्गवः ।
निरगादाश्रमाद्भूयः समाश्वास्य सुमध्यमाम् ॥ ६७
इदं कुलपतिर्वृत्तं किन्नाम प्रतिपत्स्यते ।
इत्युत्कश्चियन्तयन्नेव राजधानीं जगाम सः ॥ ६८
अन्वमोदत तत् कण्वोऽप्यवदानं विदांवरः ।
सुतायाः पतिसौभाग्यं लोकैः खल्वभिलष्यते ॥ ६९
धार्म्मिकत्वं पौरवाणां राज्यादप्रच्युतिस्तथा ।
पतिव्रता ततोवव्रे शान्तात्मानं शकुन्तला ॥ ७०
श्रोत्रियः प्रतिशुश्राव सर्व्वं पूर्व्वक्रमोचितम् ।
ह्लादयन्ति हि बन्धूनां प्रार्थनाः प्रोन्नतान्तरान् ॥ ७१

अथ काले विशालाक्षी कुमारममितौजसम् ।
सुभगं लाञ्छनैः सर्व्वैरसूत पितुराश्रमे ॥ ७२
जातकर्म्मादिकस्तस्य संस्कारविधिरक्षतः ।
विधिना विदधे तावत् काश्यपेन यथाक्रमम् ॥ ७३
तं सर्व्वदमनं नाम्ना निम्ननाभं मुनिर्व्यधात् ।
स हि षड्‌वर्षदेशीयः सर्व्वानदमयद्बली ॥ ७४
कुमारमनुचक्रेऽसौ कुमारो बलविक्रमैः ।
गुणैः सहृदयश्लाघ्यैस्तमप्यमितमत्यगात् ॥ ७५

चिरवासः पुरस्त्रीणां बान्धवेष्वयशस्करः ।
एकैव चतुरन्तायाः स्वामिनी च शकुन्तला ॥ ७६

इति तां प्रेषयामास सपुत्रां भर्तुरन्तिके ।
साक्षादिव तपःसिद्धिं लक्ष्मीमिव फलोज्ज्वलाम् ।७७युग्मकम् ।
मुनिशिष्याः पुरस्कृत्य तां सपुत्रां प्रतस्थिरे ।
सत्कारविधिनोपेतामर्चां मूर्तिमतीमिव ॥ ७८
तामधोवदनां साध्वीं मुनिशिष्यनिवेदिताम् ।
अपवादभियोवाच जानन्नपि जनाधिपः ॥ ७९
नाहं स्मरामि सुश्रोणि, न चाप्याश्रमवासिनाम् ।
अनयप्रणयः शङ्कः किमिदं समुपस्थितम् ॥ ८०
अनार्य्येमिव विज्ञाय मनो मेनकया पुरा ।
त्वमभूर्हिमवत्पृष्ठे निर्म्माल्यस्रगिवोज्झिता ॥ ८१
त्रपैका भूषणं स्त्रीणामिति मिथ्या जनश्रुतिः ।
यदवाच्यमिदं घोरं कथयन्ती न लज्जसे ॥ ८२
लोभनीयाऽप्यसंस्पृश्या परनारीति मद्विधैः ।
त्वं प्रभास्फुरितं रत्नं बिभ्रतीव भुजङ्गमी ॥ ८३
अयञ्चातिबलीबालः सौम्योऽप्यशुभसंश्रयः ।
औत्पातिकद्रुवोत्पन्नः पुष्पितः शालवृक्षकः ॥ ८४
इममामिषवद्बालं पुरस्कृत्य कलाचरम् ।
आलपन्ती मृगस्यान्तर्मम व्याधीव लक्ष्यसे ॥ ८५
मालेव विषवल्लीनां कुसुमैरुपकल्पिता ।
आपातकमनीयाऽपि त्वमुपेक्ष्या विचक्षणैः ॥ ८६
गच्छ वा तिष्ठ वा चेतो दुष्यन्तस्य न क्षुभ्यते ।
पयोमहत्परिचितादयस्कान्तादिवायसम् ॥ ८७
क्षितिपेन ततोबाला परुषं समुपेक्षिता ।
स्थूणेव निश्चला तस्थौ दुःखामर्षत्रपाऽऽकुला ॥ ८८
अथ सा वेपमानाङ्गी कटाक्षैर्नरपुङ्गवम् ।
आलोहितैर्दहन्तीव कथञ्चिद्वाचमाददे ॥ ८९

पुराऽऽश्रमपदे राजन्, विलोभ्य चटुलाक्षरैः।
स्थानेऽवधीरणा धर्म्मं तस्युषः स्थितिवित्तम ॥ ९०
रतिः प्रीतिश्च शुश्रूषा याभ्यः समधिगम्यते।
रौक्ष्यं तास्वेव कुर्व्वन्तः पुरुषाः खलु निष्ठुराः ९१
दुःखैरुच्चावचैर्लोका घर्म्मांशुभिरिवानिशम्।
दह्यमानाः प्रहृष्यन्ति दारेषु सलिलेष्विव ॥ ९२
व्युच्चरन्ति नराः पत्नीः प्राणानप्यर्पयन्ति याः।
तारुण्यमदमत्तानां मूढ़तेयं गरीयसी ॥ ९३
विद्वानपि महाराज, त्वमेवं परुषाचरम्।
प्रत्यादिशन् धर्म्मपत्नीं कथं नाम न लज्जसे॥ ९४
विनीतमपि विद्वांसं श्रीमदोऽतिभवत्यहो।
प्रसन्नसलिलोदारं ह्रदं वा जलदागमः॥ ९५
साधुः परिवदन्नन्यानल्पमप्यनुतप्यते।
मोदते त्वपरोऽतरन्तं त्रपतां कुतएव तु ॥ ९६
सत्कृत्य सज्जनं सन्तो यथा गच्छन्ति निर्वृतिम्।
निरनुक्रोशमाक्रुश्य कामं वत तथेतरे ॥ ९७
विनयेनैव धीमन्तो मन्यन्ते खलु गौरवम्।
परे विचारमूढ़ास्तु व्युत्क्रमेणातिमानिषु॥ ९८
सतां वक्तव्यतां प्राप्तः खलः खल्वविचारयन्।
निन्दन् मन्दमतिर्लोकैर्हसितोऽपि न बुध्यते॥ ९९
अहो दुष्कृतवत्यस्मि पुरेव पितरावुभौ।
त्वमप्यद्य महाराज, मामदोषां यदत्यजः॥ १००
इमन्तु तनयन्तावदात्मनो मूर्द्धन्यन्तरम्।
अनर्घ्यमिवरत्नाग्र्यं मा त्याक्षीर्माँ त्यजन्नपि॥ १०१
आकल्पोज्ज्वलसर्व्वाङ्गप्रियाऽऽलिङ्गननिर्वृतिम्।
अतिशेते रजोक्लिष्टसुताश्लेषणसम्मदः। १०२

आदर्शे निर्म्मलच्छायं प्रतिविम्बमिवात्मनः।
विलोक्य तनयं लोके ह्लादते को न मानवः॥ १०३
अथ वाष्पातिरेकेण कण्ठरोधनिपीड़िता।
चरोद करुणं बाला लतेव विगलन्मधुः॥ १०४
तस्यां रुदत्यां विस्पष्टमधुराक्षरशालिनी।
शृण्वतां पौरमुख्यानां वागुवाचाशरीरिणी॥ १०५
त्वया किल वरारोहा परिणीता शकुन्तला।
दुष्यन्त, तव पुत्रोऽयं भरस्वैनं यशस्विनम्॥ १०६
कोटराग्निप्रदग्धस्य वृष्टिः श्लाघ्या तरोरिव।
अन्तः सन्तप्यमानस्य तस्याभूत् सा सुधेव वाक्॥ ७
अथानन्दजवाष्पौघैरभिषिच्यात्मसम्भवम्।
भरणाद्भरतोऽयं मे सुतोऽस्त्वित्ययमभ्यधात्॥ १०८
साम्ना स क्षमयामास क्षान्तं नाम शकुन्तलाम्।
अपराद्धं मया देवि, लोकवादभयादिति॥ १०९
त्वयि चितौ च प्रवणं मनोमम निरन्तरम्।
प्रान्तं दिग्बोधयन्तस्य दक्षिणोत्तरयोरिव॥ ११०
इति सुप्रियमाभाष्य तामसौ प्रियवादिनीम्।
युवराजपदे साधुर्निदधे सुतमादरात्॥ १११
सा चक्षमे क्षमाशीला साध्वी भर्तुर्व्यतिक्रमम्।
कोपः खलु पुरन्ध्रीणां वल्लभानुनयावधिः॥ ११२
मेघोन्मुक्तामिव हिमकरश्चन्द्रिकां वारिपूरः
स्निग्धोत्फुल्लामिव कमलिनीं बालभानुप्रबुद्धाम्।
भूयां पूर्व्वामिव बहुमतां सम्प्रदीप्ताग्नितप्तां
कालुष्यान्ते किल परिगतस्तामसौ राजतेस्म॥ ११३

इति चन्द्रवंशे महाकाव्ये शकुन्तलापरिग्रहोनाम
नवमः सर्गः।

## दशमः सर्गः ।

तस्मिन् समाधाय स राजशब्दं
बभूव शान्तः शमसंस्कृतात्मा ।
सहस्ररश्मिर्निजमस्तसंधं
गुणोत्तरे चन्द्रमसीव राजा ॥ १

अन्वगययौ कण्वमुनीन्द्रकन्या
तमादरान्मूर्त्तिमतीव लक्ष्मीः ।
पतिव्रतानां व्रतमन्तरायै-
र्न जातु रौद्रप्रमुखैरपैति ॥ २

प्रागेव दीप्तो महसा कुमारः
स राज्यमादाय पुनर्दिदीपे ।
प्रापेव साचात्तमसोपगूढं
ज्वालावलीढो ज्वलनः प्रदोषम् ॥ ३

अभिप्रयातस्य परं जिगीषो-
र्वीरस्य न स्यन्दनचक्रमस्य ।
यतोविजघ्ने खलु लोकसंघैः
स चक्रवर्त्तीति ततो बभाषे ॥ ४

पवित्रगङ्गायमुनातटान्त-
र्मेधाक्रतून् विक्रमशोभमानः ।
समाजहारामरगीतकीर्त्तिः
परे यथा नानुययुर्यशः स्वम् ॥ ५

प्रत्ययभूपालविपत्तिशोकाः
प्रजा नवो लोकपतिर्गुणौघैः ।
आनन्दयामास यथेन्दुकरैः
प्रभाकरापायविलुप्तचेष्टाः ॥ ५४

वपुष्टमां नाम सुवर्णवर्णां
स काशिकेयस्य सुतामुदाराम् ।
दारक्रियायोग्यगुणैर्व्वरिष्ठा-
ममात्यमत्या विधिनोपयेमे ॥ ५५

स मासमात्रं श्वशुरालयान्त—
र्नृपो नवोढासहितोऽध्युवास ।
द्वितीयलक्ष्मीव तयोज्ज्वलश्री-
स्ततः प्रतस्थे निजराजधानीम् ॥ ५६

रथं विनीताश्वलसत्पताक-
मध्यास्य विद्वान् सुहृदां वियोगात् ।
नातिप्रहृष्टां स वपुष्टमाख्यां
विनोदयामास मनोज्ञवाग्भिः ॥ ५७

कलिन्दकन्योर्म्मिमिलत्तरङ्गां
तथैव गङ्गामवलोक्य शुभ्राम् ।
भङ्गाय मेने नृपधर्म्मपत्नी
मलं च नैसर्गिकनिर्म्मलानाम् ॥ ५८

कृतोपचारेष्वनुजीविवर्गै—
स्तेषु प्रदेशेषु मनोरमेषु ।
मार्गेषु काश्चिद्वसतीर्व्विहृत्य
तौ प्रापतुः स्वामथ राजधानीम् ॥ ५९

रथाङ्गियन्ता यमिताश्वरश्मिः
शुभे मुहूर्त्ते प्रियया ऽवतीर्य्य ।
शुद्धान्तमध्ये विनिवेश्य चैनां
क्ष्मापः क्षमाभारमसौ बभार ॥ ६०

तस्मात् शतानीक इति प्रसिद्धो-
बभूव तस्यां रुचिरः कुमारः ।
अग्निप्रसङ्गादिव वाष्पमय्यां
स्फुरत्प्रभं ज्योतिरयोजवर्य्याम् ॥ ६१

गुर्व्वर्थमत्युत्कटमाहरिष्यन्
कृतान्तरायः किल तक्षकेन ।
वैरानुबन्धक्षुभितान्तरत्वा-
दुत्तङ्कनामा तमृषिः प्रपेदे ॥ ६२

उवाच चैनं नतपूर्व्वकाय-
माशीर्भिरुच्चैरभिनन्द्य पूर्व्वम् ।
साम्ये स्थितानामपि धैर्य्यलोपं
वैरं किलातिक्रमजं करोति ॥ ६३

तव पितरमुदारं तक्षकः क्ष्माप, साक्षा-
दशनिरिव महीध्रं धर्षयामास मूढः ।
द्रविणचयविसर्गैर्विप्रमध्वर्द्धमार्गात्
क्षितिपतिलकरक्षाबद्धकामं निषिध्य ॥ ६४

स खलु यदि न मन्त्रोऽवारयिष्यद्द्विजार्य्यं
दशनमनु तदानीं क्षोणिपालं स एव ।
तरुमिव दववह्निज्वालयालीढमङ्गः
प्रबलबहुलशक्तिर्नूनमाजीवयिष्यत् ॥ ६५

परिभवति स तांस्तैर्लचकेनापि दृष्टः
स्वमिति नवमवर्षं पश्यता व्याकुलेन ।
प्रतिकरणसमर्थो वारितस्तेन विप्र-
स्तदहह परिलुप्तस्त्वत्पिताऽप्राप्तकालः ॥ ६६
क्षितिपतिलक, तस्यावर्णराशेः खलाना-
मतिगुरुरवलेपः कीदृशः पश्य जातः ।
अशमयदविलुप्तप्रक्रमं कीर्त्तिजालै—
र्धवलितजगदन्तं यद्वृथागर्व्वितोऽसौ ॥ ६७
नरप, पितुरमित्रे क्रोधनः क्षत्रियः सन्
किमिति किमिति वैरं वीर, तस्मिन्न धत्से ।
हुतवहमधि होतुं तं किल क्रूरबुद्धिं
चर सुचरितकल्पः सर्पसत्राख्यसत्रम् ॥ ६८
इत्याभाष्य व्रतिनि सुतरामाश्रमं स्वं प्रयाते
तीव्रक्रोधारुणितनयनस्तक्षकस्यापराधात् ।
सम्भारान्ते स पुनरचिराद्ब्राह्मणैर्वेदविद्भिः
प्राप्तोदर्कैः क्षितिपतिरभूत् सर्पसत्राय दीक्षाम् ॥ ६९
अथाहौषीत् सर्पान् हुतवहमुखे स क्रतुविधौ
तमिस्रायामन्धौ शलभनिवहानध्वग इव ।
स्फुटन्तस्तेषान्तु ज्वलनतरसा भोगमणयः
स्फुलिङ्गाभा दृष्टा दिशि दिशि पतन्तः पटुरुचः ॥ ७०
प्रदीप्तोऽग्निः सार्द्धं नरपतिरुषा खाण्डलशयो-
ददाहोर्वीमन्त्रार्पितमहसः कुण्डलिगणान् ।
तथैवेन्द्रं सान्द्रं शरणमुपपन्नो नरपतेः
पितुर्व्वैरी वक्रेरुपरि परिलम्बोऽथ ददृशे ॥ ७१

अथ स्तोकाशिषस्तुतिभिरभिसन्तोष्य नृपतिं
वरं लेभे तस्मात्तदविरतये सत्यवचसः।
ततो मुक्ताः सर्पाः क्षितिपतिवचस्तत्क्षणसुधा-
गतत्रासा वह्नेरपि मुमुदिरे मन्त्रबलिनः॥ ७२
हुतोच्छिष्टं सर्पव्रजमथ विरच्य क्षितिभृत-
स्तमः शिष्टं किञ्चिद्दिनकरकराद्भूधर इव।
स सन्तुष्टः शिष्टाभिमतद्विजराशीभिरसक-
त्समुच्चैरानन्दप्रचुरमभिनन्द्याश्रममगात्॥ ७३
वैशम्पायनतः स कम्पितवपुःप्रत्यर्थिवीरव्रजः
शुश्रावोल्वणकिल्विषैकहरणीं पुण्यां कथां भारतीम्।
या व्यासेन विशेषतो विरचिता वेदार्थसार्वोत्तरा
पूर्व्वेषां किल सर्व्वगर्व्वदलनी कीर्त्तिश्च यशोज्ज्वला॥ ७४
इति चन्द्रवंशे महाकाव्ये सर्पसत्रवर्णनोनाम
द्वाविंशः सर्गः॥

---

## त्रयोविंशः सर्गः ।

स प्रक्रमामन्दितसर्व्वलोको-
लोकान्तरं कालवशात् प्रपन्नः ।
परोक्षभावं क्षितिपः प्रपेदे
किरीटयोगादिव खञ्जरीटः ॥ १

अथाभवत् पार्थिवचक्रवर्त्ती
कृती शतानीक इनैकतेजाः ।
स्फुरत् परानीकमनेकरूपै-
र्जेता मुहुः संयति यः पृषत्कैः ॥ २

स याज्ञवल्क्यादधिगम्य वेदं
कृपादथास्त्राण्यनिवारितास्त्रः ।
कुर्व्वन् परेषामवरोधशोकं
शशास राज्यं महनीयतेजाः ॥ ३

बभूव तस्योज्ज्वलदेहभाजः
सुतो विदेहाधिपतेः सुतायाम् ।
यो देहदीप्त्या दहनोपमेय-
स्तिरश्चकार त्रिदिवालयस्थान् ॥ ४

रजोविमुक्तः स विरक्तचेता-
निवेदितात्मा किल शौनकाय ।
तत्त्वावबोधक्षपितक्षशोको-
लेभे स्फुरन्निर्म्मलसत्यलोकम् ॥ ५

तस्यावसाने क्षितिशासनस्य
वसूपमेयो वसुधाऽऽधिपत्यम् ।
दत्तोऽश्वमेधाद्विपदः प्रपेदे
प्रीतैः सुरैर्दत्तवरोऽश्वमेधात् ॥ ६

धीरः प्रतीताध्वरसंविधानैः
पुरोधसां सोमरसासवेषु ।
मनांसि बध्नन्नकरोदमर्त्त्यान्
स मर्त्त्यवद्भूतलदीर्घवासान् ॥ ७

तस्यात्मजोऽभूदधिसीमकृष्णः
कृष्णोपमेयोऽप्यपकृष्णकर्म्मा ।
यः पश्यतां चेतसि दर्शनीय-
स्तृष्णां समावर्त्तयदीक्षणस्य ॥ ८

पुत्राध्वरप्राध्ययनैरृणेभ्य-
स्त्रिभ्योऽपि निर्म्मुक्ततयाऽमलौजाः ।
निःशेषकर्त्तव्यतयेव सोऽभू—
द्धरातलावस्थितिनिर्व्यपेक्षः ॥ ९

सुतस्तदीयस्तु ततः प्रपेदे
कुलप्रदीपः कमलाभवक्त्रः ।
विधानपूर्व्वं विबुधोपमेयो-
बुधाग्रगण्यो वसुधापतित्वम् ॥ १०

स प्राप्य राज्यं द्विजराजकान्ति—
र्वीरव्रजानामविषह्यतेजाः ।
प्रह्लादयामास निजप्रजाली—
र्निरस्य वाणैर्द्विषतां प्रचारम् ॥ ११

अजीजनत् सज्जनवाञ्छमोघ—
मलाञ्छनं चन्द्रमिव स्फुरन्तम् ।
बालं मृणालाधिकसौकुमार्य्यं
निषक्त्,मार्य्यानुमतोपचारम् ॥ १२

विनीतमादिश्य तमात्मजातं
नृपः प्रजाक्षेमविधौ विधिज्ञः ।
आचारमुच्चैर्जरसोऽनुरूपं
चचार चीरप्रणयी वनेषु ॥ १३

स चापि वर्णाश्रमधर्म्मपाता
वर्णाश्रमाचारपरायणत्वात् ।
धर्म्माविरोधाधिगतार्थकामो-
मनीषिणां मानसकाङ्क्षितोऽभूत् ॥ १४

रोधःप्रपाताविलगङ्गयोर्च्चै—
स्तरङ्गहस्तैरभिलक्ष्यमाणम् ।
सर्व्वंस्तदीयं नगरन्तदन्त—
र्ध्रुवं पवित्रीभवितुं विवेश ॥ १५

निवारयिष्यन् सुरनिम्नगाया-
दुर्व्वाररंहःप्रचुरप्रवाहम् ।
प्रजाऽऽवलीदुर्गतिकातरात्मा
बभूव भूपो विफलप्रयत्नः ॥ १६

तरङ्गिणीघोरतरङ्गविघ्ना
विशेषतः कातरतामुपेताः ।
प्रजास्तदा रक्षितुमक्षमोऽसौ
बभूव क्षामं विमनायमानः ॥ १७

परं प्रजारञ्जनमेव राज्ञो-
मनीषिणः कर्म्म समादिशन्ति ।
आस्तां तदेतत्परिरक्षणं मे
मन्दस्य नाभूदपि धिग्धिगस्मान् ॥ १८

प्रजाऽऽवलीः स्वा नरलोकपालो-
न रक्षितुं यो विपदः क्षमेत ।
क्लेशाय तस्यातुरतीव राज्यं
जरातुरस्येव नवं कलत्रम् ॥ १९

इत्येवमन्तः समतप्यतासौ
प्रजाकुलक्लेशविशेषदीनः ।
राजन्वती यत् परिभूयते भू-
स्तदेव दैवस्य बलं व्यनक्ति ॥ २० विशेषकम् ।

सर्व्वप्रयत्नैरपि यन्न साध्यं
व्यलीकमस्मिन्नपि स प्रपेदे ।
भूपालभावव्यपदेशदृप्ताः
खलाः किलोच्चैर्व्यथयन्ति लोकान् ॥ २१

ततः स कौशाम्ब्यभिधामुदारां
पुरीं परास्कन्दभयैर्व्विमुक्ताम् ।
प्रासादसन्तर्जितवैजयन्तीं
पौरैः समस्तैः सहितोऽध्युवास ॥ २२

तस्यानुकूल्यात् क्षितिपस्य लोकाः
प्रजाव्यलीकाकुलमानसस्य ।
दुरन्तदैवव्यसनातिपातं
ते श्लाघमानाः क्षमं सहन्ते ॥ २३

## द्वितीयः सर्गः ।

अथ शापान्तमासाद्य सुद्युम्नः स्वां पुरीं ययौ ।
तमात्मजं समादाय कुमारमिव शङ्करः ॥ १
बालएवातिवल्गुत्वाज्जहार जगतां मनः ।
अयनं दक्षिणं प्राप्तः सहस्रांशुरिवाशु सः ॥ २
अल्पोऽपि वपुषा नम्रः स गुरुर्गुणगौरवैः ।
सुगन्धिभिः फलैः पुष्पैर्बालस्तरुरिवाबभौ ॥ ३
स तु सर्व्वगुणाढ्योऽपि न राज्यं प्राप पैतृकम् ।
राज्ञः स्त्रीत्वे किलोत्पन्नः परस्य हि सुतोऽभवत् ॥ ४
वशिष्ठवचनात्तस्मै प्रतिष्ठानं नृपोददौ ।
गङ्गा च यमुना चोभे यत्रास्तां परिखे इव ॥ ५
परां प्रतिष्ठामगमत् पुरे तत्र पुरूरवाः ।
श्रेष्ठा हि पुरुषाः प्रायः स्वगुणैरेव विश्रुताः ॥ ६
प्रकृत्या स्पृहणीयोऽभूत् प्रजानां संयतेन्द्रियः ।
स निर्म्मलयशा लोके मिथ्याचारपराङ्मुखः ॥ ७
अथ गौरीगुरोः शृङ्गे तपसा परमेश्वरम् ।
आराध्य किल साम्राज्यं स प्रापोर्ज्जितविक्रमः ॥ ८
त्रयोदशद्वीपमयीं महीं महितशासनः ।
शासनाज्ञां शशासोच्चैर्गुणराशिवशानुगाम् ॥ ९
षाड्गुण्यपरिशुद्धस्य तस्य राज्ञो महीश्वराः ।
जगृहुर्हितमायत्यामादेशमुपदेशवत् ॥ १०

अमोघाः सायकास्तस्य समग्राश्च धियोगुणाः ।
स्वाराज्यञ्च हये कुर्य्युः साम्राज्यं प्रति का कथा ॥ ११
प्रजापालनधर्मेण सम्प्रीतः पुरुषोत्तमः ।
स्वयमर्द्धासनं तस्मै गुणशुल्कमकल्पयत् ॥ १२
न रूपमन्वयं वाऽपि गुणमेवोन्नताश्रयाः ।
स्तुवन्त्यल्पो रजःकीर्णोमणिः श्लाघ्योमनीषिणाम् ॥ १३
अथ जातुचिदत्युच्चैः स रथं कामचारिणम् ।
मनोरथमिवारुह्य चचार मरुतां पथि ॥ १४
ह्रियमाणां परित्रस्तां चित्रलेखामथोर्व्वशीम् ।
केशिनाऽप्सरसः साक्षात् स्वर्गलक्ष्मीमिवैक्षत ॥ १५
भिया विलीनकल्पन्तदुर्व्वश्या मुखपङ्कजम् ।
जहार सहसा तस्य दयालोः सुतरां मनः ॥ १६
प्रकृत्या रमणीयानां रामाणां सम्भ्रमादिभिः ।
म्लानाऽपि मुखपद्मश्रीरभिख्यामेति कामपि ॥ १७
तन्वङ्गी नृपतेश्चेतो लोलतामनयत्तथा ।
लिखितेव यथा तत्र विचित्रेव च साऽभवत् ॥ १८
विक्रमावसरं प्राप्तो राजा तस्य व्यतिक्रमम् ।
न कोपाच्चक्षमे क्षत्रो मिथ्योचितपराङ्मुखः ॥ १९
आस्कन्द्यमाने ह्यबले संरम्भो बलिनां यथा ।
न तथा बलवत्येषां स्वभावः सोऽयमीदृशः ॥ २०
तां वेपमानां विवशां शूली मायामृगीमिव ।
आश्वासयन् महेष्वासं ज्यया स समयोजयत् ॥ २१
प्रसर्पन्तमिवालोकं प्रासादः सेतुरुन्नतः ।
अम्भसामिव संघातं तं रुरोध धराधिपः ॥ २२
भूभृतोच्चैस्तरेणोच्चैः प्रत्याहृतगतिक्रमः ।
प्रवाहवन्निम्नगाया भग्नवेगो बभूव सः ॥ २३

शरवर्षैश्च जग्राह राजानं दनुजेश्वरः।
अविच्छिन्नैरिवासारैः सानुमन्तं घनाघनः॥ २४
वरूथिनीनिर्व्यपेक्षावुभावपि विचक्षणौ।
पुरतोऽप्सरसां प्राप्तविक्रमावसरौ रणः॥ २५
आमिषं रमणीरत्नं चित्रलेखा तथोर्व्वशी।
किन्तत्र येन संरम्भो न तयोर्विपुलो भवेत्॥२६ युग्मकम्।
द्वयोर्हस्तवतोर्वीराः सञ्चरन्तो निरन्तरम्।
महान्तः शिञ्जिनीघोषा वाग्विरोधं न सेहिरे॥ २७
ज्वलद्भिरस्त्रैरालीढः श्यामलो दानवेश्वरः।
दावानलसमाश्लिष्टशिलोच्चयइवाबभौ॥ २८
वायुदैवतबाणेन दनुजं मनुजेश्वरः।
दूरमुत्सारयामास क्षुद्रं कक्षमिवानिलः॥ २९
संहृतज्यस्ततः प्राज्यामुर्व्वशीमाससाद सः।
भुजवीर्य्याधिकप्रीतां मूर्त्तामिव जयश्रियम्॥ ३०
तावद्दूराऽपि सम्प्राप्तः समन्विष्यन् किलोर्व्वशीम्।
क्रियमाणाममित्रेण कीर्त्तिं मूर्त्तिमतीमिव॥ ३१
अथ तामब्रवीद्राजा योऽलभ्यां लब्धुमिच्छति।
दैत्यस्त्वामवलेपान्धः स सुन्दरि, पराजितः॥ ३२
अयञ्चाखण्डलश्चण्डि, त्वद्वियोगव्यथाऽऽकुलः।
शचीमपि परित्यज्य विहस्तस्त्वामुपस्थितः॥ ३३
तं लीलामधुरालापैः सम्भावयितुमर्हसि।
निस्वनैर्भ्रमरस्येव वल्ली मलयमारुतम्॥ ३४
अवदानेन देवानामपि प्रार्थितविक्रमम्।
प्रति तं पृथिवीपालं पिप्रिये पाकशासनः॥ ३५
ततस्तत्पूर्व्वमुर्व्वीशे वीर्य्यनिष्क्रयसुन्दरम्।
सख्यमासीन्महेन्द्रस्य नरलोकसुदुर्लभम्॥ ३६

पुरूरवसमादाय स्वां पुरीममरेश्वरः ।
ययावप्सरसां लाभात् पुलकाञ्चितविग्रहः ॥ ३७
ददौ चार्द्धासनं तस्मै स्वाङ्गमङ्गेन पीड़यन् ।
गुणेभ्यो नम्रतामेति काममुच्छ्रिरसां शिरः ॥ ३८
समक्षं सर्व्वदेवानामुर्व्वश्याश्चामरेश्वरः ।
बहुमानञ्चकारास्य श्लाघ्यवीर्य्यस्य संसदि ॥ ३९
यथा यथा स राजर्षिर्वज्रिणा प्रतिपूजितः ।
आसीत्तथा तथोर्व्वश्या मुग्धं लोलञ्च मानसम् ॥ ४०
अथ तस्य प्रमोदार्थं व्यादिदेश विशाम्पतेः ।
लीलाङ्गहारसुभगव्यापारं प्रति तां वृषा ॥ ४१
प्रागेव मानसं तस्याः पुरूरवसि सस्पृहम् ।
लीलाविलासव्याजेन भावो व्यक्तइवाभवत् ॥ ४२
लोलचित्ततया तस्याः प्रयोगेषु व्यतिक्रमम् ।
न चक्षमे शचीनाथो यशः स्वमिव लङ्घितम् ॥ ४३
इतोभ्रष्टा दुष्टचित्ते, कामसंमूढ़मानसे, ।
कियन्ति वस वर्षाणि क्षिताविति शशाप ताम् ॥ ४४
पुनश्चोवाच राजर्षिममुं प्रियसखं मम ।
तवापि त्राणकर्त्तारमनुवर्त्तितुमर्हसि ॥ ४५
दुष्प्रापमपि सा स्वर्गं तं विना किल वञ्चनाम् ।
तत्सङ्गशंसिनं शापं मेने परमनुग्रहम् ॥ ४६
समाभाष्य ततः शक्रं प्रत्यावृत्तः पुरूरवाः ।
स्वां पुरीं पुरुषव्याघ्रः पारिजातस्रजोज्ज्वलः ॥ ४७
अथ भेजे भुजश्लाघ्यं तमुर्व्वीपतिमुर्व्वशी ।
ततो महीतलस्थोऽपि स स्वर्गसुखमन्वभूत् ॥ ४८
शयनस्यान्तिके स्थाप्यौ पुत्रकावुरणौ मम ।
उत्सृष्टशयनीयं त्वां न द्रक्ष्यामि दिगम्बरम् ॥ ४९

आवयोः समयः सोऽयं यदैव परिहास्यते ।
गमिष्यामि तदैवाहमितुग्रवाच तमुर्व्वशी ॥ ५० युग्मकम् ॥
सा किलाखण्डलेनैवं वियोगाकुलचेतसा ।
आदिष्टेति ययाचे तमकामैव मनस्विनी ॥ ५१
तथेति तस्याः प्रथमं प्रणयं प्रणयोत्सुकः ।
अपालयन्महीपालः सोच्चैरप्रीयत प्रिया ॥ ५२
तां समालिङ्ग्य भूपालो लेभे यत् सुखमञ्जसा ।
बुधो विद्यामिवासाद्य कोऽन्यस्तद्वदितुं क्षमः ॥ ५३
यस्यामानापनोदाय शक्रस्य प्रणतिक्रमः ।
स्वयमालिङ्गनं तस्याः कं नानन्दयति क्षितौ ॥ ५४
क्लिश्यन्ते तपसाऽत्यन्तं यदिच्छन्तस्तपस्विनः ।
अयत्नोपस्थितन्तस्य तत् सुखं नृपतेरभूत् ॥ ५५
गन्धर्व्वलोकादानीय त्रेताग्निं सोऽग्निसन्निभः ।
अग्निहोत्रं समाजह्रे सकलत्रः कुलाग्रणीः ॥ ५६
क्रतूनां शतमाहर्त्ता यशोव्यस्त शतक्रतुः ।
श्लाघ्येन तेन सुहृदा प्रीतिमानन्वमोदत ॥ ५७
दानवानां चमूनाथानपि पार्थिवसत्तमः ।
किङ्करानिव सन्निम्नान् महर्षीनुदवाहयत् ॥ ५८
जिज्ञासमानस्तं जातु त्रिवर्गः समुपस्थितः ।
गीतकीर्त्तिं सुरस्त्रीभिर्मूर्त्तिमानवनीश्वरम् ॥ ५९
अनर्घ्यशीलः सोऽर्घेण सर्व्वान् प्रत्यग्रहीद्बुधः ।
धर्म्मायाकल्पयद्भूयोबहुमानं महामनाः ॥ ६०
तं प्रत्यर्थश्च कामश्च कामं मन्युमगच्छताम् ।
उचितक्रममप्यस्मोमन्यते ह्यवमाननाम् ॥ ६१
बलावलेपादन्धोऽसि मूढ़, मामवमन्यसे ।
कामार्त्तो विकृतिं गच्छेरिति कामः शशाप तम् ॥ ६२

लोभातिशयदोषेण स्वात्मनेव वियोक्ष्यसे।
व्यर्थाभिमानिनस्त्वन्तमित्यर्थोऽप्ययशपन्नृपम्॥ ६३
राजधर्मप्रवीणन्तं धर्मोराजानमादरात्।
अवदद्वदतां श्रेष्ठः सस्मितः स्मयवर्जितम्॥ ६४
स्त्रियां यश्नामलोत्थायां जातस्त्वममृतद्युतेः।
कुले कुलप्रदीपोऽसि निर्म्मले मलवर्ज्जितः॥ ६५
यस्य श्लाघ्यां कलामेकां बिभर्त्ति शिरसेश्वरः।
तदन्वयस्य ते राजन् चितैवोन्नतेच्छुता॥ ६६
उद्भवस्यानुरूपैव बुद्धिः शुद्धतरा तव।
कुतोनिर्म्मलता न स्यादुर्म्मिषु चीरवारिधेः॥ ६७
तदायत्यां महाराज, परां निर्वृतिमाप्स्यसि।
यशश्च शाश्वतं नास्था लौकिकेषु सुखादिषु॥ ६८
काममर्थश्च कामश्च तुभ्यं मन्युमगच्छताम्।
अवलिप्तः किलात्मानं न स्यात् कलयितुं क्षमः॥ ६९
त्रिलोकगीतयशसा स्वयं कुलिशपाणिना।
यत् सख्यं कृतमेतत् ते गुणानां खलु गौरवम्॥ ७०
करेण सादरं धत्ते कमलं कमलेक्षणः।
मदान्धः परिमृद्नाति तदेव सहसा गजः॥ ७१
साधूनामादरः श्लाघ्यः परेषां लङ्घनेन किम्?
तमःकवलितोऽपीन्दुरभिनन्द्यो महात्मनाम्॥ ७२
तस्मा व्यथिष्ठाः सन्मार्गे स्थेयाः स्थितिमतां वर,।
खलानामवलेपेन स्मितं कुर्व्वन्ति साधवः॥ ७४
अथ पार्थिवमाभाष्य भाभिराभाभासयन् दिशः।
तिरोबभूव धर्म्मोऽपि प्रसादसुमुखः क्षणात्॥ ७५
सोऽपि शापप्रसादभ्यां परीतः पृथिवीपतिः।

अथ सुरवनिताभिर्गीतकीर्त्तिः परेषा—
मविरतधृतदण्डो दण्डनीतिप्रवीणः।
भुवमिव गुणरत्नामुर्व्वशीं निर्व्यपेक्ष—
स्तदितरमहिलायां भूमिपालोन्यभुङ्क्त ॥ ७७

इति चन्द्रवंशे महाकाव्ये धर्म्मप्रसादो नाम
द्वितीयः सर्गः ॥

---

## अथ तृतीयः सर्गः।

अथ प्रजानामनयोज्झितानां
निःक्षिप्य रक्षां सचिवेष्वचिन्तः।
ययौ विलासी प्रियया विहर्त्तुं
हिमाद्रिपादोपवनान्तरेषु ॥ १

गङ्गातरङ्गोक्षितसैकतान्ते
महीधरोद्गीर्णजलप्रपाते।
दूर्व्वादलश्यामलताभिरामे
विकीर्णवैदूर्य्यमणिप्रकर्षे ॥ २

प्रफुल्लकल्पद्रुमपारिजात—
छाये समाच्छन्नसुगन्धिशष्पे।
शृङ्गे सतुङ्गस्तनया समेतो—
महाभुजो यौवनमन्वभुङ्क्त ॥ ३ युग्मकम्।

चिराय गोत्रस्खलितापराधात्
पादानतं वल्लभमाक्षिपन्त्याः ।
कस्याश्चिदारक्तमुखं मृगाक्ष्या—
रेमे स कामी मधुरं निरीक्ष्य ॥ ४

अधित्यकायां मृगलोचनायाः
स्वच्छोपलायां स किलोपविष्टः ।
चुम्बन् मुखं तत्प्रतिबिम्बदर्शी
विनैव रेमे मणिदर्पणेन ॥ ५

भूयिष्ठनिर्व्विष्टनिकुञ्जपुञ्जा—
स्वाकृष्टनाकद्रुतिरञ्जितासु ।
स हेमकूटस्य दरीषु रेमे
कृशोदरीप्रेमरसप्रतीतः ॥ ६

चैत्रे ततश्चैत्ररथं प्रपन्नः
समुन्नतश्रोणिविशालयाऽसौ ।
आवर्ज्ज्य शाखाः सदयं तरूणां
विनिर्व्विशन्त्या कुसुमान्तराणि ॥ ७

प्रेम्णा प्रयुक्तं सुरसुन्दरीभि—
र्दोलोत्सवं पेशलमध्यया सः ।
आलिङ्गितस्तत्कृतलग्नभाग्यं
विश्राम्यतिस्तत्र विनिर्व्विवेश ॥ ८

लाक्षारसालिप्ततलस्य तस्याः
पादस्य सम्पर्कवशात् प्रफुल्लः ।
स खल्वशोको न विलासिवृत्ति—
रभूदसूयाविषयो नृपस्य ॥ ९

सखा मधुस्तन्द्रिकथाप्रबन्धै-
र्विलुप्तसौभाग्यगुणोत्तराय ।
न कोऽपि लोकः स्पृहयाम्बभूव
पुंस्कोकिलानां कलकूजिताय ॥ १०

शुचौ तुषाराद्रिशुचिप्रदेशे
समुच्छ्रिते निर्झरशीकराद्रैः ।
शिरीषपुष्पोत्तरपुष्पशय्ये
भूयो विहारा नृपतेर्बभूवुः ॥ ११

प्रालेयसम्पर्कनिवारितोष्णान्
रवेर्मयूखान् सुतरां दिवाऽपि ।
स चन्द्रपादानिव लोककान्तान्
नृपः प्रकाशैकफलान् सिषेवे ॥ १२

दवाग्निदीप्तातपतीव्रतप्ते
वनस्थलेऽप्यस्खलितप्रचारः ।
तया चरन् खल्वपि भूमिपालो-
न वासरौष्ण्यं गणयाञ्चकार ॥ १३

काले च शीतोष्णवती च काले
तस्योर्वशी स्पर्शवती बभूव ।
मूर्त्तिः प्रिया प्रेमरसस्य सत्य-
मर्थानुरूपम्परिणाममेति ॥ १४

ततः पुरोवातसखः प्रगर्जन्
संस्तूयमानस्तृषितैः पतङ्गैः ।
प्रियासमाश्लेषसुखानुकूलः
सखेव राज्ञो जलदागमोऽभूत् ॥ १५

गुहाविसर्पिप्रतिशब्दघोर—
घनावलीगर्जितवेपिताङ्गी ।
निशाचरास्कन्दभियेव भूयः
स्वसुर्वशी वल्लभमालिलिङ्ग ॥ १७

तां स्निग्धरेखामिव चारुहेम्नः
समुल्लसन्तीं निकषोपलान्तः ।
अस्पर्शनीया जलदेषु विद्युत्
पुनः पुनर्व्वीक्ष्य ह्रियेव लीना ॥

पुष्पोपचारच्युतसम्यकेश—
कलापलीलाश्च कलापवत्यः ।
विडम्बयन्त्यः परुषस्वरला—
न्न साम्यमापुर्मधुराधरायाः ॥ १८

तस्याः कपोलोपरि लम्बमानः
कदम्बपुष्पश्रवणावतंसः ।
परागपुञ्जैर्घनदूषणत्वात्
राज्ञो विलासैकसखो बभूव ॥ २०

धन्यस्य यत् श्रोत्रपुटैकपेयं
भावार्द्रचेता रसवच्चुकूज ।
शीत्कारमिश्रं तदपि ह्रुवानो-
घनागमः श्लाघ्यतमो बभूव ॥ २१

ततो नदीनामुदकानि तावद्-
वयोऽवसाने प्रमदामदा वा ।
व्यलीकलोकान्यपि काश्यमापुः
को वा सुखी स्यादनुमानुलस्य ॥ २२

कामं सुरस्त्रीभिरथावतीर्य्य
भूयिष्ठनिर्विष्टजला ह्रदिन्यः ।
स्लाघ्या बभूवुर्व्वपुषः कयल्ले-
ष्यन्योपकारी गुणएव भूयान् ॥ २३

हैमं मृणालं परिभुज्य कामं
ब्रह्माभिधानात् सरसो निवृत्ताः ।
नितम्बिनीशिञ्जितलोलचित्ता-
विलम्ब्य जग्मुः किल राजहंसाः ॥ २४

ज्योत्स्नाविधौतामलकान्ति तस्या-
राजा विनिर्व्विश्य मुखं रजन्याम् ।
तृप्तिं प्रपेदे न हिमांशुपादै-
र्विचुम्बितं फुल्लमिवारविन्दम् ॥ २४

मुखश्रियं लिप्सुरिवेन्दुरस्या-
श्छायाविशेषं बहुशोऽपि पुष्यन् ।
न काङ्क्षितं प्राप फलं स लेभे
निर्व्वेदभावाद्विकलत्वमेव ॥ २६

तस्याश्चकोरैः परिभूयमाणं
मुखं मृगाक्ष्याः क्षितिपस्तदानीम् ।
पुनः पुनस्त्रातुमनास्तरस्वी
कृती न तावद्विफलोद्यमोऽभूत् ॥ २७

प्रीत्यै प्रियायाः सुरसिन्धुपद्मं
समाददानं मदगन्धमिश्रम् ।
तमन्यनारीजनसङ्गशङ्का
रुषात्पदा सा प्रहृतं जघान ॥ २८

पौरस्त्यवातः पयसां गुरुत्वं
सम्पादयन्नेत्य तुषारवर्षी ।
गाढ़प्रियालिङ्गनमङ्गनानां
स्मरेण सन्दिष्टमिवादिदेश ॥ २९

स दीर्घरात्राप्लुतितौषधीनां
ज्वालाप्रदीपोज्ज्वलितान्तरासु ।
दरीषु रेमे भुजमध्यलीना-
मस्थूलमध्यां परिरभ्य भूयः ॥ ३०

तस्या मधूच्छिष्टयुताधरोष्ठं
मुक्तासमाश्लिष्टमिव प्रवालम् ।
पिपासतः पेशलमप्रसन्नं
विलासिनस्तस्य मनो बभूव ॥ ३१

न पङ्कजान्तेकपटुस्तुषारो-
मुखारविन्दस्य चकार किञ्चित् ।
व्यलीकमस्याः खलु सारशून्यो-
निःसारमुन्मूलयितुं हि शक्तः ॥ ३२

तथापि तस्या व्रणलेशखिन्नो-
विलोलमल्पेतरलालसस्य ।
तस्याधरस्पर्शरसासहत्वात्
मनाग् दुनोति स्म मनः कपोलः ॥ ३३

कुन्दस्रजा चुम्बितकेशहस्त-
स्तस्या विलासचुरतचारुवक्षः ।
उद्दान्तमुक्ताफलवच्चकार
स्मराकुलं मानसमस्य भूयः ॥ ३४

ग्रीष्मां तदालिङ्गनसम्भवं यद्-
विशेषसौभाग्यरसानुबन्धि।
निर्व्वापितस्तेन हिमालयेऽपि
न कामयामास करीषवह्निम्॥ ३५

ज्योतींषि सोमप्रमुखाणि सर्व्वा—
ण्ययाणि शैलस्य वनान्तराणि।
क्लिष्टानि तावन्ति तुषारवृष्टैः
प्रेमा तयोः केवलमुज्ज्वलोऽभूत्॥ ३६

इति प्ररूढ़स्मरनिम्नचेता—
स्तया रसात् स्वर्गसुखाभिलाषम्।
प्रविस्मरन्त्या शरदः स रेमे
क्रीड़ानरत्या मदनोपमानः॥ ३७

प्रकाममप्यर्थपतिः प्रतीतः
स निर्व्विशन्निन्द्रवदिन्द्रियार्थान्।
चिराय कामान्धतरान्तरत्वात्
तमेव मेने त्रिगणस्य सारम्॥ ३८

शुभ्रोऽप्यमन्दद्युतिमानपीन्दु—
र्विद्योतते व्योमनि तावदेव।
यावन्न मेघो न हिमागमो वा
दोषातिरेको हि गुणावलोपी॥ ३९

चारुप्रभायाश्चिरविप्रयोगं
दिवौकसः सोढुमशक्नुवन्तः।
त्वां नेतुमेतामचिरादिवोच्चै—
र्निसर्गकान्ताः भृशमत्वरन्त॥ ४०

समेत्य गन्धर्व्वगणोऽथ सर्व्व—
स्तदुर्व्वशीपुत्रकमेषयुग्मात् ।
प्रभावदुर्लक्ष्यवपुः क्षणेन
क्रोशन्तमेकं निभृतं जहार ॥ ४१

आकर्ण्य तत्क्रन्दितमप्रमत्ता
सेन्दीवराक्षी क्षितिपं बभाषे ।
केनापि सत्वेन कुतोऽपि नीतो—
मत्पुत्रकः सम्प्रति पश्यतस्ते ॥ ४२

तं त्रातुमर्हस्यतिमात्रदीन—
मदीनसत्वोऽसि दयार्द्रचित्तः ।
तरस्विनो नाम समक्षतश्चेत्
क्षतं तदस्त्रैव यशः क्षिणोति ॥ ४३

उवाच राजा ऋजु शान्तयित्वा
कान्तामलं सुन्दरि, कातरोक्त्या ।
दिगम्बरो नाक्षमितोऽस्मि गन्तुं
प्रसीद तद्देवि, कृतोऽञ्जलिस्ते ॥ ४४

स्थिरप्रतिज्ञं नरनाथमेवं
कर्तुं स्खलद्व्रतमपारयद्भिः ।
तैरेव भूयः सहसा स सत्वै—
र्मं तावदन्योऽप्युरणोहृतोऽभूत् ॥ ४५

पुनः पुनः प्रार्थनयाऽपि भूपं
बभूव नोत्थापयितुं समर्था ।
अथातिनिर्व्विण्णमना रुरोद
सा मुक्तकण्ठं कुररीव रामा ॥ ४६

सा मानिनी किञ्चिदभाषमाणा
मही‌पतिं केवलमाकुलाक्षी ।
चक्रन्द संक्रन्दनमाक्षिपन्ती
क्षिपन्त्यतिस्थूलतमाश्रुबिन्दून् ॥ ४७

अनाथवत्यस्मि हृतौ सुतौ मे
वीरो न कोऽप्यत्र कथं करोमि ।
अधिक्षिपन्ती क्षितिपालमेवं
विलोलकेशा विललाप भूयः ॥ ४८

उष्णास्रबिन्दुप्रकरैस्तदीयै–
र्वाग्भिश्च दुःसह्यतराक्षराभिः ।
उल्काभिरुच्चैरभिहन्यमानो–
दन्तीव कान्तः स भृशं चुकोप ॥ ४९

पुरूरवस्यत्र धनुर्धरेऽपि
को नाम पुत्रं हरति प्रियायाः।
समीक्षमाणेऽपि शिशुं मृगेन्द्रे
के वा मृगा लङ्घयितुं क्षमन्ते ॥ ५०

द्विपेन्द्रमारुह्य बलावलेपा–
दसह्यगन्धोरुकटप्रवाहम् ।
निरङ्कुशः काङ्क्षति कोऽद्य गन्तुं
कृतान्तपुर्यामतिथिर्भविष्यन् ॥ ५१

अलं विलापेन विशालनेत्रे,
पश्य प्रिये, मद्भुजवीर्य्यमद्य ।
अवेहि पाटच्चरमुच्चरन्तं
लोकादितस्त्वं खलु वीरपत्नी ॥ ५२

देवोऽथवा दानव एव वा स्यात्
सिद्धोऽथ गन्धर्व्वगणो मनुष्यः ।
तं पातयिष्ये निशितैः पृषत्कै-
र्व्वातः खरो भूमिरुहानिवोग्रैः ॥ ५३

तं गृध्रपक्षैः परिवीज्यमानं
मूर्त्त्यन्तरं कान्तिमदभ्युपेतम् ।
सुराङ्गनाः सङ्गतचारुवेशाः
विलोभयिष्यन्त्यधुना विलासैः ॥ ५४

इतीरयित्वा धनुराततज्यं
करे समादाय स च प्रतस्थे ।
गन्धर्व्वलोकैर्युयुजे च सद्यो-
विद्युद्विशाला जलदं विनैव ॥ ५५

दिग्वाससं वासवदर्शनीयं
नृपं समालोक्य विशालनेत्रा ।
तिरोहिताऽभूत् सहसा तड़िद्व-
त्तदोर्व्वशी विद्रुतहेमगौरी ॥ ५६

न केवलं भूतलमेव तस्याः
स्थानन्तिरोधानवशाद्बभूव ।
अज्ञातघोरव्यसनातिपातं
मनोऽप्यकस्मान्नृपतेर्विदद्रे ॥ ५७

ततः कथञ्चिन्मनसश्चलत्वं
स्थानस्य सोऽस्थानमुखो निगृह्य ।
शरासनारोपितसायकोऽभूत्
स्थिरप्रतिज्ञा हि सदा महान्तः ॥ ५८

तत्कार्मुकस्याशनिशब्दकल्पं
ज्याघोषमाकर्ण्य परे विभग्नाः ।
हुङ्कारमात्रेण हरेर्विदूरं
सहस्रशो नाम मृगाः श्रयन्ते ॥ ५९

आदाय दायादयुगं प्रियायाः
प्रत्यागतः स्वं निलयं नृपालः ।
अनीक्षमाणो हरिणेक्षणान्तां
नितान्तमुच्चैः समतप्यतान्तः ॥ ६०

हर्षः प्रिया प्रार्थितसिद्धिजन्मा
विषादहेतुर्नृपतेर्बभूव ।
स्रोतस्वतीस्रोत इवानिवार्य्या
गच्छत्यजस्रं हि जगत्यवस्था ॥ ६१

विलुप्तहर्षो न तथा दिदीपे
सोऽन्तःप्रियाशोकतमोऽवलीढः ।
गतप्रकाशो दिवसावसाने
ध्वान्तैरिव च्छन्नतरोमहीध्रः ॥ ६२

तत्पुत्रकद्वन्द्वमसौ लताभि-
र्निबध्य दध्यौ मनसा द्रुतेन ।
गत किमेषा परिहासपूर्व्वं
समागमिष्यत्यधुनैव भूयः ॥ ६३

गता भवेत् स्वर्गसुखं स्मरन्ती
प्रियानुरागस्तु मनस्विनीनाम् ।
विशेषतः पार्थिववस्तु सोऽहं
नितान्तमेवैकरसोऽस्मि तस्याम् ॥ ६४

परस्परप्रेमरसानुविद्धं
लोलं मनो नाम परस्परस्य ।
सुदुर्लभं यत्त्रिदशालयेऽपि
तदावयोरप्यनपायमेव ॥ ६५

गता भवेद्वा सरलायताक्षी
सा बान्धवप्रीतिमनुस्मरन्ती ।
मनस्तु नार्य्या दयिते यथा स्या–
त्तथा न भावार्द्रतरं परेषु ॥ ६६

स्वयञ्च सा प्रेमरसैर्निषिच्य
त्यजेत् कथं मामविलक्षमेव ।
कृतेऽपराधं न तथाविधायाः
पराङ्मुखी स्निग्धजने प्रवृत्तिः ॥ ६७

पुरा स्मरस्यैव निदेशतः सा
विलासिनी मे स्पृहयालुरासीत् ।
इयन्ति वर्षाणि न चायताक्ष्या
स्तस्या न भावो मयि लक्षितोऽभूत् ॥ ६८

मूर्त्तेव कीर्त्तिः सुदती मघोन–
स्तां निर्व्विशङ्कस्मि न तेन सोढ़ः ।
तस्यानुकूल्ये सति नाम कोऽन्यो–
नयेदितस्तां मयि बद्धभावाम् ॥ ६९

मित्रं न तावन्न सहस्रनेत्रो–
गता नताङ्गी कतमः क्रमोऽयम् ।
श्रेयस्यनल्पे सुहृदोऽपि चेतो–
द्वेषोष्मणा तप्यतइत्यमिथ्या ॥ ७०

मामल्पभाग्यं सुरलोकलक्ष्मी—
र्दिगम्बरं प्रेक्ष्य नितम्बिनी सा ।
दैवोपपन्नात् समयातिपातात्
यथा किमत्यन्तमभून्नतैव ॥ ७१

इतीवमन्तर्गलदश्रुपूर—
श्चिराय राजा परिचिन्त्य किञ्चित् ।
अपारयन् धारणया नियन्तु—
मुच्चैस्तरं तद्व्यसनं रुरोद ॥ ७२

स निर्ययौ निर्ज्जितशत्रुपक्ष—
स्त्राता मघोनोऽपि रणप्रवीणः ।
अलक्ष्यवस्तुप्रतिबद्धलक्ष्यो—
वर्णान्तराक्रान्तमुखो मनस्वी ॥ ७३

प्रिया-विलासच्युतमेखलायाः
श्लाघाविशेषात् शकलं दधानः ।
अलक्षितायामपि पद्मपंक्तौ
मतङ्गजो नालमिवावशिष्टम् ॥ ७४

निर्व्विष्टपूर्व्वेषु निकुञ्जपुञ्जे—
ष्वसौ प्रियां प्रेमरसो विचिन्वन् ।
चलासु वल्लीषु विलासमस्या—
भूयोविलासी सदयं ददर्श ॥ ७५

लतासु हैमस्तवकासु हैमी—
र्व्यासज्य तृष्णातरलं स चक्षुः ।
क्व प्रस्थिता सुन्दरि, मां विहाये—
त्याभाष्य कामी परिषस्वजे ताः ॥ ७६

पुरा स्वयन्नान्तरवक्षलान्तः
स धातुरागैर्लिखितां विलोक्य।
आसादिता चण्डि, चिरात्प्रसीद
प्रसादये त्वां शिरसेत्यवोचत् ॥ ७७

अत्यन्ततृष्णातरलेक्षणाभ्या
मनन्यदृष्टिः स पिबन्नजस्रम्।
तां चित्रितां मत्तचकोरनेत्रे,
दासे प्रसीदेति बभूव नम्रः ॥ ७८

आलेख्यशेषामथ तां स कामी
चिराद्विनिश्चित्य गलज्जलाक्षः।
तदाकृतेर्दुर्लभदर्शनत्वात्
प्रायस्तदालोकसुखी बभूव ॥ ७९

अत्यन्तमालोकपथव्यतीते
लघौ पदार्थे प्रतिबिम्बमेव।
श्लाघ्यन्तदाकारसमर्पकत्वात्
लोले मनस्युल्वणशोकमग्नौ ॥ ८०

विलुप्तसर्व्वेन्द्रियवृत्तिरासीत्
मुहूर्त्तमज्ञातगुरुव्यलीकः।
मित्याप्रियाऽऽश्वासवचोभिरग्र्यैः
पुनः प्रबोधं नृपतिः प्रपेदे ॥ ८१

प्रिये प्रपश्येस्तनयं त्वयत—
दानीतमानीतमितीरयित्वा।
चिरादथोत्थाय विलम्ब्य भूयो—
मा तावदित्याशु पुरः ससार ॥ ८२

तुङ्गाद्रिमालिङ्ग्य समुन्नसन्तीं
विलोलचेतास्तड़ितं विलोक्य।
प्रियाकृतिप्रायतया स किञ्चित्
प्रकाशमानाननकान्तिरासीत् ॥ ८३

चण्डि, प्रसीदाऽसि चिरेण दृष्टा
स्निग्धाऽसि हैमी निकषेव रेखा।
इतीरथ यावत् प्रणतोऽनुनेतुं
तावद्विलीना जलदेषु विद्युत् ॥ ८४

चिरेण मूर्द्धानमथोन्नमय्य
प्रियामपश्यन् द्विगुणावसन्नः।
अस्तोत्तरां तत्र विलुप्तकल्पां
दृशं दधे निश्चलपक्ष्मपंक्तिम् ॥ ८५

बाष्पातिरेकादवरुद्धकण्ठ—
श्चिराद्व्यवस्थाप्य गिरं कथञ्चित्।
हृदि स्थितामखिरवर्णसंघं
प्रियां समाभाष्य नृपो बभाषे ॥ ८६

एतावतीमस्मि दशां त्वदर्थे
गतो न किञ्चिद्दयसे तथापि।
पद्मस्य युक्ता मृदुतैव कस्मा—
द्रसोद्भवस्याशनिसारता स्यात् ॥ ८७

तुषाररश्मिर्दहनं विषं वा
कदापि वर्षेदपि नाम कामम्।
तथापि रौक्ष्यं न भवेद्भवत्यां
कोऽयं क्रमो हन्त गताऽसि कान्ते ॥ ८८

अथापरस्याः ककुभः प्रवृत्त—
माघ्राय तद्भावसमानगन्धम्।
शीघ्रं परावृत्य ससर्ज दृष्टिं
ततोऽव्यलीकोत्तरमप्रलुप्ताम्॥ ८९

तत्वावलोपविकलः स महीरुहादीन्
पप्रच्छ वार्त्तमनिशं विवशः प्रियायाः।
इत्थं गतः कथमपि क्षितिपो ददर्श
प्राणेश्वरीमपि कृशां कुरुजाङ्गलेषु॥ ९०

स प्रसृतोर्य्यमनु हैमवतीत्यभिख्ये
स्नान्तीं सरस्यनुगतामपराप्सरोभिः।
भूयः प्रसृज्य नयने प्रणिधानपूर्व्वं
सैवेयमित्यतिचिरेण विनिश्चिकाय॥ ९१

स्नपिततरमिवास्याः कान्तमालोक्य वक्त्रं
शुचमलघयदल्पं तत्क्षते सोऽप्यनल्पाम्।
इयमिह परिदुन्वन् विप्रयोगोऽपि यूनोः
सुखपरिणतिरेकैकनिष्ठः चिणोति॥ ९२

इति चन्द्रवंशे महाकाव्ये पुरूरवोविप्रलम्भोनाम
तृतीयः सर्गः।

---

# चतुर्थः सर्गः ।

अथोर्व्वशी प्रेक्ष्य तथा क्षितीश्वरं
क्षमं रजोधूसरमुत्कमानसम् ।
मुहूर्त्तमानन्दलवं किलान्वभूत्
चिराय रूपं तु निनिन्द चेतसा ॥ १

विनिःश्वसत्येव वयस्यया मिथः
कृतानुयोगा हृदयप्रविष्टया ।
जगाद वाष्पोद्गमगद्गदाक्षरं
न बान्धवानां प्रणयो विलङ्घ्यते ॥ २

महीपतीनां प्रथमोधुरन्धरी-
वसुन्धरामम्बुधिविद्धमेखलाम् ।
प्रजानुरागाद्भुजवीर्य्यनिर्जितां
प्रशास्ति यः शस्तमनीषयाऽनिशम् ॥ ३

हविर्भिरुच्चैर्मधुरैर्हविर्भुजः
तपोभिरुग्रैः शशिखण्डशेखरः ।
प्रतर्पितो येन विशुद्धबुद्धिना
न कोऽपि दीनो भुवि यस्य दत्तिभिः ॥ ४

बलावलेपादवलोकयत्यपि
ज्वलत्प्रतापे बलसूदने च माम् ।
अनाथवद्दानवनाथलङ्घितां
न चक्षमे यः क्षतरक्षणोचितः ॥ ५

गुणावलीभिर्विनतोऽपि लङ्घयन्
प्रसिद्धदेवासुरसिद्धकिन्नरान् ।
स्वशक्तिमात्रार्जितमन्यदुर्लभं
तदासनं गोत्रभिदोऽप्यधिष्ठितः ॥ ६

शचीस्वहस्तेन सुरद्रुमाहृतै—
र्मुहुर्मुहुर्व्वारितभृङ्गलङ्घनैः ।
स्रजं प्रसूनैर्घटितां वृषोचितां
बभार योऽचोभमयेन वचसा ॥ ७ युग्मकम्

विलोलमाखण्डलभोगनिस्पृहं
नसिद्धगन्धर्व्वगणानुरञ्जितम् ।
मनोमदीयं मदनेऽप्यनादरं
बभूव यस्मिन्नतिभूमिमागतम् ॥ ८

अहं महेन्द्रस्य निदेशवर्त्तिनी
द्युलोकतो मध्यमलोकमागता ।
इयन्ति वर्षाणि निमेषवन्मुदा
सुखोषिता यस्य गृहे यशस्विनः ॥ ९

मया कथञ्चिच्चिरसञ्चितैः शुभैः
प्रलभ्य यत्प्रेम वधूसुदुर्लभम् ।
अलं गतैः सङ्गतया वयःफलै—
र्लघुर्द्युलोकोऽपि सुखेन विस्मृतः ॥ १०

विचिन्त्यमानोऽप्यतिचित्तजन्मनो-
रतोत्सवो यस्य मतोनतभ्रुवाम् ।
विलोलमाप्याययति चणेन नः
चिनोति चेतः प्रकरोति चोत्सुकम् ॥ ११

स चक्षयं श्लाघ्यतमोज्ज्वलोरसो-
रसः स वीरस्य शरीरवानिव ।
सुधांशुवंशैकधुरन्धरः क्षितौ
पुरूरवा नाम नरोत्तमोमतः ॥ १२

अहो युवा कोऽप्यतिमानुषक्रम—
श्चिराय धन्याऽसि सखीति तां प्रति ।
तदा वदन्त्योऽप्सरसोऽन्तरात्मना
तदीयसौभाग्यमिवाभ्यसूयिताः ॥ १३

ततः पिबन्त्यो नयनैस्तमङ्गनाः
रसालसैस्तृप्तिरसं न लेभिरे ।
व्रजन्ति शान्तिं न खलूर्म्मिमालिनो—
महोर्म्मयश्चन्द्रमसि स्फुरत्प्रभे ॥ १४

चलाऽपि लक्ष्मीर्यमवाप्य निश्चला
विलोक्य तं निश्चलविग्रहाः स्त्रियः ।
अमन्दमानन्दजवाष्पबिन्दुभि—
र्विभेदमापुः खलु चित्रवस्तुनः ॥ १५

स चापि तावद्विवशम्मुखच्छवि—
र्जवादुपेत्य प्रणतः प्रियां प्रति ।
प्रसीद चण्डि, प्रभुभिर्व्वितन्यते
सुखं न दण्डः स्वजनेष्विति ब्रुवन् ॥ १६

प्रभेव भानोर्गगनं, महीधरं
समुन्नता विद्युदिवाम्भसां निधिम् ।
शिखा वनाग्नेरिव, मामुपप्लुतं
पुनः समालिङ्गितुमर्हसि प्रिये, ॥ १७

इति ब्रुवन्तं परिरभ्य भामिनी
प्रहर्षबाष्पक्षणदूषितेक्षणा ।
उवाच राजन्, सुरराजशासनात्
गताऽस्मि भूयस्त्रिदिवं सुदुःखिता ॥ १८

प्रजानिषेकः किल वंशवर्द्धन—
स्तवोरुकीर्त्तिर्नृप, विद्यते मयि ।
प्रसूतया नाम पुनर्निशीथिनी
समं त्वयैका विहरिष्यते मया ॥ १९

ततस्तमाभाष्य ययुस्त्रिपिष्टपं
प्रकामगन्धर्वाः खलु देवयोषितः ।
सुधास्रुवाग्भिः प्रियया प्रबोधितो—
नृपोऽपि नातिप्रमनाः पुरीं ययौ ॥ २०

अथायुरित्यप्सरसो महीपते—
रजीजनत् पुत्रममित्रकर्षणम् ।
तमःप्रभेदे चतुरं निशाकरं
दिशो यशोभिः सुरभिं मुनेरिव ॥ २१

धनुर्भृतां दुर्मदशासनोचितः
स वानिनीप्रार्थितयौवनोदयः ।
गुणानवाप्तः प्रभवानुयायिनो—
न्यदर्शि पित्रोः सदृशोऽद्गुणस्तवः ॥ २२

प्रियागतं प्रेम नृपस्तदुद्भवे
विशेषतः श्लाघ्यगुणे सुते न्यधात् ।
परं न पित्रोः प्रियतानिदर्शनं
पराऽप्यसौ मूर्त्तिरिति प्रचक्षते ॥ २३

परेऽपि तस्यात्तनयाः प्रजज्ञिरे
महीपतेर्नाम महायशस्विनः ।
यदन्वयैर्भिन्नकुलैर्महीतल—
मलङ्कृतं व्योमवदृक्षसञ्चयैः ॥ २४

अथास्य दैवात् प्रकृतिर्विपर्ययं
जगाम शुद्धाऽपि विशुद्धजन्मनः ।
यथाऽऽत्मनः काऽपि दशा विनिर्म्मला
मनःप्रसङ्गान्नितरां व्यतिक्रमम् ॥ २५

सुदुर्लभोयस्त्रिदिवेऽपि भूपतेः
प्रजाऽनुरागस्तमसौ यदृच्छया ।
अमार्जयद्दुर्जयदुर्म्मदोदया—
ज्जनापवादं निजमात्मवानिव ॥ २६

करैरनेकैः परिपीड़िताः प्रजा—
गृहीतसाराः क्रशतां प्रपेदिरे ।
वितस्त्वदजस्रैः प्रचुरैर्हृतोदका-
स्तपे समस्ताइव सिन्धुयोषितः ॥ २७

प्रजावलीनां नृपतौ विशोषके
नकिञ्चनत्वं समभूत् क्रमावहम् ।
भुजङ्गमागामपराभिषङ्गतः
शिरःस्थरत्नव्यवरोपणे यथा ॥ २८

वियोज्य भर्त्रा भुजवीर्य्यदुर्म्मदो—
बलात् परेषां बुभुजे स योषितः ।
लतावलीं पादपसङ्गनिश्चलां
विकृष्य वातोत्पपयत्यपक्रमः ॥ २९

स पश्यतो भर्तृकुलस्य निस्त्रपः
सकज्जलास्रुस्नपितस्तनान्तराः ।
प्रवेपमाना भयमन्युविह्वलाः
समालिलिङ्गापनयः कुलाङ्गनाः ॥ ३०

तदीयवक्त्रं गलिताञ्जनास्रुभिः
परिप्लुतं शैशिरशर्व्वरीश्वरम् ।
विधुन्तुदोद्दामइवाम्बरान्तरा—
च्चुचुम्ब भूयः किल कज्जलाविलः ॥ ३१

महाऋषीणामपि सोऽतिलोलुपो—
जहार तावद्वसु यागसाधनम् ।
भवेत् कथं नाम विचारगोचरा
विचारमूढस्य मतिर्गुरुष्वपि ॥ ३२

प्रवाधमाने नृपतौ शुभोदयाः
ययुर्व्विलोपं धनसाधनाः क्रियाः ।
सएव वर्णाश्रमधर्म्मरक्षिता
कएनमेनोनिरतं प्रतीपयेत् ॥ ३३

विधुन्तुदस्येव विधुस्तथाऽंशुमान्
अविन्धनाग्नेरिव सिन्धुरुन्नतः ।
दवानलस्येव तरुव्रजोऽवशः
जनो विषेहेऽनयमस्य भूपतेः ॥ ३४

ततो वषट्कारविलोपदूषिते
मह्हीतले वारितमङ्गलोत्सवे ।
व्यतिक्रमोद्दीपिततीव्रमन्यव—
स्तदोपसर्गं त्रिदशाः समासृजन् ॥ ३५

पुराऽभवद्भूपतिरादराश्रदं
ततः प्रकोपस्य पदं दिवौकसाम् ।
प्रयोजनप्रत्ययजो हि कृत्रिमो—
लघी गुरूणां प्रणयोन तत्त्वतः ॥ ३६

सनत्कुमारोऽथ नयैकशेवधिः
पथसुतं बोधयितुं बुधात्मजम् ।
अवातरत्तत्प्रथमं नभस्तलात्
शरीरवत् पुण्यमिवाम्बरौकसाम् ॥ ३७

जनव्रजैः सूर्य्यइवेक्षितः क्षणं
द्युलोकतोमध्यमलोकमीरितः ।
प्रजाव्यलोकेन दयालुरित्यतो—
भुवस्तलं धर्म्मइवागतस्ततः ॥ ३८ युग्मकम् ।

अथाङ्गसारैर्नमयन् भुजङ्गमं
गुणातिरेकैर्व्वसुधां समुन्नयन् ।
मनुष्यलोकेऽप्यतिलोकविक्रमः
क्रमेण रम्यं चरणं मुनिर्न्यधात् ॥ ३९

अथार्घ्यपाणिस्तमनर्घ्यमादरात्
स दुर्म्मदः प्रत्युदियाय पार्थिवः ।
तथाविधानात्तपसाऽप्यचेतनाः
वशानुगाः कैव कथा शरीरिणाम् ॥ ४०

स्वहस्तदत्ते मणिकाञ्चनासने
निवेशयामास तमागतन्नृपः ।
स वस्तुमेनं मुनिरग्रतः स्थितं
स्थितेर्व्विभेत्तारमथोपचक्रमे ॥ ४१

इषानुरोधात् प्रथमेन वेधसा
विसर्ज्जितस्त्वां प्रति सम्प्रति स्वयम् ।
निबोध तावद्धितमप्यतन्त्रियं
जनः प्रभूणामुपदेष्टुमक्षमः ॥ ४२

कुले प्रसूतोऽसि मनोर्महात्मनः
प्रसिद्धशीतांशुसुतात्मजोऽप्यसि ।
श्रुताधिगन्ताऽसि गुरोरनन्तरं
यशःप्रकाशोऽस्यतिलोककर्म्मभिः ॥ ४३

तथापि कोऽयं मतिविभ्रमः पथि
न्यधाः पदं यद्विदुषां विगर्हिते ।
मनुष्यलोकादुपरिक्रमोचितो—
न खेचरो नीचपथेन गच्छति ॥ ४४

महाजनानां स्थितये महीपति—
र्न जातु तेषामपकारकारणात् ।
शमीतरोः साम्प्रतमग्न्युपप्लवो—
न सुन्दराचन्दनपादपादपि ॥ ४५

भवद्विधादुच्छ्रिरसो जनः सदा
धनं महीभ्रादिव नाम काङ्क्षति ।
भवान् स्वयञ्चेदपहारमिच्छति
च्युतस्तदा हन्त चिरन्तनो विधिः ॥ ४६

परोपकारैकफलः पराक्रमः
परापकाराय तवाधुना भवन् ।
दुनोति लोकं तड़ितां विवर्त्तनैः
सुदुर्जयो वज्रइव प्रवर्त्तितः ॥ ४७

तुषाररश्मिः किरणैः प्रतापये-
दपि स्वगन्धैः सुरचन्दनद्रुमः ।
हिमं दहेच्चापि तथापि युज्यते
न ते विकारः श्रुतपारदृश्वनः ॥ ४८

पुरा शरत्पार्व्वणचारुचन्द्रवत्
प्रमृष्टमुक्ताफलवत्तवोज्ज्वलम् ।
असंशयं यत्सदृशं तथा जनैः
प्रसन्नमासीदपकल्मषं मनः ॥ ४९

न तन्निताम्तप्रतिकूलगामिभिः
कृतं कृतान्तैर्न मनस्तवेदृशम् ।
प्लुतं तरङ्गैर्लवणोर्म्मिमालिनो-
दुनोति गङ्गाम्भइवाद्य मानसम् ॥ ५०

अतः किमन्यन्मतिमन्त्रणाग्रणी-
र्भवेज्जगत्यामयशस्करं वद ।
पुरा प्रजारञ्जनरूढ़िरञ्जिते
यदञ्जसा राजनि तद्व्यतिक्रमः ॥ ५१

विरक्तलोकस्य विलुब्धचेतसः
सदा समास्कन्दभयाकुलात्मनः ।
जनैर्व्विषस्यामृतशब्दवद्वृथा
विड़म्बना राजपदं प्रयुज्यते ॥ ५२

सदैव राज्ञः प्रतिषिद्धमुद्धतो-
यशस्य, दस्यूचितमाचरन् मुहुः ।
जनैर्म्महाराजइति प्रबोधित-
स्त्वमात्मना ब्रूहि कथन्न लज्जसे ॥ ५३

यशः समुच्चैश्चरितेन दूषयन्
सुदुर्लभं नाम यदृच्छया भवान् ।
अहो धनव्याजकलङ्कपङ्किल-
स्तथापि तावन्न कथं विबुध्यते ॥ ५४

बलेन किं यद्भयमावहेत् सतां
धनेन किं यज्जनयेच्च किल्विषम् ।
धिया च किं या सततं कुतर्कयेत्
किमात्मना योऽप्ययशः समाप्नुयात् ॥ ५५

यशोविपद्दारणधर्म्मकारणात्
धनार्जनं नाम मनीषिणाम् मतम् ।
करोति यत्तत्त्रितयव्यतिक्रमं
न तद्धनं तन्निधनं प्रचक्षते ॥ ५६

विशुद्धमार्गेण यदेव लभ्यते
तदेव लोके यशसे सुखाय च ।
अतोऽन्यथा सज्जननिन्दितन्तु त-
न्न जातु दस्योरिव तस्य शान्तये ॥ ५७

अपि प्रकामश्रुतवानसि स्वयं
त्वमेव बुध्यस्व विचार्य्य चेतसा ।
नराङ्गके खल्वपि काचभङ्गुरे
त्रिलोकराज्यार्जितसम्पदैव किम् ॥ ५८

करैः किमङ्ग, प्रकृतीः प्रपीड्य-
त्यनेकधा लोभवशंवदो भवान् ।
सहस्रसंख्यैरपि तैः प्रतापयन्
न भानुरर्च्चैः पदमश्नुते चिरम् ॥ ५९

यदाऽस्तमायात्यवशोविभावसु-
र्न रश्मयस्तस्य सहस्रसंख्यकाः।
अपि क्षमन्ते क्षणमात्ररक्षणे
तदेतदालोच्य हृदा सुखी भव॥ ६०

परं हरेः कौस्तुभरश्मिरञ्जितं
विशालवक्षःस्थलमप्युपेक्ष या।
सुखेन लक्ष्मीर्जनमन्यमाश्रयेद्-
बुधस्य तस्यां कइवातिनिर्भरः॥ ६१

इयं हि वीरक्षतजामृतोक्षिता
शिरोभिरेषां बहुशः पुरस्कृता।
यदा न धत्ते स्थिरभावमात्मनः
तदा कणनामपि निघ्नतां नयेत्॥ ६२

अथ त्रिलोकीज्वलितेन तेजसा
नयेन चोच्चैस्तरवस्तुतस्तु या।
स्थिरत्वमस्या नरनाथ, मन्यसे
सदध्वनः प्रस्खलसि स्वयं कथम्॥ ६३

भवद्विधानार्य्यनिवासदूषणै-
र्निसर्गसौभाग्यमनोरमा रमा।
स्वभावलोलत्वपवादमुद्रकै-
रमार्जनीयं गमिता किलाभवत्॥ ६४

स्वभावतः स्वादुरसोत्तराऽपि या
कलिन्दकन्येन्दुविनिर्मलोदका।
अवाप्य सा संश्रयदोषमुल्बणं
विचक्षणैर्नीलजलेव लक्ष्यते॥ ६५

त्रिलोकलक्ष्मीमपि भोक्ष्यसे बला-
द्यथापि लोभस्य न शान्तिमेष्यसि ।
अयं हि भोगैः परिवर्द्धते मुहु-
र्गदः कुपथ्यैरिव सान्निपातिकः ॥ ६६

असाम्प्रतं कामविधेयमानसो
यदन्यदुच्चैर्मलिनं समाचरः ।
चिणोति तत्ते यशसा समं वपु-
स्तथापि राजन्, न कथं विबुध्यसे ॥ ६७

उभौ नराणामपयस्तरस्विनौ
वदन्ति तावत् परिपन्थिनौ रिपू ।
विधेयतामेव वृथा तयोर्भवान्
स्वतन्त्रतामात्मनस्त्यवैति किम् ॥ ६८

न पूर्य्यते सिन्धुजलैर्निरन्तरं
प्रपूर्य्यमाणोऽपि यथा महार्णवः ।
तथैव काम्यैर्विषयैः प्रपूरणे
सदा कृतेऽप्यस्ति तयोर्न पूर्णता ॥ ६९

पदं विनिर्व्विश्य यदेकमादरात्
कृतार्थमात्मानमवैषि मानद ।
वृथैव तन्नाम मनोरथान्तर-
स्ततोऽपि भूयस्तुदतीह मानसम् ॥ ७०

अनिप्रभृत्यामरणान्तमेव वा
मनोरथौघैर्व्यथितोभवन्नपि ।
न जात्वमीषामवसानमेष्यसि
प्रमाथिनस्ते हि रिपोरनन्तराः ॥ ७१

मनोऽभिलाषाः हि गृहाश्रमोचिता-
स्तथाप्यमी खल्ववधिव्यपाश्रयाः ।
प्रहीर्ष्ठिरेषामृषिभिर्विगर्ह्यते
कलेवरस्थानिलमुख्यधातुवत् ॥ ७२

अहो शरीरान्तरचारिणं रिपुं
न चेद्विजेतुं जयशील, शक्यसे ।
कथं परान् जेतुमना न लज्जसे
गदीव साक्षाद्बलिनं सुदुर्ब्बलः ॥ ७३

अतोमितैर्भोगसुखैर्मनीषिण—
श्चिराय राजन्, परितृप्तमानसाः ।
समीहमानारिषगणे स्वनुत्तमं
मध्यगं च्यवन्ते न महात्मवर्त्मनः ॥ ७४

अथोपभोगं कलुषान्तरात्मना
प्रबुध्यसे चेत् पुरुषार्थमुत्तमम् ।
ततो निवृत्तव्यसनोयतात्मवान्
सतामवाच्यं विषयं समाश्रयेः ॥ ७५

ह्रियां यदुच्चैर्जनयेत् कुतूहलं
सुखप्रसादं सुहृदां विलोपयेत् ।
अपां विदधात्यहतौमथात्मन—
श्चरन्ति धीरा न तदार्य्यगर्हितम् ॥ ७६

वहन्नहो स्वामिपरम्परामसौ
मनस्युदारामवधीरितक्रमः ।
तुषानलैर्दग्धइवान्तरात्मना
सुखी कथं स्यादपचेतनेतरः ॥ ७७

मिथोऽनुतापैः परिहीनमानसो-
विलज्जितो लोकमुखावलोकने ।
तथापि मन्दः किल निन्दितं चर-
न्नहो ! वृथाऽऽत्मानमवैति निर्वृतम् ७८

खलव्रजस्त्वं नयतो महीपतिः
परःसहस्रव्यवसायमाश्रितः ।
न पूर्व्वलक्ष्मीमपि रक्षितुं क्षमः
कथं प्रवर्द्धेत ततोऽतिलालसः ॥ ७९

श्रियं विलुम्पेत् परलोकसम्पदा
वपुर्यशोभिः क्षिणुयादसंशयम् ।
जनापवादैर्विपदं समानयेन्
महीपतीनामनयः सुदारुणः ॥ ८०

तत्तात, प्रकृतिमितो निजां प्रपन्नः
स्वान्तावच्चरितमनुस्मरातिशक्रम् ।
गाम्भीर्य्यं परिहरतोऽपि चन्द्रपादै-
रम्भोधेः सलिलभरो न चातिवेलः ॥ ८१

इत्येवं वदति मुनौ तथेति राजा
जग्राह प्रसृतमना वचस्तदीयम् ।
अभ्यर्णे खलु विदुषामलोकगम्यं
निर्व्वेदद्रुतमिव बालिशस्य चेतः ॥ ८२

अङ्गज्योतिर्ज्ज्वलितमसकृद्व्योम कुर्व्वन्महौजा-
धाम प्राज्यं मुनिरथ ययौ कामचारः क्षणेन ।
प्रायः सन्तः परपरिचयं कारणात् संश्रयन्ते
हृत्ते तस्मिन् क इव चतुरस्तत्र तिष्ठेद्वृथैव ॥ ८३

मार्गो रजःपरिचितः क्षणमम्बुसिक्तो—
भूयोऽपि पांशुलइव प्रविलीनतोयः ।
दीप्ताग्नितप्ततरधातुरतिद्रुतोऽपि
यातः पुनः कठिनतामिव तद्वियोगात् ॥ ८४

दावाग्निदग्धविटपीव जलाभिषिक्तो—
भूयः स्वकोटरगतज्वलनावलीढः ।
तस्यानुशासनवशात् क्षणमात्रसौम्यो—
राजपुरेव स जगाम निजामवस्थाम् ॥ ८५
युग्मकम् ।

इति चन्द्रवंशे महाकाव्ये सनत्कुमारानुशासनोनाम
चतुर्थः सर्गः ॥ ० ॥

## पञ्चमः सर्गः ।

तस्य लोकपरिभावपङ्किलं
लौल्यमाशु पुनरप्यवर्द्धत ।
को हि दैवहतमप्युपक्रमै-
र्विक्रमैश्च परिरक्षितुं क्षमः ॥ १

तं प्रतीपयितुमन्यपार्थिवा-
वर्त्तमानमपि गर्हिते पथि ।
न प्रशेकुरतिशक्रविक्रमं
घोरदैवमचिरादलङ्घयत् ॥ २

अप्यनिष्टकरमिष्टपादपं
रक्षितोपवनतोऽधिकारवान् ।
उद्विपाद्य किल तत्पदेऽपरं
रोपयत्ययमसौ विधेः क्रमः ॥ ३

लोकवृत्तमतिवर्त्तिनोऽभव-
द्देह एव मुनिशापभस्मसात् ।
ब्रह्मचर्ययजनावनार्जितं
कर्म्म तस्य न तु धर्म्मरक्षितम् ॥ ४

अप्यलोकसुलभोरुविक्रमो-
दीक्षितः क्रतुविधावनन्तरम् ।
दुर्म्मदात् स खलु किल्बिषोत्सुको-
नान्वशोचि मनुजैर्दिवं गतः ॥ ५

तैस्तथापि परत: पुरस्कृते
कीर्त्तितः स धुरि कीर्त्तिशालिनाम् ।
तस्य खल्वतिशयोऽप्यतिक्रमः
स्वल्पएव गुणसंघतोऽभवत् ॥ ६

स्वर्गतस्य गुणगौरवं यथा
स्मर्य्यते न च तथा व्यतिक्रमः ।
शान्ततिग्ममहसः प्रकीर्त्त्यते
ध्वान्तभेदपटुता न तीक्ष्णता ॥ ७

आयुरस्य तनयोऽथ मेदिनी—
मन्वभुङ्क्त भुजवीर्य्यनिर्जिताम् ।
तत्र राज्ञि जनता यथोचितं
पूर्व्ववत् स्वपदमभ्यपद्यत ॥ ८

सत्ववत्यनयशून्यपार्थिवे
भास्करे समुदिते यथा पुनः ।
लोकवादविधिवाददेशिता
प्रादुरास सकलैव सत्क्रिया ॥ ९

गाढ़तप्तजनतामतिक्रमैः
स्वर्गतस्य पितुरुत्क्रमस्य सः ।
अम्बुवाह इव शस्यसम्पदं
दुर्गतैकविकलामनन्दयत् ॥ १०

पूर्व्वदोषपरुषां प्रजावलीं
सोऽनयत् सरसतां मधुर्यथा ।
शैशिरैः शिशिरविन्दुवर्षणै-
र्म्लानगुल्मतरुवल्लरीं भुवम् ॥ ११

तेजसैव रिपुमण्डलं वशी
ध्वान्तराशिमिव हव्यवाहनः।
नाजयन्न करवालवल्लरी
धूमराजिरिव तस्य वीतये ॥ १२

बद्धमूलबलयोऽविकत्थनः
सारवानतितरां समुन्नतः।
सोऽभवत् परबलेऽप्यचञ्चलः
शैलराजइव वातरंहसि ॥ १३

धर्म्मतः स परिपाल्य मेदिनीं
लोकमात्मसुकृतैरुपार्ज्जितम्।
भोक्तुमाप विबुधालयं कृती
लोभयन्नतितरां सुरस्त्रियः ॥ १४

द्यां गते पितरि शत्रुमर्दनो-
मित्रवर्गपरिभोगवर्द्धनः।
सैंहिकेयतनयासमुद्भव-
स्तत्सुतोऽथ नहुषः शशास गाम् ॥ १५

सोऽधिकारमधिगम्य पैतृकम्
अतशेत परिरक्षणैर्गुरुम्।
पूर्व्वमेव नरलोकदुर्लभैः
स्वैर्गुणैरलघुविक्रमैस्तथा ॥ १६

सोऽवजित्य निखिलान् महीपतीन्
घोरबाहुतरसा तरस्विनः।
यक्षपितृरगराक्षसादिकान्
शासनं स्वमखिलानकारयत् ॥ १७

वर्णजातमथ चाश्रमव्रजं
श्रौतमार्गनयनादपश्रमः ।
शङ्करोऽप्यतितरामसङ्करं
स्वस्वधर्म्मसुभगं चकार सः ॥ १८

दस्युसंघमभिभूय भूपति-
र्व्विक्रमैः करमृषीनदापयत् ।
पृष्ठतश्च पशुवत् स तानमून्
बाहुवीर्य्यविजितानवाहयत् ॥ १९

वर्षणैस्तमखिलेश्वरं तृषा
प्रार्थनीयकिरणैर्गभस्तिमान् ।
चन्द्रमाश्च कमनीयरश्मिभिः
श्लाघ्यवीर्य्ययशसं सिषेविरे ॥ २०

धार्म्मिकं न धनिनश्च दुर्म्मदाः
कामिनीं न कुलजां बलाद्धिटाः ।
दुर्ब्बलं न बलिनो बबाधिरे
तत्पदे न बलिनं विकत्थनाः ॥ २१

राश्रि रक्षति न कोऽपि धार्म्मिके
निर्धनो जनपदेष्वदृश्यत ।
भूपतेरनयदोषसम्भवं
सत्यमाहुरशिवं प्रजास्वपि ॥ २२

आत्मजां पितृगणस्य सत्वरा—
नर्थतोऽपि विरजां रजोऽतिगः ।
स त्रिलोकमहिलाकुलत्रपां
स्वीचकार सहधर्म्मचारिणीम् ॥ २३

दीक्षितः स हविषा हविर्भुजं
देववृन्दमथ सन्ततावरैः ।
दक्षिणाभिरपि ऋत्विजोऽपरा-
नर्थिनश्च दहनैरतर्पयत् ॥ २४

तस्य नाम महिषी महाशयान्
शुद्धवृत्ततनयानजीजनत् ।
श्रौतमार्गपरिशीलिता मतिः
प्रार्थितानिव शुभानुपक्रमान् ॥ २५

आयति व्यसननिर्जिते हरौ
देवसिद्धऋषिभिः किलार्थितः ।
मेदिनीमिव दिवं स लीलया
संबुभोज भुजवीर्यदुर्जयः ॥ २६

स्यन्दनेन हरिवर्णवाजिना
वाजिना च जलराशिजन्मना ।
दन्तिना च स नितान्तपाण्डुना
सञ्चचार मरुतामथाध्वनि ॥ २७

वासवस्य शयने समुज्ज्वले
वैजयन्तनिलयान्तरे नृपः ।
संविवेश सुरराजचामरै-
र्वीज्यमानचरणः समीक्षितम् ॥ २८

कल्पपादपतलप्रवालस्तरे
स्वर्णदीपुलिनसीम्नि सङ्गतः ।
अङ्गहारसुभगं सुराङ्गना-
लास्यमाश्च मुमुदे विलोक्य सः ॥ २९

पारिजाततरुवारितातपे
नन्दने तमरविन्दलोचनाः ।
लोभयन्ति ललनाः स्म नर्त्तनै—
र्दैविकैस्त्रिदशपं धृतस्रजः ॥ ३०

अञ्जलिग्रथितहस्तपल्लवा—
देवतास्तमुपतस्थिरे विभुम् ।
वन्द्यमानमहिमानमादरा—
त्तुष्टुवुश्च सुरवन्दिनः सदा ॥ ३१

वारिवाहगजराजवाहनं
वर्त्तमानमथ देववर्त्मनि ।
तं किलाप्सरसएत्य सादरं
वन्दनीयचरितं ववन्दिरे ॥ ३२

आविवेश तमथो विभूतिजो—
दुर्मदो यमवतामपश्चिमम् ।
दुर्लभः खलु तथाविधोजनो—
योमनागपि धनैर्न चाल्यते ॥ ३३

श्रीमदो हि विषमो मदान्तरात्
येन नाम सहसा गुणावली ।
उज्ज्वलाऽपि पुरुषस्य लीयते
दीपराजिरिव वातरंहसा ॥ ३४

अल्पका यदमितं विकुर्व्वते
वस्तुभिः क इव तत्र विस्मयः ।
चालयन्ति विषयाः प्रलोभनाः
सत्ववन्तमपि सत्ववत्पथात् ॥ ३५

एकवेणिमथ जातु सोऽभिकः
धूसरालकमिलन्मुखच्छविम् ।
अश्रुजालविकलां व्यलोकयत्
श्वासशुष्यदधरां पुलोमजाम् ॥ ३६

वासवस्य शशलक्ष्मणीयथा
क्षीणकान्तिमलिनामुपप्लवात् ।
कौमुदीमिव तथापि पश्यतां
कुर्व्वतीं सरसविस्मयं मनः ॥ ३७ युग्मकम् ।

प्रेक्ष्य मन्मथशराहतोऽभवत्
तां प्रभाविजितमन्मथप्रियाम् ।
सुन्दरी हि ललनाऽवलोकिता
लोलयत्यतितरां नृणां मनः ॥ ३८

तामदृष्टदयितप्रभाकराम्
म्लानवक्त्रकमलां मिथः सतीम् ।
सम्पिपासुरधरामृतं मदा—
दब्रवीन्नृपमधुव्रतो वचः ॥ ३९

वज्रमम्बुधरसुन्दरन्धनु—
र्वैजयन्तममरावतीन्तथा ।
एवमादिविषयं विपश्चितः
स्थानिधर्म्मसमयं प्रचक्षते ॥ ४०

ऐन्द्रमिन्दुवदने, पदं मया
प्रार्थितेन दिविजैरुपप्लुतैः ।
कल्पविद्भिररिनिग्रहार्थिभिः
प्राज्यबाहुतरसाऽद्य भुज्यते ॥ ४१

तेजसैव निगृहीततेजसः
पूर्व्वदेवनिवहानहं किल ।
काममभ्यभवमिन्द्रतां मयि
प्राप्तवत्यपि कथा न संयतः ॥ ४२

तावदिन्द्रविषयैर्व्वनिन्दिते,
त्वं यदि प्रथममेव कीर्त्त्यसे ।
वञ्चितोऽस्मि नियतं शुचिस्मिते,
दैवतैरपरभोग्यवस्तुभिः ॥ ४३

वल्लरीव तरुतः प्रियाद्धृते
शोभनाऽपि दयिते, न शोभसे ।
विद्युतः किमिव चारुताऽधिकं
यद्यसौ जलधरे न राजते ॥ ४४

हन्त सप्तभुवनैकसुन्दरं
माल्यमुल्लसितषट्पदावलि ।
नोपयुक्तमिव तिक्तमुज्ज्वलं
रूपमेतदपि ते निरर्थकम् ॥ ४५

तद्भजस्व दयिते, बृहद्भुजं
मामपीन्द्रमबले, त्वदाश्रवम् ।
एवमाशु खलु पूर्व्ववासवं
प्रस्मरिष्यसि रसादसंशयम् ॥ ४६

मानिनि, त्वमपि मुग्धमानसा
वञ्चिताऽसि नियतं विरिञ्चिना ।
यन्मयि प्रणययाचनाञ्जलौ
संदुनोपि वपुरब्जपेलवम् ॥ ४७

बाढ़मद्य भवती मया समं
सङ्गमय्य हृदयं रसालसम् ।
लप्स्यते फलमथान्ययोषितां
यन्न याति किल कल्पनापथम् ॥ ४८

एकएवनृपतिस्त्रिपिष्टपे
देववृन्दपरिवन्दितोदयः ।
सोऽहमिन्दुवदने, तवाधुना
नर्मशिष्यइति शर्म्म शाधि माम् ॥ ४९

यस्य लोकपरिभावितेजसः
स्मेरवक्त्रकथया न केवलम् ।
सुप्रसन्ननयनान्तवीक्षणैः
प्रार्थयन्ति दिविजाः कृतार्थताम् ॥ ५०

उन्नतेन शिरसाऽद्य पादयोः
सन्निपत्य पुरतः स याचते ।
प्रार्थ्यते हि दयिताऽनुकूलता
सा त्वयव्रसुलभोद्यता त्वयि ॥ ५१ युग्मकम् ।

काममद्य वशगा त्वमर्थये
त्वान्तथाप्यवनतः कृताञ्जलिः ।
मानिनी हि वनिता विमानिता
नैव जातु रतये मनस्विनाम् ॥ ५२

यः प्रसह्य परुषान्तरः स्त्रियं
लङ्घयत्यतितरां रिरंसया ।
एष वेद हृदयं न योषिता—
मात्मभोगपरिलालसो वृथा ॥ ५३

कोमलं कुलवधूजनस्य त—
न्मानसं प्रियजनातिलङ्घनात् ।
लीयते हुतभुजः समागमा-
दप्यनल्पसरसं हविर्यथा ॥ ५४

मानसं सरसमप्यनारतं
योषितामभिहतं प्रियोष्मणा ।
वारि वह्निपरिपक्वमुष्णु—
स्तापयत्यरुणतप्तरेणुवत् ॥ ५५

स्नेहपूर्णहृदयं मृगीदृश—
स्तप्यमानमतिविप्रियाग्निना ।
तापयेदतितरां न केवलं
स्वं वपुर्दयितदेहमादहेत् ॥ ५६

एवमुज्झितनयेन मानिनी
प्रार्थिताऽनुचितमश्रुबिन्दुभिः ।
इन्दुकान्तिमुखमाविलेक्षणाऽऽ—
प्लावयन्नलिनवन्नशीतलैः ॥ ५७

लोचनं विकचमेचकोत्पलं
त्रासलोलहरिणीक्षणान्तथा ।
तन्न सोढुमशकत् परिप्लवं
स्वोपमानपदवीमधिष्ठितम् ॥ ५८

वारितोऽपि बहुशो यदाऽभिकोऽ—
वारयन्न दुरितोन्मुखं मनः ।
तं गुरोर्वचनतस्तदा शनै—
र्मत्तचित्तमवलेत्युवाच सा ॥ ५९

कामसूत्रमधिगम्य तीर्थत-
स्त्वं किलासि रतिधर्म्मकोविदः।
योषितां हृदयविच्च काङ्क्षति
त्वां न का चतुर, वामलोचना॥ ६०

यानमाशु ऋषिवाह्यमुज्ज्वलं
सोऽधिरुह्य यदि मां प्रपद्यसे।
नूनमस्मि वशगा तवैष मे
प्रश्रयः स भवताऽनुमन्यताम्॥ ६१

तन्निपीय वचनामृतं मितं
श्रोत्रपेयमतिमात्रसुन्दरम्।
कामसुत्कमनसा मृगीदृशां
कीर्त्तये प्रतिविशुश्रुवानसौ॥ ६२

अस्तहेतुमपि सोऽन्वमंस्त तत्
सङ्गमाय हृदयङ्गमं लघुः।
कामिनामपरकामिनीजने
सा स्पृहा न परिमृश्यते यया॥ ६३

सन्निपात्य स ऋषीनपक्रमः
सन्निपातविक्षतिर्यथाऽस्थिताम्।
आदिदेश निजयानवाहने
मुग्धबुद्धिरिव कालचोदितः॥ ६४

सत्वरं जिगमिषुः पुलोमजां
कालसर्पमिव कुम्भसम्भवम्।
यानशीघ्रगतिमीप्सुरुद्धतः
पूर्व्वदेववदसौ पदाऽस्पृशत्॥ ६५

तस्य घोरमपचारमीदृशं
नो ममर्ष सुतराममर्षणः ।
अप्यशीतकरपादलङ्घिता
तत्शिला ज्वलति का कथा नृणाम् ॥ ६६

क्रूरबुद्धिरसि मूढ़, दुर्मते,
मा चिरेण भव तद्बिलेशयः ।
इत्यमर्षविवशो महानृषि—
स्तं शशाप मदमत्तमानसम् ॥ ६७

सोऽपतच्च सहसा दिवस्तला—
त्तत्क्षणोपनतभोगिविग्रहः ।
कीर्त्तिलोपिमहदत्ययोमहान्
सद्यएव परिपच्यते सताम् ॥ ६८

पुण्यलक्ष्यमपि रक्षणायत-
न्नालमास फलदो व्यतिक्रमः ।
बाधके हि बलवत्युपस्थिते
साधकस्य शतमप्यनर्थकम् ॥ ६९

आस्थिते खलु मणौ विरोधिनि
प्रस्फुरन्नपिच हव्यवाहनः ।
लग्नकक्षमपि दग्धुमक्षमः
प्राप्नुणोति हि घनो दिवाकरम् ॥ ७०

अभजत सुतमस्य राज्यलक्ष्मीः
क्षितिपतिमौलिसमर्चपादपद्मम् ।
गुणगणविवशेव तस्य सूनो—
नहि पुरुषे निवसत्यसौ प्रमत्ते ॥ ७१

श्रुतसमधिगमादुदारचेता-
स्त्रिदिवगतेऽपि पदे निवृत्तलौल्यः ।
यतिरिति तनयः किलाग्रजातो-
विमलमतिर्यतिधर्म्ममाश्रितोऽभूत् ॥ ७२

तदखिलभुवनान्तरालकीर्त्तिः
कविरिव नीतिविदामुदारचेताः ।
विनयपरवशो ययातिरासी-
त्तदनुजनिर्गुणतोऽग्रजोऽपि राजा ॥ ७३

इति चन्द्रवंशे महाकाव्ये नहुषवर्णनोनाम
पञ्चमः सर्गः ॥ ० ॥

———

## षष्ठः सर्गः ।

स प्राप्य राज्यमधिराजपदाभिधेयः
प्रह्लादयन् सकललोकमनः शशीव ।
शास्ति स्म शासनवशो रजसा विमुक्तो–
मुक्ताफलामलयशःस्रजमाहरिष्यन् ॥ १

प्रक्षालनाय नयनाविलकज्जलाना-
मस्राम्भसां पृथुकणैः प्लुतये स्तनानाम् ।
तद्बाहुवीर्य्यमनयं ध्रुवमुद्धरिष्य-
दाचार्य्यकं समकरोद्रिपुसुन्दरीणाम् ॥ २

यज्वा स एव यजमानगुणव्रजोऽभू–
द्राजा प्रजानिकररञ्जनतः स एव ।
मित्रं सएव विपदन्तविधानदक्षः
साक्षादमित्र इह निन्दितवृत्तभाजाम् ॥ ३

आखण्डलः स्वभुजदण्डविनिर्ज्जितारिं
क्ष्मापालमौलिमणिरञ्जितपादपीठम् ।
तं प्रत्युदारयशसं स्वयमात्मवन्तम्
अतान्तलोलहृदयः सदयो बभूव ॥ ४

तद्दिव्यकाञ्चनमुदञ्चितकिङ्किणीक-
मुत्तुङ्गमुत्तमतुरङ्गमसुप्रताकम् ।
तस्मै स भास्वरमनोऽतिगवेगवन्तं
कान्तं रथं नृपतये मघवा दिदेश ॥ ५

तेन स्फुरद्रुचिरसौ स्फुरता रथेन
खे नैव भानुरनिशं विचरन्महौजाः ।
दुर्दर्षश्चास समरेषु नृपः परेषां
कोलङ्घयेदनलगोज्ज्वललोहपिण्डम् ॥ ६

अल्पेतरद्युतिरनल्पबलः स राजा
स्वल्पेन तेन दिवसेन भुवं व्यजेष्ट ।
ज्योतिर्घनेन सहसा प्रसरेद्दिगन्तं
वह्निः क्षणात् सपवनो भुवनं दहेच्च ॥ ७

राजा जगाम गहनं सुरभावभीरु-
रल्पानुयायिपरिमेयपुरःसरोऽसौ ।
आकर्णकृष्टनिशितोरुशिलीमुखैः स्वैः
प्राणान् करानिव हरन्मृगयूथपानाम् ॥ ८

एकः स जातु गजराजपदानुगः सन्
भूयः पिपासुरवशः किरणैः खरांशोः ।
पद्माकरान्वितमनुन्नतकुञ्जपुञ्जं
पानीयमीप्सुरगमत् कमपि प्रदेशम् ॥ ९

व्यक्तातिमुक्तपरिसङ्गतचूतसंघं
भृङ्गव्रजोत्पतनसुन्दरसिन्धुवारम् ।
रक्तै रशोकनिकरैर्मकरध्वजस्य
राशीकृतैरुधिरदिग्धशरैरिवाप्तम् ॥ १०

उच्चावचैर्विकसितैः प्रसवैस्तरूणा-
मल्पेतराल्पतरकान्तिमयैः समन्तात् ।
व्योम ग्रहर्क्षनिकरैरिव रोचमानैः
सान्द्रान्तरालरमणीयमुदारगक्षम् ॥ ११

पुष्पेषु कार्मुकचयेष्वथ पुष्पकेतो:
सम्पर्कमग्रमभिलक्ष्य शिलीमुखज्या।
चक्रे ध्वनिं यमसुना मनुजान्तरेषु
लब्धावकाशकुसुमेषुनिदेशबन्दम्॥ १२

चूतांकुरप्रणयिभिर्मधुमत्तचित्तै:
पुंस्कोकिलैरविरलं मधुरञ्च किञ्चित्।
कूजद्भिराशु परिमुग्धविलासिलोकं
भावार्द्रवागधिकरोत्यपरस्य चित्तम्॥ १३

छायातरुव्रजनिवारितवासरोष्णं
मन्देन चन्दनवनोद्भवमारुतेन।
आमोदितं सुरभिमासनिदेशहेतो:
शक्ते परागपरिरञ्जितशाखिपुञ्जम्॥ १४ कुलकम्।

तत्र क्षणं क्षितिपतिः सरलद्रुमाणां
निश्वासलेशवहगन्धवहप्रतीतः।
कादम्बकेलिलुलिताम्बु सरः प्रपश्य-
न्नम्भोजरेणुपरिपिञ्जरवारि तस्थौ॥ १५

विद्युल्लतोपमलसद्द्युति रत्नभाभि-
राकर्णयन्नमिव हन्तचापखण्डम्।
आलोकयद्बलनिसूदनतुल्यकान्तः
कन्याकुलं तुहिनकान्तिकुलप्रदीपः॥ १६

स्थूलेन्द्रनीलनवशाद्वलराजिरम्ये
गुल्मादिसंकुलतरे कलधौतकल्पम्।
मेघावृतस्य नभसो निभृतप्रदेशे
तारासहस्रमिव लब्धतरप्रकाशम्॥ १७

वल्लिव्रजं किसलयावलिशोभमानं
पूर्णेन्दुबिम्बनिचयं मृदुवीचिभिन्नम् ।
लोलेक्षणच्छलमधुव्रतपातरम्यं
ताम्रारविन्दमथवा मकरन्दगन्धि ॥ १८

एकान्ततः सवयसां समवायतो वा
पुंसां प्रवेशकलुषेतरदेशतो वा ।
विश्रम्भभाषितशतं श्रुतिमात्रपेयम्
अन्योन्यमेत्य विदधन्मधुराक्षराढ्यम् ॥ १९ विशेषः

काचिद्विशेषमधुपानवशात् प्रमत्ता
स्वां प्रेयसीमपि रसात् परिपाययन्ती ।
लीलाद्विरेफपरिलीढसहस्रपत्रं
संप्लावयन्त्यतितरां जहसेऽपराभिः ॥ २०

अन्या कलाक्षरमुदञ्चितपञ्चमेन
गीतेन कोकिलवधूरवधूतचित्ताः ।
शश्वत् स्वरानुकरणे विफलोद्यमत्वात्
बाला चकार खलु किन्नरचारुकण्ठी ॥ २१

किं चण्डि, दण्डमतिमात्रमसि प्रदातुं
स्निग्धे जने व्यवसिताऽसि तवेतुरदीर्घ्यं ।
मुग्धा सखीं प्रणयकोपवशाद्विलीनां
निश्चित्य पुष्पितलतामपराऽऽलिलिङ्ग ॥ २२

स्निग्धप्रसन्नविमलाभिरथाबलास्ता-
स्तं दृष्टिभिर्मृगदृशश्चक्षुर्युवानम् ।
को नाम दृप्तकरणो हरिणेक्षणानां
लीलाविलोकनमतिक्रमितुं समर्थः ॥ २३

इन्दीव कान्तविलसत्कमलावलीनां
भूपः सकाशमुपगम्य विलासिनीनाम्।
तस्थौ चणं स्थितिमतां प्रथमो विलुप्त—
वेद्यान्तरस्तदवलोकननिश्चलाङ्गः॥ २४

अन्यासु पुष्पितलतास्विव कल्पवल्ली
रम्यासु लोकललनास्विव देवकन्ये।
सोऽपश्यदीप्सिततमे सविशेषकान्ते
द्वे तत्र चन्द्रशकले इव तारकासु॥ २५

एकामतीव कमनीयतमां महीपः
पप्रच्छ का त्वमरविन्दमुखि, स्वकान्त्या।
रेखा तुषारकिरणस्य यथा धरित्रीं
साक्षात् प्रकाशयसि गाढ़तमोवलीढ़ाम्॥ २६

पश्य प्रभाभिरिव धौततरा तवेयं
श्यामा वनावलिरतीवतरां चकास्ति।
गङ्गातरङ्गकलितेव कलिन्दकन्या
वैदूर्य्यराजिरिव रत्नमरीचिभिन्ना॥ २७

देवापगेव लतिकेव महौषधीनां
स्निग्धप्रसादविमलोत्तरचारुकान्ति।
श्लाघ्यं समुज्ज्वलवपुर्गुणवृन्दमुच्चैः—
र्बाला विलोचनरुचा खलु वर्द्धयन्ती॥ २८

स्निग्धारुणच्छुरितचारु नखप्रभाभि—
रापूर्य्यमाणविवराङ्गुलि पादपद्मम्।
लिप्तान्तरञ्च करभोरु, तवादरेण
संवाहयत्यनुचितं गमितेव केयम्?॥ २९ युग्मकम्।

उद्धृत्य मामवनिमध्यगतामिवैकां
रत्नावलीमतिकृपार्द्रमनाः स साधुः।
अह्नाय निर्वृतिमगात् परमां भवन्ति
सन्तोऽनुगृह्य सुखिनो व्यसनोपतप्तम्॥ ४२

आक्रुश्य मामतितरामसुरेन्द्रपुत्री
भूयोबभूव कलुषव्यथितान्तरात्मा।
क्रोधानलव्यपगमे खलु मानवाना—
मन्तः स्फुरत्यलघुबाष्प इवानुतापः॥ ४३

मन्योः कथञ्चिदुदयादवमत्य किञ्चि—
ल्लोकः सखीन् समवलुप्तविवेकशक्तिः।
अह्नाय तद्व्यतिकरोपनतानुतापै—
र्निर्धूमपावकशिखिभिः परिदह्यतेऽन्तः॥ ४४

तादृग्विनाननमुदग्रमसोढपूर्वं
सख्या विसोढुममशक्यं न मिथः सखीनाम्।
प्रेम्णः किलातिकुटिलाहि विनैव हेतोः
किं कारणे स्फुरति रोषभरोऽभिमानः॥ ४५

भूयस्तथा न तु परस्य यथाऽल्पमात्रं
स्निग्धस्य रौक्ष्यमविसह्यमुदाहरन्ति।
नातिप्रचण्डकिरणोऽपि तथा निदाघे
रेणुर्यथा व्यथयते ततएव तप्तः॥ ४६

साक्षात् ज्वलन्तमपि हव्यवहं कदाचि—
ल्लोकः क्षमेत ननु धारयितुं कराभ्याम्।
तैलन्तु दाहमधिकं विदधाति तस्य
ज्वालाभिरभ्युपचितौष्ण्यमथ क्षणेन॥ ४७

तस्यां विरक्तहृदयामनुनेतुकामा
साम्नाऽऽकुलाऽभवदियं दनुजेन्द्रपुत्री।
तातो हि नाम सततं व्यसनातिपाताद्—
रक्षत्यचिन्त्यमहिमाऽखिलपूर्व्वदेवान्॥ ४८

प्लुष्टं यथा हिमऋतुव्यतिषङ्गमात्रात्
पङ्केरुहव्रजमतीव वसन्तकालः।
तीव्राभिषङ्गविलसत्प्रलयावलुप्तं
लोकं यथा विधिरुपेक्षितत्राणकर्त्ता॥ ४९

दावं विशालदवहव्यवहप्रसङ्गै—
र्मेघो यथाऽमृतरसैः प्लुपितं समन्तात्।
घोरज्ज्वलत्त्रिदशशस्त्रविलुप्तसंज्ञं
सञ्जीवयत्यसुरराजकुलं पिता मे॥ ५० युग्मकम्।

इतुरङ्गतं स्वमपहाय महानुभावा
मद्दास्यमाशु चकमे किल मे वयस्या।
लोकोपकारविषये परिकल्प्यते चेम्
मेघाम्बुवत् पतनमप्यभिनन्दनीयम्॥ ५१

साक्षादनङ्ग इव सुन्दरमङ्गमाप्तो—
देवाङ्गनाऽभिलषणीयविशेषकान्तिः।
अस्मद्विलोचनसमर्जितपुण्यपुञ्जै-
र्नूनं वनान्तरमितो ललनामनस्तः॥ ५२

स्फूर्ज्जद्विशालभुजगेन्द्रभुजो महौजा-
ब्राह्मीं गिरं वदसि मेघगभीरकण्ठः।
रूपेण वेशनिकरेण च भासि साधो,
राजेव कस्य तनयोऽसि कुतोऽसि कस्त्वम्॥ ५३

एकः शरासनकरो ननु कस्य हेतोः
प्राप्तोऽसि वा मम विलासवनं विलासी।
आचक्ष्व पङ्कजदलाक्ष, विलासिनीषु
प्रीतोऽसि चेदिति मुदैनमथान्वयुङ्क्त॥ ५४

तामब्रवीन्नरपतिः शृणु चेत्तवास्ति
कौतूहलं सुकलकण्ठि, ययातिरस्मि।
राजा सुधाकिरणवंशकरः पृथिव्यां
लोकद्वयैकनृपतेर्नहुषस्य सूनुः॥ ५५

पूर्व्वाश्रमं समधिगम्य समस्तवेदान्
प्राप्तोऽहमाप्तवचसः सरहस्यकल्पान्
गुर्व्वाज्ञया जलधिमेखलया निबद्धा--
मुर्व्वीं विशालनयने, ननु पालयामि॥ ५६

अभ्यागमन्तुरगनागशतैर्वनान्त--
माखण्डलोपनतजैत्ररथाधिरूढ़ः।
सौभाग्यतस्तु गजराजपदानुसारी
प्राप्तो विलासवनमद्य वनाङ्गवल्याः॥ ५७

बालप्रवालनलिनेन्दुमनोरमाङ्गी-
मालाप्य यन्मुहुरखेदयमात्मना त्वाम्।
तत् क्षम्यतां सितकरप्रतियोगिवक्त्रे,ऽ-
नुज्ञायतांश्च ननु सम्प्रति साधयामि॥ ५८

सख्याऽनया सममसौ वशगा तवाहं
दासीसहस्रसहिता च रसार्द्रचेताः।
भर्त्ता सखा च भव मे न खलु प्रपन्नां
बालामुपेक्षितुमहो बलिनः क्षमन्ते॥ ५९

इत्युदितक्रमं मधुरमचरमालपन्तीं
प्रत्यब्रवीदवनिपालपतिर्मृगाक्षीम् ।
चत्रान्वयस्त्वहमृषिपुत्रि, न तेऽहमर्हं—
स्त्वय्या इवापकलुषोऽपि जघन्यवर्णः ॥ ६०

तल्लोकनिन्द्यमरविन्दमुखि, प्ररूढं
भावं कृशोदरि, निजं त्यज प्रसीद ।
श्लाघ्यः सदा दिविषदामपि लोभनीयो·
लाभो न मद्विधजनैः सुलभो भवत्याः ॥ ६१

भूयोऽप्युवाच नरपालमरालकेशी
राजन्, क्षमानुतनयेन्दुसुतान्वयस्त्वम् ।
न क्षत्रियोऽसि परमर्षिकुलप्रसूतो—
मत्पाणिपीड़नविधौ कथमस्यनर्हः ॥ ६२

किं वा विचारयसि, मां त्वयि साभिलाषां
नूनं त्वमप्यभिलषस्यनुरक्त एव ।
अन्योन्यरक्तमनसोः प्रणयो हि यूनोः
स्यादक्षितो निकषकाञ्चनरेखयोर्व्वा ॥ ६३

राजन्, स्मरस्यवटमध्यगतां दयालु—
स्तीव्राभिषङ्गविकलां मृगयाविलासी ।
रोमाञ्चकञ्चुकतनुः किल वेपमानां
मामुद्धरिष्यसि मदीयकरावलम्बी ॥ ६४

दैवेन मन्मथमनोरथवर्त्तिनाऽभू—
द्वृत्तः स नौ ननु करग्रहएव पूर्व्वम् ।
भूयोऽन्तरं तदिह नास्ति विचारणायाः
निष्ठां गते न खलु कर्म्मणि सा विधेया ॥ ६५

कोवाऽपरस्त्वदुपयुक्तमिमं करं मे
लोकः स्पृशेदपरलोकगतिक्रमायाः ।
दिव्यौषधिर्हिमकरोद्भवपक्षपातात्
धाम्ना ज्वलन्तमपि काङ्क्षति नांशुमन्तम् ॥ ६६

बाले, परेण गुरुणा परवत्यसि त्वं
मा साहसं कुरु चकोरमनोहराक्षि, ।
एवं ब्रुवाणमवनीपतिमब्रवीत् सा
शङ्का व्यपैतु ननु दास्यति तातएव ॥ ६७

विज्ञापितोदनुजराजगुरुस्तयैवं
शापात् कचस्य नरनाथकृताभिलाषाम् ।
तामात्मजां समधिगम्य समाधियोगाद्–
राजानमेत्य निजगाद कृतप्रसादः ॥ ६८

एनां मनोभवनिदेशवशात् सकामां
त्वय्यप्रमेयगुणलङ्घितराजसंघे ।
प्रत्तां मयैव विधिनाऽधिकसङ्गताङ्गीं
पाणौ गृहाण गृहधर्म्मविधित्सया त्वम् ॥ ६९

सेयं तवास्तु महिषी च सखी च राज–
न्नाखण्डलस्य विधुखण्डलघुः शचीव ।
भूयोऽनया सुरवधूत्तमकान्तिमत्या
स्वर्लोकदुर्लभमितः सुखमाप्स्यसि त्वम् ॥ ७०

एषा च वक्त्रविजितेन्दुसहस्रपत्रा
दासीसहस्रसहिता दनुजेन्द्रपुत्री ।
कामन्त्वेव भविता शयने तथापि
नैनां ह्वयेरिति सदा भव सावधानः ॥ ७१

गृह्णन् ममैव वचनान्नृप, मत्प्रसूतां
पत्नीमितो न खलु मङ्गरशङ्कितः स्याः ।
पश्चाद्य मङ्गलमहं तपसः प्रभावा—
दङ्गाय सर्व्वमवनीश, शमं नयिष्ये ॥ ७२

अथ दनुजगुरूणामाश्रवः श्रीनिकेतः
श्रियमिव मनुजेन्द्रश्चन्द्रवद्वक्त्रलक्ष्मीम् ।
विधिवदवनिपालः पाणिमूलेऽग्रहीत्तां
सुरवनइव जातां वल्लरीं पारिजातः ॥ ७३

उपवनइव रम्ये तां प्रवालाधरोष्ठीं
व्रततिमिव महीपः सन्निवेश्यावरोधे ।
स्तवकवदभिरामश्रोस्तनां ताम्रहस्तां
मुदमगमदनल्पां भृङ्गशब्दां कृशाङ्गीम् ॥ ७४

शर्म्मिष्ठामवनिपतिः प्रियानुवर्त्ती
प्रस्थाप्य स्थितिविदुषामथाग्रगामी ।
तत्पादाहतिविकसद्दिशोकवृन्दे
वन्दीवत् कुसुमवने परं बभार ॥ ७५

इति चन्द्रवंशे महाकाव्ये देवयानीपरिणयो नाम
षष्ठः सर्गः ॥

———

## सप्तमसर्गः ।

अथादितिः कश्यपतो महर्षे-
रुपेन्द्रसंक्रन्दनवत् सुतौ द्वौ ।
काले ययातेः किल देवयानी
यदुं तथा तुर्व्वसुमप्यसूत ॥ १

आमोदमादाय वनस्थलीना-
मुपस्थिते चन्दनगन्धवाते ।
पुंस्कोकिले कूजति पञ्चमाढ्यं
गुञ्जद्द्विरेफे च निकुञ्जपुञ्जे ॥ २

बालारुणप्रख्यकरप्रवाला
तुङ्गस्तनाग्रस्तवका लतेव ।
नवं वयः प्राप्य रराज बाला
स्त्रीधर्म्मिणी दानवराजकन्या ॥ ३ युग्मकम्

कामस्य साक्षादिव षष्ठमस्त्रं
विलोकयन्ती विपिनान्तलक्ष्मीम् ।
इतस्ततस्तत्र चचार बाला
प्रसूनमाला वनदेवतेव ॥ ४

तावत् निषिद्धानुचरो विलासी
वनान्तलक्ष्मीमवलोकयिष्यन् ।
यदृच्छया तत्र जगाम राजा
[illegible] ॥ ५

सख्या वसन्तेन समं वनान्ते
शरीरिणं काममिव स्फुरन्तम् ।
तमादरान्मन्थरलोचनाभ्यां
पपौ मृगाक्षी नितरामतृप्ता ॥ ६

लोलान्तराऽभूद्धृदयसैव पूर्व्वं
नियन्तुमात्मानमथो न शेके ।
प्रागेव सिन्धूर्म्मिरपास्तधैर्य्या
चन्द्रोदये किं पुनरुत्तरङ्गा ॥ ७

आत्मानमत्यन्तविलुप्तसंज्ञ-
मुपस्थितं लोकपतेः पुरस्तात् ।
तदेकतानत्वमिव प्रपन्ना
न धीरनेत्रा सहसा बुबोध ॥ ८

निष्पन्दभावं गमिता मुहूर्त्त-
मस्पन्दितैः संवलितैर्नतैश्च ।
विलोचनैर्बालमृगाक्षिकल्पै-
रभाषमाणाऽपि तमाबभाषे ॥ ९

विलोचनं लोचनतो नृपस्य
भ्रूकुञ्चनेनाधिकलोभनीयम् ।
चिरादिव ज्ञातसमागमं सा
व्यानम्रमानम्रमुखी जहार ॥ १०

अवाङ्मुखी भूतलमालिखन्ती
सरोजताम्राङ्घ्रिनखाग्रभागैः ।
ह्रीसन्निवेशादवसन्नकण्ठी
कथञ्चिदाख्यन्मनसोऽभिलाषम् ॥ ११

रहस्यदोषां विहृतानुरागा-
मिन्दीवराक्षीमरविन्दनेत्रः ।
तामेकनारीं प्रति निर्व्यपेक्ष-
स्तदेकचित्तोऽपि जगाद भूपः ॥ १२

कुलेन शीलेन वपुर्गुणेन
लावण्यमय्या च विशेषकान्त्या ।
अनिन्दिता सुन्दरि, भामिनीना-
मवाङ्मुखत्वैकगुरुस्त्वमेका ॥ १३

श्लाघ्यं लसत्स्निग्धविलोचनाभ्यां
सुधाप्रतिद्वन्द्विकथं मुखन्ते ।
कथं मृगाङ्को नु जडोऽनुकुर्य्या-
ल्लीलाकटाक्षस्य सदा परोक्षः ॥ १४

गुणैरलं सुन्दरि, रूपमेतद्-
वशीकरोत्येव जनं क्षणेन ।
दूरादजिघ्रन्नपि चारुगन्धं
पर्य्युत्सुकस्तामरसेन लोकः ॥ १५

उपस्थितं रत्नमिवाप्रयत्नात्
को याचमानामविलुप्तबोधः ।
प्रत्यादिशेत् प्रार्थितदुर्लभां त्वां
न चेत् पराधीनरुचिर्मनुष्यः ॥ १६

त्वमेव जानासि पुरा सुरारेः
शुचिस्मिते, तेन पुरोहितेन ।
कृतप्रतिज्ञोऽस्मि कृतान्तनुन्नो-
नाकारयिष्ये शयने मम त्वाम् ॥ १७

यथस्तुरतानां पथि सन्निवेशं
विश्राम्यतीनां करणीयमाहुः।
सोऽहं कथं नाम निसर्गघोरे
पदं करिष्ये स्वयमेव मार्गे॥ १८

समस्तभूतेषु नृपः प्रमाणं
कथं प्रतिज्ञां वितथां स कुर्य्यात्।
विलङ्घयेच्चेत् समयं महीपः
परस्तदा कः परिपालयेत॥ १९

अप्येकनिघ्नस्य जनस्य तावत्
स्वच्छन्दता नास्ति यदि स्वकृत्ये।
यत्सत्यमुच्चैस्तरपारतन्त्र्यम्
कष्टप्रकारो मनुजेश्वरत्वम्॥ २०

क्रूरैर्हतोऽहं पुरतः कृतान्तै—
र्न कामयन्तीमपि कामये त्वाम्।
सा बद्धभावा मयि वञ्चिताऽसि
विरिञ्चिना चञ्चललोचने, त्वम्॥ २१

ततो नरेन्द्रं दनुजेन्द्रपुत्री
विलोलनात्मन्यवलुप्तचित्ता।
तथ्यन्तमन्तः परितप्यमाना
चिराय लीलाचतुरा बभाषे॥ २२

एकं व्रतं पालयतो विलोपो—
व्रतान्तरस्यापि भवेत्तवेवम्।
धर्म्मापचारेण तु चर्य्यते यो—
धर्म्मं प्रशंसन्ति न तं महान्तः॥ २३

कोवा त्वयाऽर्थी न कृतः कृतार्थ—
स्त्रिलोकराज्येऽपि कृताभिलाषः।
तन्मा यशो लङ्घय दुर्लभं त—
न्मामर्थिनीमर्थवतीं विधेहि ॥ २४

या कामिनी कामयते च गम्या
रहस्युपारूढ़मनोरथार्त्ता।
पुंसः समर्थस्य निराक्रियाऽस्या—
दर्पात् परत्रेह च गर्हिता स्यात् ॥ २५

काव्यस्य कन्या दयिता सखी मे
पतिस्त्वमस्याः पृथुलोचनायाः।
पतिश्च सख्याश्च पतिः समौ द्वौ
समो विवाहोऽपि मतो मुनीनाम् ॥ २६

भूपाल, भार्य्यामधनां वदन्ति
तवास्मि तावन्महिषीभुजिष्या।
वश्यां विशेषात् परिभोगयोग्यां
मामर्थिनीं तामिव तद्भजस्व ॥ २७

शय्यासु मां नाह्वयसि क्षितीन्द्र,
त्वामाह्वयाम्येव तु याचमाना।
तदेहि मे त्वं विधिवद्विधिज्ञ,
पाणिं तव ग्राह्यमिमं गृहाण ॥ २८

तथेति गान्धर्व्वविधानतस्तां
जग्राह पाणौ मनुजाग्रगामी।
ततस्तु बालाऽधिगताऽनुरागै—
रराज गङ्गेव तरङ्गहस्तम् ॥ २९

पुत्रानमुष्मात् शशिवंशकेतो—
र्नरेन्द्रचिह्नानसुरेन्द्रपुत्री।
दृष्ट्वानुपूरून् जगतो विशेषान्
लेभे गुणान् योनिव मूलहेतोः ॥ ३०

अथैकदाऽशोकवने चरन्ती
राज्ञा समं ज्ञातिसमृद्धिदीना।
अल्पांशतान्देवकुमारकल्पान्
तान्देवयानी तनयान्ददर्श ॥ ३१

एते सुताः कस्य सकाकपक्षाः
महोचितां लक्षणलक्षिताङ्गाः।
तेजोविशेषैकनिधानभूताः
स्फुरन्ति बालार्कवदुज्ज्वलाभाः ॥ ३२

धन्यस्य कस्याङ्कममी रजोभि—
रालिङ्गिताङ्कैरुपरञ्जयन्ति।
कान्त्या च रूपेण च वर्चसा च
त्वामेव मन्ये नृप, संवदन्ति ॥ ३३

इति प्रगल्भं किल काव्यकन्या
मुहुर्ब्रुवाणा क्षितिपालवक्त्रम्।
न केवलं मन्युमलम्भयत् सा
स्वयञ्च दीना समतप्यतान्तः ॥ ३४

ततो हिमक्लिष्टमिवारविन्दं
म्लानप्रभं चारुमुखं वहन्ती।
सन्तर्ज्जयन्ती नृपतिं कटाक्षैः
किञ्चित् कुमारान् पुनरन्वयुङ्क्त ॥ ३५

ते पृष्टमात्राः शिशवः शशंसुः
प्रदेशिनीचालनया नृपालम् ।
दैत्यात्मजायाः प्रभवो कथञ्चिन्
मन्युज्ज्वलन्त्यै किल देवयान्यै ॥ ३६

अङ्कं समारोढुमुदूढकामान्
शर्म्मिष्ठया कातरमीक्षितस्तान् ।
तस्याः समक्षं क्षितिपालमौलि-
र्दीनाननो नाद्रियते स्म बालान् ॥ ३७

व्यतिक्रमं सोढुमपारयन्ती
मूढेव किञ्चिद्गद्गदितुञ्च बाला ।
बालातपोद्भिन्नसरोजवक्त्रा
मुहूर्त्तमेषा समदह्यतान्तः ॥ ३८

यथा पुमांसो दयिताऽपचारं
न सोढुमत्यल्पमपि क्षमन्ते ।
तथैव पुंसामपि मानिनीना-
मसह्यएवान्यजनानुरागः ॥ ३९

अवाङ्मुखीं सम्भ्रमलोलदृष्टि-
स्त्रपाविशेषोदयविह्वलाङ्गीम् ।
प्रवेपमानामथ देवयानी
रुषा ज्वलन्ती किल तामपश्यत् ॥ ४०

तान्तर्जयामास विशालनेत्रा
नेत्रेण सा रोषकषायितेन ।
विद्युद्विलासेन पयोदमाला
तपात्यये निर्व्वचनामिवोर्व्वीम् ॥ ४१

तां म्लानपुष्पामिव चारुवल्लीं
पयोदराजी करकाभिरुच्चैः ।
जघान भूयो जघनप्रशस्तां
वाग्भिश्च दुःसह्यतराच्चराभिः ॥ ४२

संध्येव तां मुद्रितनेत्रपद्मां
विधाय कोपारुणयेव दृष्ट्या ।
चक्रीकृतभ्रूलतया नृपालं
कोपादुपालब्धुमभूत्प्रवृत्ता ॥ ४३

पुनः पुनर्विस्फुरिताधरोष्ठी
चिराद्दृवस्थाप्य गिरं कथञ्चित् ।
अस्रप्रकारैरवरुद्धकण्ठी
वर्णान्तराक्रान्तमुखी बभाषे ॥ ४४

सुधांशुवंशस्य तवानुभावो—
महात्मनां बुद्धिपथं व्यतीतः ।
स त्वं महाराज, कथं न कुर्य्या—
उदारकीर्त्तेः सदृशं महिम्नः ॥ ४५

प्रेष्यां वयस्यामथ शिष्यकन्यां
यन्मत्पदव्यां व्यदधास्त्वमेनाम् ।
एतावता प्रेम तवानुमेयं
त्रिलोकनारीजनलोभनीयम् ॥ ४६

यदुच्यते स्निग्धजनप्रियेषु
पदेष्वपि प्रेम विमूर्च्छतीति ।
तत् सत्यमस्यां करुणा तवैषा
प्रीतिं मयि प्रौढ़तरां व्यनक्ति ॥ ४७

यदेतदद्योपकृतं त्वया मे
प्रदर्शितं मत्प्रवणं मनश्च ।
तेनास्मि सौभाग्यवतीषु धूर्य्या
गौर्य्यास्तपोऽप्यल्पमिवाभ्युपैमि ॥ ४८

कृतज्ञतां शंसितुमत्र मूढ़ा
क्षमा न खल्वस्मि विभो, क्षमस्व ।
अस्मैस्तदाह्लादवशप्रवृत्तै—
र्निवेद्यते सा कथमप्यवद्यैः ॥ ४९

अहो वतेयं व्रततिर्मनोज्ञा
कल्पद्रुमभ्रान्तिविलुप्ततत्त्वा ।
आपातरम्यं विषवृक्षमुच्चै—
रालिङ्ग्य जाता परिविह्वलाङ्गी ॥ ५०

विरिञ्चिना वञ्चितचित्तवृत्तिः
सोमान्वयप्रत्ययमोहलुप्ता ।
अग्निं पतङ्गीव समाश्रिता त्वां
शोच्यां दशामस्मि वत प्रपन्ना ॥ ५१

ऋद्धीं त्वया क्रूरतरेण नीचै—
र्मामुत्तमां निस्त्रप, सङ्गमय्य ।
अभूत् कृतान्तोऽद्य यथार्थनामा
सर्व्वः समर्थः खलु दुर्ब्बलाय ॥ ५२

नूनं गुरुर्मे न विवेद योगं
मृगाङ्गनावन्मृगयौ समर्प्य ।
राजन्यबन्धौ कितवे दयालु—
र्यः श्लाघते श्लाघ्यतमां तनूजाम् ॥ ५३

प्रभुस्त्वमेकोऽसप, भूतधात्रया:
कथं नु दास्यामनुरक्तभासी: ।
रूपैर्गुणैर्व्वंशकलादिभिर्व्वा
नात्येति मां प्रत्युत दैत्यकन्या ॥ ५४

त्वयाऽवरार्हेन परार्हजाता
विमानितैवास्मि मदाविलेन ।
महर्षिविघ्राणितपारिजात—
स्रगुत्तमाऽऽखण्डलदन्तिनेव ॥ ५५

अनार्य्य, तेनार्य्यविगर्हितेन
पापेन ते पाप, बलावलेपात् ।
न तावदेकैव विमानिताऽहं
तातोऽपि देवासुरमाननीय: ॥ ५६

ज्वलन्तमुच्चैर्ज्ज्वलनं मदान्ध:
पदाऽस्पृशो दृप्तभुजङ्गमं वा ।
क्षमिष्यते नैव गुरुर्व्विपाक—
मस्याचिराद् भोक्ष्यसि दुर्नयस्य ॥ ५७

प्रेमामृतै: कैतव, तर्पितोऽपि
भुजङ्गवन्मे हृदयेऽदशस्त्वम् ।
किमत्र कुर्म्म: प्रकृतिर्नराणां
श्वालेव वक्रेर्न वियुज्यते यत् ॥ ५८

यन्मत्प्रसङ्गेऽपि तवाङ्ग, बुद्धि—
र्नीचानुगैवास्ति किमत्र चित्रम् ।
नैसर्गिकी दोषपरम्परा या
शक्या श्रुतेनापि न सा प्रमार्ष्टुम् ॥ ५९

भुजङ्गमस्येव लसन्मणिश्रीः
प्रवालशोभेव विषद्रुमस्य ।
दुष्टात्मनः प्रत्युत कान्तमूर्त्तेः
अश्लादिसम्पद्भयहेतुरेव ॥ ६०

व्रजन्त्यनार्य्यस्य तथोपयोगं
प्रज्ञाऽन्ववायश्रुतहृद्ययोगाः ।
अन्धोबिभेत्युत्पथगन्तुकामो-
लोकात्, प्रवृत्तोऽपि सुखेन साध्यः ॥ ६१

संलम्भितोऽप्युच्चपदं प्रयत्ना—
न्नीचानुगोऽभूः स्वयमेव भूयः ।
अप्यन्तरिक्षं रविरश्मिनीतं
पतत्यधस्तात् पुनरेव तोयम् ॥ ६२

इयं व्यतिक्रान्तगुरुप्रभावा
स्थितेर्व्विभेत्ता त्वमसि प्रमत्तः ।
प्रेमास्तु वां चारु निरन्तरायं
सुतुल्ययोः श्लाघ्यतमोहि योगः ॥ ६३

प्रियोऽसि मे त्वं नृप, दैत्यकन्या
प्रिया भुजिष्येति न वः करिष्ये ।
प्रेम्णोनवस्यान्तरमन्तरायः
पितुर्निकेतन्तदहं गमिष्ये ॥ ६४

सेयं नवोढ़ा तव धर्म्मपत्नी
कलाप्रगल्भा नवयौवनश्रीः ।
तदेतया कामसुखं निकामं
निर्व्विघ्नतां वेश्यजनोचितं यत् ॥ ६५

इयं नवोद्भिन्नवयःसमृद्धा
प्ररूढ़तारुण्यदशाऽस्मि कामिन्, ।
किमस्ति तत्, येन तवानुरागं
समेय दौर्भाग्यवती पुरेव ॥ ६६

आपातरम्याणि विलोभनानि
शाठ्यानि चास्याः शठ, नैव वेद्मि ।
तन्मां परित्यज्य रतो यदस्यां
शाठ्यस्य जातं सदृशं तवैतत् ॥ ६७

याः केवलं प्रेमरसस्य हेतो-
र्मनः शरीरेण सहार्पयन्ति ।
स्थाने नराणामपराऽनुरागात्
कृतघ्नता तासबलासु कर्त्तुम् ॥ ६८

अहो नितान्तानुगतामदोषा-
मनन्यनाथामपहाय पत्नीम् ।
सौन्दर्य्यमात्रादपराऽनुरक्ता-
विचारमूढ़ाः सुतरां पुमांसः ॥ ६९

यस्यां प्रभुत्वं बहु, धर्मपत्नीं
मर्मस्थिमां निर्दयमर्दयित्वा ।
निघ्नोभवन् दास इवापरस्या-
न वेद्मि किं वा सुखमत्र वेत्सि ॥ ७०

अदक्षिणोऽसि क्षितिनाथ, कामं
न बुध्यते दग्धमनस्तथापि ।
वताबलात्वं बलदर्पिताना-
मनादरस्यैव पदं नराणाम् ॥ ७१

आलोकमात्रात् प्रमदैकमूलं
ममासि सन्तापकरस्त्वमेव।
प्रदीप्यमानोऽपि दिवाऽधिनाथः
पङ्कोद्भृताया इव पङ्कजिन्याः॥ ७२

दूरोऽपि दुस्पर्शकरोऽपि भानु—
रानन्दयत्येव सरोजपंक्तिम्।
सुधाकरस्त्वन्तिकतः स्थितोऽपि
दुनोति बन्धुः कुमुदावलीनाम्॥ ७३

दन्दह्यते निर्दय, मानसं मे
प्रियस्त्वमन्याप्रणयाविलोयत्।
आलिङ्गति श्यामफलं पतङ्गे
जाज्वल्यते तस्य शिला वराकी॥ ७४

विनिष्ठुरे त्वय्यनुरागलोलं
मनोमदीयं सहतामिदानीम्।
स्थाने फलं, हन्त दुनोति भूय-
स्तथापि मां त्वत्प्रणयाभिमानः॥ ७५

निबद्धभावस्य सदा परस्या—
मार्द्रं वचो वह्निवदप्रसह्यम्।
स्त्रीणामथात्मैकरसस्य पत्युः
श्लाघ्योऽनलस्पन्दनवञ्चितायाः॥ ७६

ज्वलद्धुताशोपहितं शरीरं
प्रेम्णा समालिङ्गति यस्य पत्नी।
तस्यान्यनारीजनपारवश्यं
रसोत्तरस्योचितमेव पत्युः॥ ७७

वाच्यो विधिर्येन विधाय दीनां
त्वदेकनिष्ठामवशां बलान्माम् ।
अकारि निष्कारणनिष्ठुरेण
तवैव नो निर्दय, मानसं मे ॥ ७८

तूष्णीं स्थितं भूपतिमाक्षिपन्ती
तदन्तिके सा बहुलं रुरोद ।
सशब्दवर्षेव पयोदराजी
शिलोच्चयाभ्यर्णमभि प्रवृत्ता ॥ ७९

अथातिकोपस्फुरिताधरान्तां
नितान्तबालारुणलोचनान्ताम् ।
सातङ्कमागस्करणात् सशङ्को—
जगद्गुरुर्गर्व्ववतीं जगाद ॥ ८०

परां न तावत् प्रतिपत्तुमेना—
मर्हस्यदोषां दितिजेन्द्रपुत्रीम् ।
सखी तवैषा सुमुखि, प्रसीद
सतां हि मित्राभ्युदये न मन्युः ॥ ८१

इमां समुद्दिश्य तवेति पूर्व्वं
मामादिशद्भामिनि, भार्गवोऽपि ।
तदात्मना सम्भवकालएव
प्राक् कामयन्तीं न निषेद्धुमीशे ॥ ८२

अहं न चैनां शयने वराकी—
मेषैव मामाश्रयति स्म बाला ।
विचारविज्ञाऽसि विचार्य्य राज्ञि,
पश्याधुना कोऽत्र ममापराधः ॥ ८३

सा पार्थिवस्यानुनयं न सेहे
नितान्तमन्तःपरितप्यमाना ।
स्निग्धान्तराऽपि ज्वलनप्रभिन्ना
स्थालीव साचाज्जलविन्दुसेकम् ॥ ८४

प्रवेपमाना स्नपयन्त्यभीक्ष्णं
स्तनान्तरालं गलदश्रुपुरैः ।
आक्षिप्य वाक्यं क्षितिपस्य रोषा—
दात्मानमेषा बहुशो निनिन्द ॥ ८५

यावन्नृपालश्चरणावलग्नं
तस्याः स्वमात्मानमियेष कर्त्तुम् ।
तावत् प्रतस्थे पितुरन्तिकं सा
विलोलकेशा स्खलदंशुकान्ता ॥ ८६

सा प्राञ्जलिं नागणयन्नृपालं
स्निग्धाः स्वाभावान्मधुराश्च नार्य्यः ।
तेजोविशेषावसरे यथाऽऽपः
कोपे हि भूयः कठिना भवन्ति ॥ ८७

क्षीरोर्म्मिमालेव विघट्टितान्त—
रसह्यवेगेन शिलोच्चयेन ।
प्रियापचारोन्मथितान्तरा स्त्री
समुद्गिरत्युल्वणकालकूटम् ॥ ८८

नितान्तरोषे परिदर्शितेऽपि
विमानितोऽपि क्षितिपालमौलिः ।
तामन्वगेव प्रययौ हतौजाः
प्राणाः स्त्रियः खल्वपरे नराणाम् ॥ ८९

कामं मनस्तस्य पराऽनुरक्तं
तथापि तस्यामनुषक्तमासीत्।
दूरोपनीतं पवमानवेगा—
च्चीनांशुकं नोज्झति केतुयष्टिम्॥ ८०

कुमुद्वतीं रञ्जयतोऽपि कामं
प्रीतिर्हिमांशोरधिकैव रात्रौ।
तस्यां लसन्त्यामपि विप्रयुक्त—
स्त्रियामया ध्यायति तत्क्षणं सः॥ ८१

अथासुराणां गुरुरुग्रतेजाः
समग्रमाकर्ण्य तदाऽऽत्मजायाः।
विमाननां सोढुमिवाक्षमः सन्
चुकोप भूयः क्षितिपेश्वराय॥ ८२

वयोऽवलेपादवलुप्तबुद्धे,
विलङ्घितो मद्विनयो नयश्च।
तन्मूढ़, मत्तीव्रतपःप्रभावात्
भव त्वमद्यैव जरानिधानम्॥ ८३

इत्येवमुच्चैरशपन्नृपालं
तत्कर्मभिः क्षोभितचित्तवृत्तिः।
गाढ़ाविलं तोयमपि क्रियाभि—
र्ज्वलेत् कथा कैव शरीरिणां वा॥ ८४

उद्वाम्य धातुद्रवमिश्रमग्नि—
माग्नेयशैलः सहसेव शान्तः।
वर्षोपलोच्चैस्खरवातवर्षं
कृत्वेव पश्चाद्दिवसो गताभ्रः॥ ८५

शश्वा नृपालं मुनिर्वंशकेतु-
स्तेनानुनीतः शशिवंशजेन ।
अभूत् प्रशान्तः शमसंस्कृतात्मा
क्षणप्रकोपा हि सदा महान्तः ॥ ९६ युग्मकम्

कृताञ्जलिश्चैनमुवाच राजन्,
कस्मिंश्चिदात्मप्रभवे त्वमेनाम् ।
जरां प्रभावान्मम संक्रमय्य
कामं पुनर्निर्विंश चारुभोगान् ॥ ९७

स देवयानीसहितोऽप्रतीतः
स्वां राजधानीं प्रति सन्निवृत्तः ।
यदुं समानीय समानविद्य-
मुवाच वाचस्पतितुल्यवाग्मी ॥ ९८

अङ्गात्ममाङ्ग, त्वमसि प्रयातः
शरीरमन्यत्तनयाभिधानम् ।
अतस्त्वया संस्मरताऽवदानं
गुरोर्निदेशः परिपालनीयः ॥ ९९

अकालएवेयमुपस्थिता मां
स्थितिश्च, संस्थानपुरोगरूपा ।
तवैव मातामहकोपजाता
जरा महाक्लेशकरी नराणाम् ॥ १००

भजस्वदोषाव्रतसंयतात्मा
स यौवनस्याद्यमदस्त एव ।
सत्यां विभूत्यामनयाऽभिभूतो-
दीनामवस्थां गमितोऽस्मि दैवैः ॥ १०१

नवेन तस्माद्वयसा तवाई
कामान् पुनर्व्वीर, विनिर्व्विशेयम् ।
त्वच्चानया भोगनिवारितात्मा
धरामिमां पालय कालमल्पम् ॥ १०२

भूयो जरां स्वां परिगृह्य पश्चा—
दजर्य्यमारण्यगणैः करिष्ये ।
नवं वयः प्राप्य समुद्रनेमिं
क्ष्मां भोक्ष्यसि तात, पुनस्त्वमेव ॥ १०३

त्वं जन्मना वंश्यगुणैश्च सर्व्वैः
पुत्रेषु मे पुत्र, यतो वरिष्ठः ।
नार्हस्यतो मद्वचनं विभेत्तुं
स्थितो निदेशेषु सदा गुरूणाम् ॥ १०४

पुत्राभिलाषी कुतएव लोक—
स्त्वञ्चेन्न मे पुत्र, वचः करोषि।
यः श्लाघनीयो विनयः स एव
नोत्शृङ्खलत्वन्तु फलं गुणानाम् ॥ १०५

नैच्छद्यदा देवसमानरूपो—
जरां जरादोषविशेषदर्शी ।
यदुर्म्महीपालपतिस्तदैनं
शशाप शापाकुलसन्नचेताः ॥ १०६

राज्ञोगुरोरप्यवलेपतो मे
यस्मादवज्ञां कृतवानसि त्वम् ।
तस्मात्प्रसूतिस्तव पापकर्म्मा
विलुप्तराज्या च भविष्यतीति ॥ १०७ युग्मकम् ।

स तुर्व्वसुं पार्व्वणचन्द्रकान्तं
जरामनिच्छन्तमुवाच राजा ।
पितुर्न मे त्वं वचने स्थितोऽभू-
स्तन्म्लेच्छता म्लेच्छवचेस्तवास्तु ॥ १०८

द्रुह्युस्तथैवाविनयात् शकल-
मनुस्तु लेभे यवनत्वमेव ।
उक्तं गुरावुर्व्वरभूमिभागी
सद्यः प्ररोहत्यपचारबीजम् ॥ १०९

विलोलचेताः स कुलप्रदीपं
नितान्तभोगान्तरलोपशङ्की ।
पूरुं समाहूय परोपरोधं
जयन्तमाखण्डलवद्बभाषे ॥ ११०

त्वं पुत्र, सर्व्वावरजोऽपि जात्या
गुणैर्गरीयानुरुविक्रमोऽसि ।
तवैव तावद्वयसा चरेयं
समाः सहस्रं विषयान्तराणि ॥ १११

तवाङ्गसङ्गादुपजातमेत-
दङ्गं तवादेशविधिक्षमं स्तात् ।
फलं किमन्यद्वद काङ्क्षणीय-
मवश्यमस्य क्षणभङ्गुरस्य ॥ ११२

पुत्रेषु तावत् प्रभुतामुदारां
पितुर्महाराज, समामनन्ति ।
आज्ञाविधेयेषु पुनर्न भूया
[illegible]वैव विनियक्तोऽयम ॥ ११३

प्राणानपि प्राणद, ते निदेशात्
स्वच्छन्दमानन्दमनास्त्यजेयम् ।
नियन्त्रणायाः करणावलीनां
परिग्रहे कैव कथा जरायाः ॥ ११४

महाप्रसादोऽयमितीरयित्वा
प्रणम्य पूरुर्बहुमानपूर्वम् ।
जग्राह राज्ञः शिरसा तदाज्ञां
निदेशनिघ्ना हि गुरोर्महान्तः ॥ ११५

अथ स तनयमुच्चैर्व्वक्षसाऽऽलिङ्ग्य राजा
विगलितपरिशीतैर्व्वाष्पपूरैर्निषिच्य ।
जलधिवलयसीमां शाधि सर्व्वां त्वमुर्व्वीं
भव विमलगुणौघश्लाघ्यवंशस्य कर्त्ता ॥ ११६

दिवसकरकरौघो यावदेव प्रकाश—
स्तव सुविमलकीर्त्तिः स्तोष्यते तावदेव ।
इति नरपतिरुक्त्वा तं जरां संक्रमय्य
कवितनयमहिम्ना यौवनेनान्वितोऽभूत् ॥ ११७

युग्मकम् ।

अभिमतगुणग्रामोदग्रप्रदेशगतोऽन्वहं
विविधविषयान् निर्व्विश्यासौ विहङ्गमनोरथः ।
अथ शमपथं प्राप्तः पूरुं विधाय महीपतिं
नियमितमतिः कच्छ्रं राजा चकार मुनिव्रतम् ॥ ११८

इति चन्द्रवंशे महाकाव्ये पूरुराज्याभिषेको नाम
सप्तमः सर्गः ।

---

# अष्टमः सर्गः ।

ररराज भूत्या जरसा विमुक्तः
प्राध्वं पुनर्यौवनमादधानः ।
औत्पत्तिकोपप्लवसन्निवृत्तौ
शशीव भास्वानिव भूमिपालः ॥ १

ऋत्विग्व्रजैः संयुयुजे स यज्वा
बुभुत्सुभिस्तत्त्वमगाधसत्त्वः ।
जिज्ञासुभिर्धर्म्ममधर्म्मशून्यो—
वीरैश्च सर्व्वैर्जगदेकवीरः ॥ २

निवेशितैः काञ्चनयूपसंघै—
र्धरातलं मेरुतटप्रदेशम् ।
स्रष्टेव सोऽष्टापदचारुवृत्तै—
स्तस्तार ताराभिरिवान्तरिक्षम् ॥ ३

आमूलफुल्लैरिव कर्णिकारै—
र्दूरादनालक्षितवर्णभेदैः ।
अल्पेतरैस्तैर्बहुलक्षपाया—
मपि क्षितिः क्षीणतमा बभूव ॥ ४

शुद्धः प्रकृत्या स्फटिकोपमेयो—
भूयोऽध्वरैः शुद्धतरो नृपालः ।
शिल्पिप्रयुक्तैः परिकर्म्मभेदैः
समुज्ज्वलात्मा स इवोपलोऽभूत् ॥ ५

श्लाघ्यः पुरैवामलकीर्त्तिराशी—
द्विशेषतोवैदिकसंविधानैः ।
प्रागेव पुण्यः परमात्मबोधः
श्रद्धादिभावैः किमुतोपपन्नः ॥ ६

महीं महीपः सुतरां यशोभि—
रसंशयं दर्शितलोकहर्षैः ।
प्रकाशयामास यथा शशाङ्कः
प्रसिद्धमुक्तागुणशुद्धपादैः ॥ ७

स्वां राजधानीमभितः स्थितस्य
स्थिरस्य शीतान्यरुचेरिव धाम् ।
विरूढधाम्नो महता महिम्ना
दिगन्तरं व्यानशिरे प्रतापाः ॥ ७

दिवा दवाग्नेरिव तस्य तेजो—
न तत्त्वतोऽजातरिपोर्मुमूर्च्छ ।
तिरस्कृता भानुमतः प्रतापै—
स्तस्योपलाः सूर्य्यवशा ज्वलन्ति ॥ ८

अपि प्रतिद्वन्द्विनि मन्दवीर्य्यः
पराक्रमं प्रक्रमतेऽधिरोढुम् ।
निदर्शनं तत्र रजः प्रसर्पत्
प्रत्युत्तमाङ्गं चरणाभिहन्तुः ॥ १०

क्रामन्नमिश्रास्वपि गन्तुकामाः
श्यामात्मकाः प्रियमन्दिराणि ।
तस्येन्दुगौरामलकीर्त्तिजालात्
जहुर्न शुक्लाभरणांशुकानि ॥ ११

न केऽपि तावत् क्षितिपास्तदीयं
शुभ्रं यशः प्रार्थयितुं समर्थाः ।
तमोपहाः कान्ततमाश्च दीपाः
कुतः पुनश्चन्द्रमसोऽनुकुर्य्युः ॥ १२

निवेश्य लक्ष्म क्षितिपस्त्रिलोक्यां
स्थिरं यशो भङ्गुरमात्मदेहम् ।
विहाय काले स दिवङ्गतोऽभूत्
दिवस्पतेरासनमारुरुक्षुः ॥ १३

तदङ्गजो गाङ्गजलावदातै-
र्यशोभिरानन्दितसर्व्वलोकः ।
ततः परं पीवरचारुवक्षाः
बभूव राजा जनमेजयाख्यः ॥ १४

स माधवीं माधवतुल्यतेजाः
राजा विनिर्व्विश्य रजोऽतिगः सन् ।
संसारबन्धाच्चितरां विमुक्तो-
मुक्तात्मनां प्राप गतिं गतिज्ञः ॥ १५

प्राची जिता येन दिगप्रमेया
प्राचिन्वता तेन तदात्मजेन ।
जगत्प्रभुत्वं प्रभुणा प्रपेदे
स्वबाहुवीर्य्येण समूर्जितेन ॥ १६

ततस्तदन्ते तनयस्तदीयः
संयत्सु संयातिरिति प्रसिद्धः ।
भेत्ता परेषां परिगीतकीर्त्तिः
प्रापच्चरित्रीं क्रतुभिः पवित्रः ॥ १७

स पालयित्वा मकरालयान्तां
महीं महीपालगणैकमौलिः।
चकार राजा सुरसुन्दरीणां
प्रियेषु गोत्रस्खलितापराधम्॥ १८

ततोऽप्यहंयातिरिति प्रतीतो—
राजा सुतस्तस्य सतां मतोऽभूत्।
भुजावहंपूर्व्विकया यदीया—
वायोधनेषु व्रजतो विवादम्॥ १९

स सार्व्वभौमं सुतमुन्नतांसं
क्ष्मारक्षणे चान्तमतिं नियुज्य।
यथोचितं योगविधेयचेताः
बुधोपमेयो विबुधत्वमाप॥ २०

स दण्डनीतिं नृपमण्डलानां
प्रभुः प्रभावोचितमभ्ययुङ्क्त।
विकुर्व्वते केवलसामवादा—
च्छक्तिप्रदीप्ता इति बुध्यमानः॥ २१

यदेव रोषारुणलोचनोऽभूद्—
व्यतिक्रमं सोढुमशक्नुवन् सः।
तदाऽभवन् सम्भ्रमवेपथूनां
पाण्डूनि गन्तान्यरिसुन्दरीणाम्॥ २२

तत्तेजसा संप्रतिपन्नभासः
कामं महीपालगणास्तथापि।
तस्योदये मम्लुरभीतभानो—
र्ग्रहा इवोच्चावचभेदभिन्नाः॥ २३

स धर्म्मपत्नीमनघः करिष्यन्
महायशाः केकयराजकन्याम् ।
प्रयाचमानः किल तेन राज्ञा
सावज्ञमज्ञेन निराकृतोऽभूत् ॥ २४

प्रशान्ततोये प्रतिबुद्धमीन—
संक्षोभजन्मेव नवोविकारः ।
तस्यापि मीनध्वजरोषजातः
प्रागेव चित्ते नृपतेर्ब्बभूव ॥ २५

अतो हृषीवोद्धतबाहुवीर्य्यो—
विमाननां तां क्षितिपो न सेहे ।
द्विपप्रयुक्तामिव गह्वरस्य
विदारणां स्वस्य मृगाधिनाथः ॥ २६ युग्मकम् ।

तस्यावलेपादवलिप्तबुद्धे—
र्बभूव कोपात् परिलोहिताक्षः ।
अङ्गारमात्रोऽपि हिरण्यरेता—
ज्ज्वलत्यलं लम्भितकक्षपातः ॥ २७

अथ प्रतस्थे विजयाय राजा
गजावलीगर्जितमिश्रतूर्य्यः ।
ध्वजोज्ज्वलश्रीध्वजिनीसमेतो—
रजोऽधिकः केकयराजधानीम् ॥ २८

प्रयाणभेरीपटहप्रणादो—
मुमूर्च्छ भूयोऽथ दिगन्तरेषु ।
नूनं जनोदीरितमस्य राज्ञो—
नालोकशब्दं बहु मन्यते स्म ॥ २९

बलैः प्रसर्पद्भिरथानुकूलैः
शैलोपमानैकपसंघट्टैः ।
ध्वान्तैर्धरित्रीमिव वासरान्तो—
करोध राजा रिपुराजधानीम् ॥ ३०

न चाल्पसत्वः समकल्पतासौ
कामं परान् लङ्घयितुं तथापि ।
क्षणे तमः चीणइव चपेशो-
भित्त्वेव किञ्चिद्बलमुत्थितोऽभूत् ॥ ३१

स प्रत्यगच्छाद्बलमप्रमेयं
मितैर्बलैर्व्वीरगणैरधृष्यम् ।
वात्याप्रवृद्धं जलधेस्तरङ्गं
स्फुरत्प्रभं गाङ्गइव प्रवाहः ॥ ३२

ऊर्द्धीकृता निर्म्मलखड्गलेखा—
स्तीव्रैः करैर्भानुमतः प्रदीप्ताः ।
न केवलं लोचनमेव जघ्नु—
स्तुरङ्गगं सम्भ्रममप्यकार्षुः ॥ ३३

चर्म्माणि चामीकरनिर्म्मितानि
तथैव रौप्याणि करोज्ज्वलत्वात् ।
दूरादलक्ष्यन्त नरापचारा—
दुत्पातसूर्य्या इव दीप्यमानाः ॥ ३४

इत्यल्पविद्युद्गतकल्पनेत्रा—
स्तूर्य्यध्वनिभ्यः श्रवणावरोधाः ।
योधास्तदानीं स्वपराववोधं
कथञ्चिदभ्यासवशादवापुः ॥ ३५

वीरास्तु तेन ज्वलतेव घोरे
ज्योतिःप्ररोहेण रणे चरन्तः ।
नैव प्रहारं प्रति नोदितत्वात्
कालं परिक्षेप्तुमलं बभूवुः ॥ ३६

तुरङ्गमानां खुरघातरूढै-
रथाङ्गसंक्षोभभवैश्च पश्चात् ।
रणस्थली घोररजोभिरुच्चै—
र्वरूथिनी चापि समाकुलाऽभूत् ॥ ३७

घोरे रजस्युद्धततूर्य्यशब्दे
विमर्द्दनिष्ठानि बलान्यभीक्ष्णम् ।
उच्चारयामासुरनल्पमुच्चैः
परस्परं स्वप्रभुनामधेयम् ॥ ३८

रजःसमाच्छादितदेहभाजो—
विच्छिन्नघण्टाः प्रतिपक्षनागाः ।
जिघांसवोऽभ्यर्णमभिप्रवृत्ताः
प्रतीयिरे चारुरदप्रभाभिः ॥ ३९

परेण विद्धोऽपिच कुम्भमध्ये
शरैः स्वघण्टाध्वनिनाऽनुमेयः ।
आधोरणस्याङ्कुशपातशङ्की
गजस्तमेवाभिमुखो जगाम ॥ ४०

सान्द्रेषु रेणुष्वसकृत् शराणां
परस्परं योधगणेरितानाम् ।
संघर्षजन्मा ज्वलनोबभासे
गाढान्धकारेष्विव विद्युदग्निः ॥ ४१

हताश्वरीरादिवपुःसमुत्थं
रजोविशालं रुधिरं विभेद।
बालप्रवालारुणमर्क्करोचिः
साक्षात् जपारूढ़मिवान्धकारम्॥ ४२

विच्छिन्नमूलोरजसां स राशिः
किञ्चिन्मरुद्वेगवशाद्विलोलः।
वाष्पीययन्त्रे शकटे प्रयाते
तस्योद्गतोधूमइव प्रतीये॥ ४३

तथाविधेस्यापि रजोभिरुद्धैः
रराज भूयो रुधिरप्रवाहः।
बालार्कभिन्नः शिशिरैरिवोद्धैं
पद्माकरो वातचलोऽमराणाम्॥ ४४

अथ द्विषां लोहितचक्षुरन्ते—
स्तिरस्कृतानां नरपुङ्गवानाम्।
सुदारुणं सङ्गरकर्म्म भूयः
प्रलम्बवीर्य्यावसरं बभूव॥ ४५

छिन्नातपत्रध्वजवर्म्मवाणै-
र्व्विदारितैर्व्वीरतुरङ्गनागैः।
रणाङ्गणं संकुलमप्रमेये—
रभूत् क्षणेन क्षतजप्रदिग्धैः॥ ४६

तथा प्रवृत्तेऽपि रणे सुघोरे
महाभुजो निष्प्रतिवैकतेजाः।
दहन्निवान्यानुरुभिः प्रतापै—
र्ब्बभौ विवस्वानिव सार्व्वभौमः॥ ४७

समापतन्तीं रिपुसैन्यराजिं
वरूथिनी तस्य वरं बिभेद।
तरङ्गमालां खरमारुतोत्थां
सबाध्ययन्नेव तरिर्व्विशाला ॥ ४८

प्रतीपयामास विपक्षसैन्यं
जवातिरेकादधिराजशब्दः।
स्रोतोवहस्रोत इवातिरंह्णो—
वेलोद्गमो वारिनिधेर्व्विवृद्धः ॥ ४९

वीरा झटित्यप्सरसां प्रमोदं
करिष्यमाणा रुधिरोक्षिताङ्गाः।
मुक्ताफलस्थूलतमैर्बभूवुः
श्रमाम्भसां व्याप्तमुखाः पृषद्भिः ॥ ५०

कठोरपातैर्द्दिषतां कृपाणै—
र्दन्ता द्विपानां ज्वलिता महान्तः।
बलिप्रदीपा इव वीरकीर्त्तेः
प्रतीयिरे तत्क्षणमात्रदीप्ताः ॥ ५१

द्विषद्भिमुक्ता निशिताः पृषत्का-
स्तैरन्तरीक्षे लघुशोविलूनाः।
प्रतीतविद्याधरमुक्तपुष्प-
रेणूपमेयाः परितो निपेतुः ॥ ५२

धृतत्सरुर्हस्तवतोऽग्रहस्तो-
निकृत्तमूलोऽपि शिलीमुखेन।
प्रफुल्लपङ्केरुहयुङ्क्तिवल्लं
हेवादिवोच्चैरवधीद् द्विषन्तम् ॥ ५३

कश्चिद्रथी हप्तरिपुक्षुरप्रै-
श्छिन्नं ध्वजं निक्कणकिङ्किनीकम्।
न चक्षमे क्षत्रकुलप्रदीप-
श्चिच्छेद तस्याशु किरीटकोटिम्॥ ५४

कश्चित् परस्यन्दनमप्रमत्तः
शरैः समाच्छन्नमनन्तरालैः।
आसारवर्षैस्तरसा विरूढैः
शिलोच्चयं वारिदवच्चकार॥ ५५

शरोत्करैरुत्पतितैः परेषा-
मन्यः समाच्छन्नरथो वभासे।
निःशेषलेशं शलभैरिवोच्चैः
खद्योतजालैरिव पादशैलः॥ ५६

तथाविधः कोऽप्यनुमेय आसीत्
स्फुरत्पताकः समरे परेषाम्।
भित्त्वा तमोनैशमणुप्रकाशैः
करैरुदेष्यन्निव सप्तसप्तिः॥ ५७

कश्चित् शरानग्निमयानजस्रं
समुद्गिरन् गौरवमादधानः।
आग्नेयशैलः खलु दुष्प्रधर्षः
समुद्वमन् वह्निमिवावभासे॥ ५८

पदातिरप्युद्धतसाहसोऽन्यः
स्तम्बेरमं विस्तृतकुम्भमध्ये।
मुक्ताव्रजैरुत्प्रहरन् पतङ्गी
रराज साक्षादिव पुष्पवर्षैः॥ ५९

कश्चित् द्विषत्खड्गनिकृत्तमूर्द्धा
मर्त्त्योऽपि सद्योऽमरतां प्रपद्य ।
सुराङ्गनाऽऽलिङ्गितदिव्यदेहो—
रिपुं जयोत्फुल्लमुखं जहास ॥ ६०

समुद्यतासिः समरे प्रहर्त्तुं
द्विषन्तमेकोद्विषता क्षणेन ।
छिन्नोत्तमाङ्गोऽपि च कण्ठनाला—
दपातयत् पङ्कजचारुवक्त्रम् ॥ ६१

आविद्धदेहो द्विषतां पृषत्कै—
रलक्ष्यतान्यः समरे प्रसर्पन् ।
उत्पातवातादिव चाल्यमानः
शिलोच्चयः पुष्पितकर्णिकारः ॥ ६२

मुक्ताऽवदातोज्ज्वलवर्म्मधारी
विलोलचामीकरतारहारः ।
अन्यः समाश्लिष्टशिखः कृशानो—
स्तुषारगौरः शिखरीव रेजे ॥ ६३

अस्त्रैः परे सादितसादिसैन्या—
स्तुरङ्गमैः सङ्गरलब्धवर्णैः ।
आनृण्यकामैर्निहताः प्रभूना—
मुत्प्लुत्य वेगात् पतितैः शिरःसु ॥ ६४

यथा क्षरद्गैरिकरक्तशैलो—
यथोन्नतः पुष्पितपारिजातः ।
बभौ तथाऽन्यः क्षतजोचिताङ्गः
शस्त्रक्षतालङ्करणा हि वीराः ॥ ६५

रुषाऽतिदष्टस्फुरिताधरोष्ठै-
र्निकृत्तकण्ठैर्मधुगन्धगर्भैः।
रणस्थली शोणितवीचिलोलै-
र्व्याप्ताऽभवत् पद्मनिभैः शिरोभिः॥ ६६

प्रवर्त्तितायाः सरितः प्रकामं
वीरद्वीपाश्वादिकरक्तमय्याः।
च्युतं शिरस्तो नरपुङ्गवानां
शिरस्त्रमावर्त्त इवाबभासे॥ ६७

असृक्प्रवाहैः परिलोलमेकं
शिवाऽपकर्ष्टुं भुजमुद्यताऽपि।
मुष्टौ निविष्टां करवालवल्लीं
विलोक्य भीता विनिवर्त्तते स्म॥ ६८

लोलैर्विहङ्गैरभिकृष्यमाणं
तेभ्यः समाकृष्य कठोरशब्दः।
स्खलन् मुहुः शोणितपङ्किलत्वात्
श्वा छिन्नमूलं चरणं जहार॥ ६९

बले परैरुन्मथितेऽतिवेलं
ग्लायद्बलः केकयलोकपालः।
अस्तं गमिष्यन्निव हेममाली
प्रतापजालैः परिहीयते स्म॥ ७०

शक्तिप्रदीप्तोऽपि बली स नेता
नैवात्यगाद्गीतबलोत्तरं तम्।
तथाहि भूयानपि वारिवाहो-
न वातवेगं समतीत्य याति॥ ७१

लब्धप्रतिष्ठेन ततोऽयुलोकेऽ-
प्यसौ प्रतिष्ठानपुराधिपेन।
सुधीः स्वयं दुर्ब्बलतामुपेतः
सन्धातुमैच्छद्बलवत्तरेण॥ ७२

महौजसा तेन महाभुजोऽसौ
सम्मानसन्धिं विधिवद्व्यधत्त।
कालोचितं या विविनक्त्युपायं
विनिर्म्मला सैव मतिः प्रशस्ता॥ ७३

सुतां सुनन्दामरविन्दवक्त्रा-
मिन्दीवरश्यामलकान्तयेऽसौ।
पद्मोपमेयामनवद्यरूपां
सत्कारपूर्व्वं सुदतीं दिदेश॥ ७४

घोरस्तयोरशमयत् कमलायताक्षी
लक्ष्मीपतेरिव लसल्ललनैकमूर्त्तिः।
एकामिषोत्थममरासुरयोर्व्विरोधं
सेतुक्रियेव विपरीतजलौघयोः सा॥ ७५

अथ ललितविलोचनां कृशांगीं
मुदितमना नृपतिश्चिरेण लब्ध्वा।
निजनगरमितस्तया विजह्रे
निधुवनकेलिकलाप्रगल्भयाऽसौ॥ ७६

इति चन्द्रवंशे महाकाव्ये केकयाधिपविजयो नाम
अष्टमः सर्गः।

——०——

## नवमः सर्गः ।

भक्तिहितेच्छः पालयित्वा महीमर्णवमेखलाम् ।
धर्णैरारञ्जितां भेजे स नन्दनवनश्रियम् ॥ १
जयत्सेनः सुतस्तस्य भुजे भुजगसन्निभे ।
केयूरवद्भुवो भारं बभार विधिवत्ततेः ॥ २
उपयेमे स वैदर्भीमदभ्रगुणगर्व्विताम् ।
तया च शुशुभे स्तोमो विष्णुत्येव विशाम्पतिः ॥ ३
अवाचीन इति ख्यातस्तस्यामस्यात्मजोऽभवत् ।
स्तुताविव प्रतिस्तोतुः पाकशासनसम्मदः ॥ ४
पृथिव्याश्चतुरन्तायाः पालनायामललिषम् ।
तमादिश्य निदेशस्थं विदशलमियाय सः ॥ ५
तस्मिन्नपि कथीभूते महाभौमस्तदात्मजः ।
बभूव भूमिवलये लोकपालः कुलाग्रणीः ॥ ६
स प्रसेनजितः पुत्रीं सुयज्ञां नाम याज्ञिकः ।
सधर्म्मचारिणीं चक्रे सप्ततन्तुरिवाहुतिम् ॥ ७
तस्मादयुतनायीति भानुः पूर्व्वाचलादिव ।
आसीत् पुरुषमेधानामयुतं यः समानयत् ॥ ८
स्थापयित्वा स्थिरं सोऽथ यशःस्तोममिवात्मनः ।
तमुर्व्यामर्णवान्तायां निर्व्विवेश सुराङ्गनाः ॥ ९
स पृथुस्रवसः श्रीमान् सुतायाममितद्युतिम् ।
पुत्रमक्रोधनं नाम सुजनं समजीजनत् ॥ १०
विनीतात्मरमादिश्य तमन्ते धरणीश्वरः ।
समारच्चाविधौ लोकं जगाम मखसञ्चितम् ॥ ११

समाजह्रे स कालिन्दीं करभ्भां राजभिर्हृताम् ।
सिंहदंष्ट्राकवलितं कुलिङ्गः पिशितं यथा ॥ १२
तस्यामुत्पादयामास देवातिथिरिति श्रुतम् ।
देवोपमेयन्तनयमातिथेयं महामतिः ॥ १३
तस्मिन् सुरपुरस्त्रीणां वल्लभे श्रीः कुलागता ।
तमाललम्बे तरुणं वानिनीव नितम्बिनी ॥ १४
तस्मादरिह इत्यासीदरयो हतविक्रमाः ।
हरिणेव मृगा येन संयुगे युगबाहुना ॥ १५
गुरावमरतां प्राप्ते गुणैर्मुकुरुदारधीः ।
शुचिष्केशशुचिः श्रीमान् वंशश्रियमवाप सः ॥ १६
देवभूयं गते तस्मिन्नयवेत्ता तदात्मजः ।
ह्मामरच्चद्विशालाचो नाम्ना ऋच्च इति श्रुतः ॥ १७
सूनुस्तस्य तदन्तेऽभून्मतिनारो महामतिः ।
नरपालः कपालीव भूतानुगतिहर्षितः ॥ १८
स रोधसि सरस्वत्याः सुतरां धीरमानसः ।
आजहार महाराजः सत्रं द्वादशवार्षिकम् ॥ १९
समुद्ररशनां रोषादिव सा स्वयमादरात् ।
करप्रदानादकरोदधिविन्नामधिश्रियः ॥ २०
तंसुमेशं दिगीशानां सुतमस्मादवाप सा ।
उद्यानवापिका पद्मं वसन्तसमयादिव ॥ २१
गुरौ सुरवधूक्रीड़ारसहर्षितमानसे ।
श्रिया समालिलिङ्गेऽसावनङ्ग इव मूर्त्तिमान् ॥ २२
तस्मादैलिन इत्यासीदनल्पमनलोपमः ।
अलिः पुष्परसस्येव गुणराशेरधीश्वरः ॥ २३
स कुलोचितमैश्वर्यं भुक्त्वा दुष्यन्तमात्मजम् ।
अभिषिच्य प्रजेशत्वे त्रिदशत्वमथागमत् ॥ २४

धीरेण तेन धरणी केवलं न प्रसाधिता।
वर्द्धिताऽपुरदधेरूर्म्मिः पूर्णेनेव हिमांशुना ॥ २५
अर्णवा वरुणस्येव वेदा इव महाधियः।
चत्वारोऽपि भुवोभागास्तस्यासन् वशवर्त्तिनः ॥ २६
स पूतानकरोत्ते ताम् म्लेच्छानपि मलिम्लुचान्।
मलावलुप्तसौन्दर्य्यान् धातुभेदानिवानलः ॥ २७
वीरः समुद्रावरणान् क्रमशः स दुराक्रमान्।
द्वीपाननेकानजयत् वशीन्द्रियगणानिव ॥ २८
अकृष्टपच्यशस्योच्चैराकरैरुपशोभिता ।
वसुन्धरा यथार्थत्वं राज्ञि तस्मिन्नपद्यत ॥ २९
अथर्व्वनिर्व्यपेचत्वादुत्पातैरनुपप्लुताः।
प्रजास्तस्मिन् प्रजापाले स्वं स्वं धर्म्मं सिषेविरे ॥ ३०
आसीदष्टरहर्दानं प्रजासु सकलास्वपि।
मदोदयस्तु दुःसह्यस्तदा द्विरदपंक्तिषु ॥ ३१
मृगयामगमत् कर्त्तुं स कदाचिद्विशाम्पतिः।
वनं मृगगणाकीर्णं पतत्त्रिकूलकूजितम् ॥ ३२
स ददर्श ततोदूरादाश्रमं श्रमनिःसहः।
कण्वस्योन्नमितैर्व्याप्तं शाखिभिर्व्विहगान्वितैः ॥ ३३
प्रफुल्लकुसुमोपेतैः पादपैः पल्लवोत्तरैः।
प्रांशुभिः सङ्कुलं साक्षात् ध्वजैरिव विड़ौजसः ॥ ३४ युग्मकम्
अर्च्चयिष्यन् मुनिं धीमान् तं प्रत्यभिमुखोऽभवत्।
अयत्नोपस्थितं श्रेयः कः प्रेक्षावानुपेक्षते ॥ ३५
सोऽपश्यन्मालिनीं नाम कलहंससमाकुलाम्।
निम्नगामपुरापस्पर्शादनिम्नगतिदायिनीम् ॥ ३६
वल्कलप्लवकालुष्ये क्षोभेऽपि जलवासिनाम्।
कुम्भयोनेरनुदयेऽप्राप्तसन्निर्म्मलोदकाम् ॥ ३७

ख

अनेकैः कमलैः कीर्णां विकसद्भिः सितोदकाम्।
मुक्ताशुभ्रामिव ज्योत्स्नां नक्षत्रखचिताम्बराम्॥ ३८
तरङ्गमालासंभिन्नपतङ्गप्रतिमोज्ज्वलाम्।
शरत्पयोमुचः पंक्तिं सञ्चरच्चञ्चलामिव॥ ३९ कलापका
तामुत्तीर्य्य महीपालोवलिशोभितसैकताम्।
प्रापदाश्रममश्रान्तोवातैः शीकरवर्षिभिः॥ ४०
धौतवल्कलनिस्यन्दकषायरसविन्दुभिः।
भूयिष्ठमनुकुर्व्वद्भिर्भक्तिशोभामिवाध्वनः॥ ४१
अक्षमालावल्कलादेः शाखास्वेष्ववलम्बनात्।
नूनं तरुभिरप्युच्चैः प्रतिपन्नमुनिव्रतम्॥ ४२
विनिर्व्विष्टफलैः स्पष्टं सदयं द्रुमगोचरैः।
स्तम्बावशिष्टैर्नीवारैरेकतः परिवारितम्॥ ४३
सानन्दं मुनिकन्याभिरन्तुब्धलूपिताब्जजम्।
वृक्षकाणां जलघटैः सिच्यमानालवालकम्॥ ४४
अन्वया मुनिपत्नीभिरुटजाभ्यन्तरेऽनिशम्।
इन्धनैः सावधानाभीरक्ष्यमानहुताशनम्॥ ४५
खगैस्तदर्थमुत्सृष्टनीवारवलिसञ्चयम्।
कूजद्भिश्च पतद्भिश्च निर्व्विशद्भिरलङ्कृतम्॥ ४६
क्वचिदातपमानीतं नीवारं चरतोमृगान्।
विनिवारयितुं भूयः सम्भ्रान्तमुनिकन्यकम्॥ ४७ कुल
प्रसूतामंगने यत्र मृगीं मङ्गलदीपकैः।
इंगुदोत्थैरुपचितैरभ्यनन्दन् मुनिस्त्रियः॥ ४८
न कोऽपि पादपो यत्र लताऽऽलिङ्गनवर्जितः।
नापुष्पिता लता काचिन्न पुष्पं षट्पदोज्झितम्॥ ४९
विपन्नमातृकं यत्र सिंही कलभमादरात्।
लिहती पाययामास स्तन्यं स्वशिशुभिः समम्॥ ५०

नष्टप्रसूतिमवशं व्याघ्री हरिणशावकम् ।
सानन्दं योजयामास जनन्या यत्र सादरम् ॥ ५१
वनान्तरादुपायातं मृगयूथं मुनिव्रजाः ।
यत्र सम्भावयन्तिस्म बलिभिः सलिलैरपि ॥ ५२
तरवोऽपि फलैः पुष्पैर्विहङ्गकलकूजितैः ।
छायया च पुरा यत्र पूजयन्त्याश्रमागतम् ॥ ५३
पुष्परेणूत्किरैर्यत्र पवनैर्मदनातुरैः ।
कान्ताइव विटैः शश्वद्बलादालिङ्गिता लताः ॥ ५४
अपूर्णाभिरसः सर्व्वे शाखिनस्तत्र जातुचित् ।
नौद्धत्यं तेष्वभूदासन् विनम्रा विनयादिव ॥ ५५
मिथ्याऽनभिज्ञाः सर्व्वेऽपि प्रकृत्या विनयान्विताः ।
तत्र सत्यमभूद्गुणं विध्यनागरिकादिव ॥ ५६
तदाश्रमपदं प्राप्य ननन्देलिननन्दनः ।
सतां वेत्तीव हृदयं भविष्यदपि मङ्गलम् ॥ ५७
स शून्यमाश्रमपदं कण्वेनाप्रतिमौजसा ।
विलोक्य लोकपालश्रीस्तत्र क्षणमपैक्षत ॥ ५८
लतागृहान्तरात् काचित् कमलायतलोचना ।
निश्चक्राम ततो बाला चपलेव वलाहकात् ॥ ५९
तया सत्कृतमात्मानं बहु मेने विशाम्पतिः ।
वपुर्विशेषोपनता मनःप्रह्लादनो क्रिया ॥ ६०
का त्वं कस्यासि सुश्रोणि, समयानुचितक्रमम् ।
बिभर्षि तापसीवेशं कला शशमिवेन्दवी ॥ ६१
इति बाला सनिर्ब्बन्धं नृपेण कथितान्वया ।
पृष्टा जगाद सुदती किञ्चिदुच्छ्वसितान्तरा ॥ ६२
अप्सरःसम्भवां साधो, मां निबोध शकुन्तलाम् ।
विश्वामित्रस्य राजर्षेरौरसीमुग्रतेजसः ॥ ६३

पालनादन्नदानाच्च कण्वोऽपि मुनिसत्तमः ।
भर्त्तृ(?)प्रतित्यनदस्माभिस्तस्मादेव पुरा श्रुतम् ॥ ६४
अथ तां कामयामास कामयन्तीं महीपतिः ।
गान्धर्व्वेण विवाहेन गन्धर्व्वानवमद्युतिः ॥ ६५
सा तेन सुतरां रेजे सङ्गता ललिताङ्गना ।
विनयेनेव विपुला लक्ष्मीरच्युतविक्रमा ॥ ६६
तया सङ्गम्य रहसि प्रियया नरपुङ्गवः ।
निरगादाश्रमाद्भूयः समाश्वास्य सुमध्यमाम् ॥ ६७
इदं कुलपतिर्वृत्तं किन्नाम प्रतिपत्स्यते ।
इत्युत्कण्ठियन्नयन्नेव राजधानीं जगाम सः ॥ ६८
अन्वमोदत तत् कण्वोऽप्यवदानं विदांवरः ।
सुतायाः पतिसौभाग्यं लोकैः खल्वभिलष्यते ॥ ६९
धार्म्मिकत्वं पौरवाणां राज्यादप्रच्युरतिस्तथा ।
पतिव्रता ततोवव्रे शान्तात्मानं शकुन्तला ॥ ७०
श्रोत्रियः प्रतिशुश्राव सर्व्वं पूर्व्वक्रमोचितम् ।
ह्लादयन्ति हि बन्धूनां प्रार्थनाः प्रोन्नतान्तरान् ॥ ७१
अथ काले विशालाक्षी कुमारममितौजसम् ।
सुभगं लाञ्छनैः सर्व्वैरसूत पितुराश्रमे ॥ ७२
जातकर्म्मादिकस्तस्य संस्कारविधिरच्युतः ।
विधिना विदधे तावत् काश्यपेन यथाक्रमम् ॥ ७३
तं सर्व्वदमनं नाम्ना निम्ननाभं मुनिर्व्यधात् ।
स हि षड्वर्षदेशीयः सर्व्वानदमयद्बली ॥ ७४
कुमारमनुपक्रोऽसौ कुमारो बलविक्रमैः ।
गुणैः सहृदयश्लाघ्यैस्समप्यमितमत्यगात् ॥ ७५
चिरवासः पुरन्ध्रीणां बान्धवेष्वयशस्करः ।
एकैव चतुरन्तायाः स्वामिनी च शकुन्तला ॥ ७६

इति तां प्रेषयामास सपुत्रां भर्तुरन्तिके ।
साक्षादिव तपःसिद्धिं लक्ष्मीमिव फलोज्ज्वलाम् ।७७युग्मकम् ।
मुनिशिष्याः पुरस्कृत्य तां सपुत्रां प्रतस्थिरे ।
सत्कारविधिनोपेतामर्च्चां मूर्तिमतीमिव ॥ ७८
तामधोवदनां साध्वीं मुनिशिष्यनिवेदिताम् ।
अपवादभियोवाच जानन्नपि जनाधिपः ॥ ७९
नाहं स्मरामि सुश्रोणि, न चाप्याश्रमवासिनाम् ।
अनयप्रणयः शङ्कः किमिदं समुपस्थितम् ॥ ८०
अनार्य्यमिव विज्ञाय मनो मेनकया पुरा ।
त्वमभूर्हिमवत्पृष्ठे निर्म्माल्यस्रगिवोज्झिता ॥ ८१
त्रपैका भूषणं स्त्रीणामिति मिथ्या जनश्रुतिः ।
यदवाच्यमिदं घोरं कथयन्ती न लज्जसे ॥ ८२
लोभनीयाऽप्यसंस्पृश्या परनारीति मद्विधैः ।
त्वं प्रभास्फुरितं रत्नं बिभ्रतीव भुजङ्गमी ॥ ८३
अयञ्चातिबलोबालः सौम्योऽप्यशुभसंशनः ।
औत्पातिकइवोत्पन्नः पुष्पितः शालवृक्षकः ॥ ८४
इममामिषवद्बालं पुरस्कृत्य कलाचरम् ।
आलपन्ती मृगस्यान्तर्मम व्याधीव लक्ष्यसे ॥ ८५
मालेव विषवल्लीनां कुसुमैरुपकल्पिता ।
आपातकमनीयाऽपि त्वमुपेक्ष्या विचक्षणैः ॥ ८६
गच्छ वा तिष्ठ वा चेतो दुष्यन्तस्य न क्षुभ्यते ।
पयोमहत्परिच्छिन्नादयस्कान्तादिवायसम् ॥ ८७
क्षितिपेन ततोबाला परुषं समुपेक्षिता ।
स्थूणेव निश्चला तस्थौ दुःखामर्षत्रपाऽऽकुला ॥ ८८
अथ सा वेपमानाङ्गी कटाक्षैर्नरपुङ्गवम् ।
आलोहितैर्दहन्तीव कथञ्चिद्वाचमाददे ॥ ८९

पुराऽऽश्रमपदे राजन्, विलोभ्य चटुलाचरैः।
स्थानेऽवधीरणा धर्म्मे तस्याः स्थितिवित्तम॥ ९०
रतिः प्रीतिश्च शुश्रूषा याभ्यः समधिगम्यते।
रोच्यं तास्वेव कुर्व्वन्तः पुरुषाः खलु निष्ठुराः ९१
दुःखैरुच्चावचैर्लोका घर्म्मांशुभिरिवानिशम्।
दह्यमानाः प्रहृष्यन्ति दारेषु सलिलेष्विव॥ ९२
व्युच्चरन्ति नराः पत्नीः प्राणानप्यर्पयन्ति याः।
तारुण्यमदमत्तानां मूढ़तेयं गरीयसी॥ ९३
विद्वानपि महाराज, त्वमेवं परुषाचरम्।
प्रत्यादिशन् धर्म्मपत्नीं कथं नाम न लज्जसे॥ ९४
विनीतमपि विद्वांसं श्रीमदोऽतिभवत्यहो।
प्रसन्नसलिलोदारं ह्रदं वा जलदागमः॥ ९५
साधुः परिवदन्नन्यानल्पमप्यनुतप्यते।
मोदते त्वपरोऽतान्तं त्रपतां कुतएव तु॥ ९६
सत्कृत्य सज्जनं सन्तो यथा गच्छन्ति निर्वृतिम्।
निरनुक्रोशमाक्रुश्य कामं वत तथेतरे॥ ९७
विनयेनैव धीमन्तो मन्यन्ते खलु गौरवम्।
परे विचारमूढ़ास्तु व्युत्क्रमेणातिमानिषु॥ ९८
सतां वक्तव्यतां प्राप्तः खलः खल्वविचारयन्।
निन्दन् मन्दमतिर्लोकैर्हसितोऽपि न बुध्यते॥ ९९
अहो दुष्कृतवत्यस्मि पुरेव पितरावुभौ।
त्वमप्यद्य महाराज, मामदोषां यदत्यजः॥ १००
इमन्तु तनयन्तावदात्मनो मूर्त्तमन्तरम्।
अनर्घ्यमिवरत्नाग्र्यं मा त्याक्षीर्मां त्यजन्नपि॥ १०१
आकल्पोज्ज्वलसर्व्वाङ्गप्रियाऽऽलिङ्गननिर्वृतिम्।
अतिशेते रजोक्लिष्टसुताश्लेषणसम्मदः। १०२

आदर्शे निर्मलच्छायं प्रतिबिम्बमिवात्मनः।
विलोक्य तनयं लोके ह्लादते को न मानवः ॥ १०३
अथ वाष्पातिरेकेण कण्ठरोधनिपीड़िता।
करोद करुणं वाला लतेव विगलन्मधुः॥ १०४
तस्यां रुदत्यां विस्पष्टमधुराक्षरशालिनी।
शृण्वतां पौरमुख्यानां वागुवाचाशरीरिणी ॥ १०५
त्वया किल वरारोहा परिणीता शकुन्तला।
दुष्यन्त, तव पुत्रोऽयं भरस्वैनं यशस्विनम् ॥ १०६
कोटराग्निप्रदग्धस्य वृष्टिः श्लाघ्या तरोरिव।
अन्तः सन्तप्यमानस्य तस्याभूत् सा सुधेव वाक् ॥ ७
अथानन्दजवाष्पौघैरभिषिच्यात्मसम्भवम्।
भरणाद्भरतोऽयं मे सुतोऽस्त्वित्ययमभ्यधात् ॥ १०८
साम्ना स क्षमयामास क्षान्तं नाम शकुन्तलाम्।
अपराद्धं मया देवि, लोकवादभयादिति ॥ १०९
त्वयि चितौ च प्रवणं मनोमम निरन्तरम्।
प्रान्तं दिग्बोधयन्तस्य दक्षिणोत्तरयोरिव ॥ ११०
इति सुप्रियमाभाष्य तामसौ प्रियवादिनीम्।
युवराजपदे साधुर्निदधे सुतमादरात् ॥ १११
सा चक्षमे क्षमाशीला साध्वी भर्तुर्व्यतिक्रमम्।
कोपः खलु पुरन्ध्रीणां वल्लभानुनयावधिः ॥ ११२
मेघोन्मुक्तामिव हिमकरश्चन्द्रिकां वारिपूरः
स्निग्धोत्फुल्लामिव कमलिनीं वालभानुप्रबुद्धाम्।
भूषां पूर्व्वामिव बहुमतां सम्प्रदीप्ताग्नितप्तां
कालुष्यान्ते किल परिगतस्तामसौ राजतेस्म ॥ ११३
इति चन्द्रवंशे महाकाव्ये शकुन्तलापरिग्रहोनाम
नवमः सर्गः।

## दशमः सर्गः ।

तस्मिन् समाधाय स राजशब्दं
बभूव शान्तः शमसंस्कृतात्मा ।
सहस्ररश्मिर्निजमस्तसंघं
गुणोत्तरे चन्द्रमसीव राजा ॥ १

अन्वग्ययौ कण्वमुनीन्द्रकन्या
तमादरान्मूर्त्तिमतीव लक्ष्मीः ।
पतिव्रतानां व्रतमन्तरायै-
र्न जातु सौख्यप्रमुखैरपैति ॥ २

प्रागेव दीप्तो महसा कुमारः
स राज्यमादाय पुनर्दिदीपे ।
प्रापेव साक्षात्तमसोपगूढं
ज्वालावलीढो ज्वलनः प्रदोषम् ॥ ३

अभिप्रयातस्य परं जिगीषो-
र्वीरस्य न स्यन्दनचक्रमस्य ।
यतोविजघ्ने खलु लोकसंघैः
स चक्रवर्त्तीति ततो बभासे ॥ ४

पवित्रगङ्गायमुनातटान्त-
र्महाक्रतून् विक्रमशोभमानः ।
समाजहारामरगीतकीर्त्तिः
परे यथा नानुययुर्यशः स्वम् ॥ ५

म्लेच्छान् किरातप्रमुखानशेषान्
वशी परित्याजितराजशब्दान्।
स ग्राहयामास समग्रशक्ति—
र्मालामिवाज्ञां नरलोकपालः॥ ६

रसातलं दैत्यबलावलेपैः
सुराङ्गनाः सङ्क्रमितास्तरस्वी।
चक्राङ्कहस्तैरिततोऽस्य चक्रः
समुज्ज्वहारोज्ज्वलवीरलक्ष्मीः॥ ७

साम्राज्यलक्ष्मीं स परैरधृष्यां
प्रभावमुच्चैस्तरमप्यसंस्थम्।
विचिन्त्य सन्तोषपरो बभूव
नृपोविरक्तो रजसा विमुक्तः॥ ८

उर्व्वीपतौ कुर्व्वति शान्तहिंस्रे
तपोवने संयमिनामजर्य्यम्।
भूमन्युनामा तनयस्तदीयो—
महाभुजो भूमितलं बुभोज॥ ९

पुत्रः सुहोत्रोऽस्य ततः प्रपेदे
समुद्रनेमिं करुणासमुद्रः।
शङ्के तदीयव्रतभङ्गशङ्का—
माज्ञावहत्वादरयोऽप्यकुर्व्वन्॥ १०

प्राप्यं सदा यज्वभिरप्रमेयं
लोकान्तरं निर्व्विशति क्षितीशे।
हस्तीन्द्रहस्तोपमचारुहस्तो—
हस्ती सुतस्तस्य नराधिपोऽभूत्॥ ११

निर्म्माणविज्ञैः कुशलैरथाप्तैः
स निर्ममोऽप्यर्थपतिः परेषु।
पुरीमुदारामलकोपमेयां
विनिर्ममे निर्म्मलकीर्त्तिमालः॥ १२

उच्चैःश्रवस्तोऽपि गुणैरनूनाः
काम्बोजवाह्लीकवनायुदेश्याः।
सुलक्षणा लक्षितसम्पदं यां
पुरीमलञ्चक्रुरजस्रमश्वाः॥ १३

पौराः सदा व्यक्तसुखप्रसादाः
परार्द्धवेशैरधिकोज्ज्वलाश्च।
नार्य्यो नगर्य्यां रुचिरा वभूवु—
र्यस्यां मधुस्यन्दिकथाप्रबन्धाः॥ १४

वैमानिकैर्व्यक्तमिवोर्जिता द्यौः
सरत्नयादोभिरिवार्णवोर्म्मिः।
द्रुमैः प्रफुल्लैरिव भूतधात्री
सहस्रपत्रैः सुरनिम्नगेव॥ १५

तटी सुमेरोरिव कल्पवृक्षै—
र्व्विष्कम्भशैलैस्तदुपत्यकेव।
स्फुरत्प्रभैराभरणैर्व्विरेजे
नगर्य्युदारा पुरवासिभिर्य्या॥ १६ युग्मकम्

पुष्पावलीभिर्व्विपिनस्थलीव
स्फुरत्प्रभा द्यौरिव तारकाभिः।
प्रदीपराजीभिरसौ रजन्यां
रत्नालिभिर्नागपुरीव रेजे॥ १७

पर्य्याकुलां साध्वविहस्तयोधै-
स्तां हस्तिनां नाम पुरीमुदाराम् ।
अधर्षणीयां निजराजधानी-
माखण्डलोयामिव सोऽध्युवास ॥ १८

अवैकभीतो मघवोपमेयो-
धरातलस्थोऽप्यमरैरलभ्यम् ।
निर्व्विश्य भोगं स वशी प्रपेदे
तपो महद्विस्मयमादधानम् ॥ १९

अथाभवत् सागरमेखलायाः
पतिर्भुवस्तस्य सुतः प्रतीतः ।
विकुण्ठनो वक्षसि यस्य साक्षात्
कुण्ठीभवत्यायुधमन्यदीयम् ॥ २०

तस्याजमीढ़स्तनयोऽमलौजाः
समस्तभूपालपतिस्ततोऽभूत् ।
विगाढ़कामाकुलमानसानां
यो योषितां प्राप रसोपगूढ़म् ॥ २१

पूर्व्वाचलादुग्लौरिव लोककान्तः
शुद्धारणेरग्निरिवाग्नितेजाः ।
तस्मादभूत् श्लाघ्यतमैर्गुणौघैः
सुसम्भृतः सम्वरणाभिधानः ॥ २२

महौजसः संयमिनोऽप्यशेषा-
नंधश्चिकीर्षोश्चरितैस्तपोभिः ।
पितुर्निदेशात् त्रिदशोपमेयो-
भूपालभावं स विभुः प्रपेदे ॥ २३

स प्रांशुरुच्चैर्म्मनसा मनस्वी
दीर्घौभुजाभ्यां सुविशालवक्षाः ।
अक्षोभितान्तःकरणः परेषां
क्षिप्नुः समीरो रजसामिवासीत् ॥ २४

प्रतापवह्निः परितोविसारी
निरङ्कुशो दावइव प्रवृद्धः ।
निरिन्धनत्वात् किल तस्य पश्चात्
शशाम नान्यैः प्रतिहन्यमानः ॥ २५

ऊर्म्मिव्रजैरौर्व्वइवाम्बुराशे–
र्धाराप्रपातैरिव विद्युदग्निः ।
तस्य प्रतापज्ज्वलनो रिपूणां
जज्वाल नार्य्यस्रुभिरुक्षितोऽपि ॥ २६

अत्यन्तमासीत् स्पृहनीयकान्तिः
साक्षात् क्षपानाथइवात्मनां सः ।
तेजोविशेषात्तु सदा परेषां
निदाघभास्वानिव दुर्निरीक्ष्यः ॥ २७

स प्रश्नया साधु समक्षया च
जिगीषयाऽन्योन्यमिवातिमात्रम् ।
प्रवृद्धया बुद्धिमतां वरिष्ठो-
निरास साहश्यकथामपि स्वाम् ॥ २८

स दण्डमाखण्डलतुल्यधामा
यथाऽपराधं नृपतिर्व्विवेद ।
न चक्षमे नीतिगुणैस्तदोषैः
पूतासु कर्तुं स पदं प्रजासु ॥ २९

विमानना वावदलोककोपे
मानापमोदाय च वानिनीनाम्।
सुदीनबद्धाञ्जलिरास लोक—
स्तस्मिन् भुवं रक्षति भूमिपाले॥ ३०

प्रजाः प्रजारक्षणकर्म्मदक्षा—
त्तस्मादवापुर्व्विनयं नयज्ञ।
सहस्ररश्मेरिव आह्नीय—
मालोकमौष्ण्यस्य समस्तलोकाः॥ ३१

न तस्करः कोऽपि बभूव राष्ट्रे
संरक्षतस्तस्य तमोदिवैव।
दिवाकरः केवलमल्पमल्प—
मपाहरद्धारि तथाप्यनल्पम्॥ ३२

मूले द्रुमाणां मकरालयानां
वेलासु शून्यालयकाननेषु।
सार्थे च पण्यानि निधाय सार्था—
निग्रामनेषुः शयिताः सुखेन॥ ३३

तस्य प्रतापेन समुद्बभासे
महीपतेः प्रार्थितदुर्लभेन।
तेजोनिधेर्द्यौरिव भूतधात्री
तमोभिदा निष्प्रतिघोदयेन॥ ३४

महर्षयः शूरमिवातिशूरं
गुणैकसिन्धुं तमनिन्द्यसत्यम्।
आराधयाञ्चक्रुरुदारवाचो—
विप्रेतरे प्राञ्जलयो नृपालम्॥ ३५

शक्तिस्त्रिलोकीपतितुल्यधाम्न-
स्त्रिसाधना तस्य सदा दिदीपे ।
लब्धव्यवैकल्यवशात्तु साऽभू-
न्निमीलिता चन्द्रकला दिवेव ॥ ३६

न जातु मन्त्रं विविदुः कथञ्चित्
पदोद्भवा वेदमिवापरेऽस्य ।
तेषाममुं दूतमुखान्मनस्वी
योगीव सर्व्वं स विदाम्बभूव ॥ ३७

आकृष्टसामर्थ्यमिवाचलायाः
कार्य्यादिवाभ्यन्तरजं विकारम् ।
समोच्छ्रितं केवलमस्य लोकाः
फलोदयाद्दैवमिवावजग्मुः ॥ ३८

अमित्रवर्गेष्वपि मित्रधामा
विनीतवेशः स्मितपूर्व्वभाषी ।
वशीकृतान्तःकरणो विशेषा-
द्द्वेषेऽपि नासौ भ्रुकुटीं बबन्ध ॥ ३९

प्रतीपभूपालगणेषु ताव-
त्तत्याज योयः सितमातपत्रम् ।
तमस्य तापः सुखयाम्बभूव
बालस्य भानोरिव शीतकाले ॥ ४०

क्रियाऽपवर्गेष्वनुजीविवर्गः
प्रसादमस्य ध्रुवमाससाद ।
इन्दोरभिख्येव सतां मनस्तः
कृतज्ञता नाम न खल्वपैति ॥ ४१

यथोपरिष्टाद्घनपत्त्रराजे—
श्छायातरोर्मूलमवाप्य पान्थाः ।
तथा सितच्छत्त्रवतोऽस्य पादं
नृपाः समाश्रित्य भृशं ननन्दुः ॥ ४१

महौजसस्तस्य गुणाः समस्ता—
स्तमोऽपहस्येव विदीप्यमानाः ।
अनन्यसाधारणतामुपेताः
परार्थमात्रैकफला बभूवुः ॥ ४२

सदाऽपसर्पैः प्रकृतीर्विवेद
विशेषतः स्वाननुजीविवर्गान् ।
स खल्वजस्रं मनसश्चलत्वं
प्रयोजनापेक्षमिति प्रजानन् ॥ ४३

मृणालिनीषु द्युमणेरिवाब्धे—
र्लसत्तरङ्गास्विव दक्षिणस्य ।
प्रियास्विव प्रेम महीक्षितोऽभूत्
प्रजासु सर्व्वास्वविशेषमेव ॥ ४५

स हेममालीव करावलीभिः
पूर्णः प्रजा दत्तकरावलम्बः ।
लता इवात्यन्तमुपप्लवेभ्यो—
ररक्ष लक्ष्मीश्च पुपोष तासाम् ॥ ४६

मृगाधिराजस्य मृगैरिवान्यै—
स्तमोऽपहस्येव समस्तमोभिः ।
न विग्रहस्तस्य बभूव राज्ञो—
द्रुतैः प्रभावात् किल राजलोकैः ॥ ४७

राज्ञो बभूवुः किल मन्त्रिणोऽष्टौ
गुणैरुदारैर्गुरवोऽप्यगर्व्वाः ।
प्रियंवदानामखिलेषु येषां
परस्परद्वेषलवोऽपि नासीत् ॥ ४८

न केवलन्ते वयसैव वृद्धा–
गुणैः समस्तैरपि लोककान्तेः ।
तथापि शीलैर्व्विनयैस्त्रपाभि–
र्नीचैरलक्ष्यन्त गुणोत्तरेषु ॥ ४९

कदाचिदुच्चैःस्थललक्ष्यपात–
कुतूहली वासवतुल्यतेजाः ।
जगाम राजा रुचिरं समन्ता–
न्मृगावलीविभ्रमकाननान्तम् ॥ ५०

मरुद्भिराकम्पितपल्लवाग्रै–
र्विकीर्णपुष्पावलिरेणुजालम् ।
सन्ध्याभ्रलेशैः शकलीकृतास्त्रं
रवेरिव व्योमतलं नृसोमः ॥ ५१ युग्मकम् ।

स सद्वितीयोऽपि युवा सुवेशो–
नृपोऽनपत्यो न तथा दिदीपे ।
सधातुरागोऽनुगतः स्रवन्त्या
शैलो यथा वृक्षलताविहीनः ॥ ५२

इत्यस्य राज्ञो व्यसनेऽपि लिप्सां
न वारयामास गुरुर्व्वशिष्ठः ।
प्रज्ञानचक्षुर्बुबुधे स साध्वीं
तामन्ततस्तन्तुकरीं नृपस्य ॥ ५३ युग्मकम् ।

ततो विमर्द्दाद्द्रुते बलाना—
मध्वा विशालो निविडेऽप्यरण्ये ।
मुदे तदानीं वनदेवताभि—
र्व्विनिर्म्मितो राजइवोरुधाम्नः ॥ ५४

धातुद्रवैरद्रिरुचं विभिन्ना—
मनोकहानां महनीयकीर्त्तिः ।
आहार्य्यसौन्दर्य्यगुणाधिकत्वाद्—
विलोक्य लक्ष्मीं क्षितिपोननन्द ॥ ५५

स नागवल्लीवलयावनद्ध-
पूगान् स्फुरत्प्रान्तगनारिकेलान् ।
लतागृहानध्वगकाङ्क्षनीयान्
वनान्तलक्ष्मीनिलयानपश्यत् ॥ ५६

प्रमत्तकादम्बकदम्बकेली—
विलोलवीचीन्युरुमारसानि ।
स्वच्छोत्तराम्भांसि ददर्श भूयः
सरांसि सोऽम्भोरुहरंगुमन्ति ॥ ५७

खड्गेन खड्गानवदाय भल्लै—
र्व्विविध्य कोलान् नरलोकपालः ।
भयेन गुप्तानिव पापराशीन्
अरीनिव व्याघ्रगणान् जघान ॥ ५८

धनुर्धरस्तीव्रतरैः पृषत्कैः
सिंहानशेषानपि नामशेषान् ।
भूपालसिंहो भयमुद्धरिष्यन्
स्तम्बेरमाणामरसा चकार ॥ ५९

मृगानुगामीव पिनाकपाणिः
स्फुरत्पृषत्कः पृषतानुसारी।
चलावतंसस्तुरगाधिरूढो—
नराधिपः पर्व्वतमाससाद॥ ६०

विशेषपारिप्लवलोचनाभ्यां
प्रकातराभ्यां ककुभः प्रपश्यन्।
मुहुर्म्मुहुर्मीलितशून्यदृष्टि—
र्विवर्त्तितम्लानमुखः परस्तात्॥ ६१

दर्भाङ्कुराढ्यैः श्रमफेनपुञ्जैः
स्थलीमलङ्कृत्य वलिप्रभेदैः।
जवादनालक्ष्यगतिक्रमः स—
न्नसावरण्यं निविड़ं विवेश॥ ६२ युग्मकम्

तस्मिन् विलीनेऽपि नृलोकपालं
तदर्थमुच्चैर्व्विपिनं विविक्षुम्।
निवारयिष्यन्निव फेनराजिं
वमन् विसंज्ञोऽस्य तुरङ्गमोऽभूत्॥ ६३

स नष्टवाहो महनीयकीर्त्ति—
र्महीपतिर्म्मानधनाग्रगामी।
व्यदह्यतान्तः परिलुप्तभृत्यः
सम्भावितो लोकइव प्रवासे॥ ६४

उच्चैःश्रवःसोदरमत्रदारं
विमोढ़पूर्व्वद्विषदस्त्रपातम्।
संग्राममदक्षं स गुणानुरागात्
शुशोच पत्रं नृपतिर्न लौल्यात्॥ ६५

अच्छोपलप्रख्यजलप्रपातः
शिलोच्चयस्य क्षितिपालचेतः ।
मुक्ताफलस्थूलतुषारवंश-
श्चिरस्य लब्धावसरो जहार ॥ ६६

नभोविवस्वानिव वैजयन्तं
वृत्रस्य हन्तेव नराधिपेन्द्रः ।
मनःशिलादिच्छुरितैः स्फुरन्त-
मभ्रंलिहं शैलमथारुरोह ॥ ६७

पृक्तः परार्द्ध्यगिरिनिर्झरशीकराग्रै-
राकम्पितस्तवकराजिपरागमिश्रः ।
सम्राजमूर्ज्जितमुपाचरदप्रमत्तः
शैलोनु वर्णसुरभिं सुरभिर्नु वातः ॥ ६८

आवर्ज्जितं स्थलजपङ्कजमुज्झिताङ्ग-
मन्यन्नमल्पमकरन्दतया द्विरेफैः ।
तस्योपरि क्षितिपतेः सुतरां बभासे
साक्षादिवाद्रिविधृतं नवमातपत्रम् ॥ ६९

पार्श्वद्वये प्रचरतां चमरोच्चयानां
लाङ्गूलवालवलयैः परितो विलोलैः ।
उत्सृष्टसर्व्वपरिवारजनोऽपि राजा
योषिद्वृजैरिव रराज स वीज्यमानः ॥ ७०

तेजोविशेषसुरभेः सुरसिद्धसंघै-
रुद्गीयमानयशसो नृपतेर्ब्बभूव ।
शैलेयगन्धबहुला द्रुतधातुराजिः
सिंहासनप्रतिनिधिस्तदधित्यकैव ॥ ७१

स्रोतोऽन्तरेषु सरितां रजतद्रवाभो--
जाज्वल्यमानइव भानुशिलासु भूयः ।
अच्छोपलेषु सुतरां परिमूर्च्छितः सन्
तीव्रातपोऽपि नृपतिं सुखयाम्बभूव ॥ ७२

एकत्रितौ स्वरमनेकवशैर्यशोभि--
श्चन्द्रांशुकुन्दकलधौतसुधाऽवदातैः ।
विभ्राजमानमचलोऽप्यनलोपमेयं
तं कीचकध्वनिरुपस्थितमोपतस्थे ॥ ७३

आमेखलं स्थितिमतां जलदव्रजाना--
मद्रेस्तड़िद्विलसितद्विगुणोज्ज्वलानाम् ।
भासां रवेश्च नितरामवलोक्य राजा
रोचिः परस्परचयादधिकं ननन्द ॥ ७४

सोऽमन्यत क्षितिपतिः प्रथितोपचारं
वर्षत्पयोदवलयेषु परिस्फुरन्तम् ।
श्यामोर्द्ध्वभागकलधौतसहस्रदण्ड--
ष्वभ्युन्नतं रुचिरहर्म्यमिवाद्रिराजम् ॥ ७५

अथ कमलवनान्तर्लीनगात्राः प्रियाया--
भ्रमवदलिकदम्बैर्दष्टविम्बाधरायाः ।
स्वयमपगतमन्योः किन्नरं प्रोल्लसन्तं
प्रणतिभिरकृतार्थं पार्थिवः प्रेक्ष्य रेमे ॥ ७६

इति चन्द्रवंशे महाकाव्ये संवरणमृगयाभिग-
मनोनाम दशमः सर्गः ॥ ० ॥

—•o•—

## एकादशः सर्गः ।

अथाद्रिशोभेक्षणलोलचक्षु-
रिन्दीवराक्षीमपरोनवेन्दुः ।
काञ्चित् कुमारीं रुचिरामपश्यत्
साक्षादुमां वा कमलालयां वा ॥ १

स्फुरत्प्रभां विद्रुतहेमगौरीं
विडम्बयन्तीं तड़ितं स्वकान्त्या ।
परःसहस्रामपि तामजस्र-
कटाक्षपातच्छलतो दधानाम् ॥ २

नेत्रैर्भृशं निर्व्विशतामुदारां
पदेपदे कान्तिसुधां वलक्षे ।
कलानिधानस्य कलामिवोच्चै-
र्गुणोत्तरां निर्वृतिमादधानाम् ॥ ३

रत्नैः स्थलीं हेममयीमिवोच्चैः
प्रफुल्लपुष्पैरिव चारुवल्लीम् ।
वसन्तलक्ष्मीमिव सत्प्रवालैः
स्फुरत्परार्द्ध्याभरणैर्लसन्तीम् ॥ ४ कलापकम् ।

तेजःप्रभावेन रवेः प्रभेव
दिव युरता वह्निशिखेव दीप्ता ।
कान्त्या प्रसादेन च सा दिदीपे
साक्षात् सुधांशोर्व्विमला कलेव ॥ ५

सुलोचना शैलशिरोऽधिरूढ़ा
हिरण्मयीव प्रतिमा रराज ।
स्त्रीणां हि मूर्त्तिः कमनीयतायाः
स्थली कथा कैव तु तद्विधायाः ॥ ६

रूपस्य नेपथ्यविधेश्च तस्याः
स्फुरत्प्रभाभिश्छुरितोरवैश्च ।
शिलोच्चयो वृक्षलताभिरुच्चै--
र्हिरण्मयो मेरुरिवाललक्षे ॥ ७

दूरादयस्कान्त इवायसं सा
तन्वी नरेन्द्रस्य मनश्चकर्ष ।
चलं हि चित्तं तृणवन्नराणां
वातेव नारी हरति प्रकामम् ॥ ८

तदेकलग्नेन विलोचनेन
नराधिपान्तःकरणं निरीय ।
कुल्योदकं क्षेत्रमिवावतीर्णं
जगाम साक्षादिव तन्मयत्वम् ॥ ९

सा राजहंसीव चचाल बाला
यतोयतो धातुरपूर्व्वसृष्टिः ।
दृष्टिर्नरेन्द्रस्य ततस्ततोऽभूत्
सपक्षपाताऽप्यपपक्ष्मपाता ॥ १०

स यन्त्रवद्दर्शितचित्तवृत्ति--
श्चेष्टताङ्गैरवशैर्हृतौजाः ।
अन्यन्न शुश्राव किमप्यमिथ्या
मिथ्याऽपि तस्यास्तु वचांसि भूयः ॥ ११

अथात्मयोनेरिव षष्ठमस्त्रं
साक्षादिवाद्यस्य रसस्य मूर्त्तिः।
राजानमुद्दिश्य मुमोच बाला
विद्युद्विलासानिव सा कटाक्षान्॥ १२

तया मुहुः सस्पृहमीक्ष्यमाणो-
मनोभवास्त्रद्विगुणावसन्नः।
मेने स सिक्तं सुधयेव साक्षा-
दात्मानमारूढमिवाम्बरिक्षम्॥ १३

देहे तदानीं कमनीयमूर्त्तेः
सान्द्रः प्रमोदो न ममौ नृपस्य।
इतीव गाढं पुलकच्छलेन
विलोलचित्तामपि तामपेदे॥ १४

तदङ्गनारत्नमनङ्गदर्पं
विलोचनाभ्यां पिबतोऽलसाभ्याम्।
राज्ञस्त्रिलोकीमहिलास्ववस्था
सुधाजुषः क्षारजलेष्विवाभूत्॥ १५

विलोकयन् तां कमलायताक्षीं
चक्षुःफलं प्राप नृपस्तथाक्षि।
अलक्षि यच्चारु पुरा न तत्र
लवोऽप्यमुष्याः किल चारुतायाः॥ १६

तस्या गुणालीमयपाशबद्धो-
विशेषनीलोत्पललोचनायाः।
अभून्न लोकाधिपतिस्तदानी-
म्पदम्पदादुच्चलितुं समर्थः॥ १७

उद्दिश्य तामिन्दुमुखीं नरेन्द्रः
शिलीमुखैः पुष्पधनुर्धरस्य ।
शिलाघनेऽसौ हृदये निजघ्ने
पुष्पोपमो यत्र परस्य पक्षो ॥ १८

अनिन्दिताया वदनारविन्द—
मलोकसामान्यमसौ विलोक्य ।
गाम्भीर्य्यवानप्यवलुप्तधैर्य्यो—
विधोरभूद्विम्बमिवाम्बुराशिः ॥ १९

श्रुतान्वितः शास्त्रजलैरजस्रं
प्रक्षालितान्तःकरणोऽपि राजा ।
तन्निघ्नतां प्राप मनोरमस्य
रूपस्य कोऽपि स्फुरति प्रभावः ॥ २०

विचारमूढो नरलोकपाल—
स्तस्थौ क्षणं लेख्यगतोपमेयः ।
क्रमेण तस्याः सविधं प्रपेदे
नृपो नलिन्या इव राजहंसः ॥ २१

स्मरानलैर्दग्धकलेवरोऽसौ
सम्भुक्षितैश्चारुवपुर्गुणेन ।
प्रचक्रमे वक्तुमपक्रमस्तां
स्थितिं ह्यतिक्रामति चित्तजन्मा ॥ २२

का त्वं विशालाक्षि, परिग्रहो वा
कस्यासि वा सुन्दरि, कस्य हेतोः ।
एकाकिनी घोरवने चरन्ती
विराजसे काननदेवतेव ॥ २३

त्वं मानवी देवकुलोद्भवा वा
अपारस्थली सर्व्वविलासिनीनाम् ।
तथाहि लोकत्रयविश्रुता या
नार्य्यो न तास्त्वत्कलयाऽपि तुल्याः ॥ २४

त्रिलोकसौन्दर्य्यमयैस्तवाङ्गैः
स्फुरत्प्रभैस्तर्जितकान्तिरेषः ।
पुरस्कृतो रत्नपरम्पराभि—
र्वेशोऽन्यनारीस्पृहणीय एव ॥ २५

स्फुरन्ति कान्त्या ननु भूषणानि
भूष्याणि जातानि तवाङ्ग सङ्गात् ।
विष्णोः प्रभाभिस्छुरितान्तराणि
ज्योतींषि साक्षादिव कौस्तुभस्य ॥ २६

वेशैरलं सुन्दरि, वन्यशोभै—
र्मनोहरा मूर्त्तिरियं हि साक्षात् ।
पद्मावलीं वाञ्छति विद्रुतं वा
परार्द्धवर्णैरधिकां न लोकः ॥ २७

का नाम लक्ष्मीरमृतस्य खण्डै—
राखण्डलास्त्रस्य परैश्च चित्रैः ।
गन्धः परो गन्धमृगस्य न स्याद्—
गुणोत्तरः किन्तु जितः सएव ॥ २८

उद्दिश्य साक्षाद्भवतीं मनोभूः
क्षिणोति मां शत्रुवदुत्पलाक्षि ।
अवेहि मे सुन्दरि, जीवितेन
मनोरथो हस्तगतस्तवेति ॥ २९

अलं समालप्य यदत्र बाले,
तवात्मदानादपरोऽस्ति हेतुः ।
न मां क्षमी रक्षितुमम्बुदानां
शुष्यद्दुमं शस्यमिवाम्बुदानात् ॥ ३०

सा त्वं भवत्याः कमनीयकान्ति—
विधेयमाश्वासयितुं प्रसीद ।
ऋते प्रभोर्भाविनि, काङ्क्षितानां
कोऽन्यो भवेद्विघ्नजनस्य दाता ॥ ३१

एतावदुक्त्वा विरराम राजा
पीयूषवत्तद्वचनं पिपासुः ।
कामं न सा किञ्चिदुवाच बाला
मेने स तस्यास्तु वचोऽनुकूलम् ॥ ३२

साऽन्तर्दधे किञ्चिदभाषमाणा
तड़ित्तमिस्रास्विव यामिनीषु ।
प्रसह्य सोऽभूत् परिलुप्तदृष्टि—
गाढ़ान्धकारेष्विव गाहमानः ॥ ३३

अथेन्द्रियाणां विनिरुद्धवृत्ति—
मन्याङ्गनारोपितताभिषङ्गम् ।
प्रेम्णा प्रवाते तरुवत् पतन्तं
क्षितोश्वरन्तं क्षितिरालिलिङ्ग ॥ ३४

तथाविधं पार्थिवमन्तरिक्षाद्—
विलोक्य बाला स्पृहणीयलक्ष्मीम् ।
तमेव देशं सहसा प्रपन्ना
पस्पर्श हस्तेन मुदा जड़ेन ॥ ३५

दशान्तरं प्राप्तमथात्महेतोः
प्रत्यागतासुं स्वकरावमर्शात् ।
वाष्पातिरेकाविललोलदृष्टिः
स्खलद्गतिः सा निजगाद भूपम् ॥ ३६

आलोकमूलं जगतां य एक—
स्तेजो यदीयं किल देवशिल्पी ।
अशातयत्तस्य निबोध साधो,
तपत्यभिख्यां तनयां रवेर्माम् ॥ ३७

यदैव दृष्टोऽसि मनोहरश्री—
र्मया शरच्चन्द्रनिभस्त्वमुच्चैः ।
तदा प्रभृत्युच्चलितं मनामे
मत्पारतन्त्र्यं परमन्तरायः ॥ ३८

का नाम कन्या कुलजा त्रिलोक्यां
प्रख्यातशीतांशुकुलप्रदीपम् ।
सम्राजमुर्जस्वलमात्मवन्तं
पतिं मुदा कामयते न लब्धुम् ॥ ३९

मालेव यस्याशु निदेशमाला
समुह्यते मौलिकुलैर्नृपानाम् ।
राजानमासाद्य युवानमेतं
पतिं न का नन्दति कामिनीषु ॥ ४०

स त्वं महाराज, मनोजवाणै—
रुच्चैस्तरां मय्यनुरक्त एव ।
मनस्विनीनामपि भामिनीनां
किन्नाम सौभाग्यमतः परं स्यात् ॥ ४१

माऽहं महाराज, कुमारभावा—
न्न पारये कर्त्तुमपि प्रियं मे ।
कुमारिकाणां गुरुपारतन्त्र्यं
प्रंसन्ति पाणिग्रहणान्तमेव ॥ ४२

अभ्युत्सहे गन्तुमतः सकाशं
न ते प्रकामद्रुतमानसाऽपि ।
मनोऽभिलासप्रतिकूलभावा—
दधीनता नाम दुनोति चेतः ॥ ४३

लौल्यादकार्य्यं यदि नाम कुर्य्यां
प्रसिद्धवंश्याऽपि कुलाबलाऽपि ।
न केवलं मे कुलकामिनीना—
ममार्ज्जनीयं ह्ययशः कृतं स्यात् ॥ ४४

स त्वं तपोभिस्तपनं यतात्मा
प्रसाद्य भक्त्या नृप, मां वृणीष्व ।
प्रणीतएव ह्यनले जुहोति
यज्वा हविर्न ज्वलनान्तरेषु ॥ ४५

श्रोत्रैकपेयं मधु वेदिमध्या
किञ्चिद्विपञ्ची परिमूर्च्छितेव ।
आलप्य सा मौनमियाय बाला
पद्मावली प्रोषितषट्पदेव ॥ ४६

सहस्रपत्रोपमचारुनेत्रं
श्रोत्रान्तविस्फारितलोचनाभ्याम् ।
राजानमापीय चिराय बाला
प्रपश्यतस्तस्य तिरोबभूव ॥ ४७

तद्विप्रलम्भात् परिलुप्तसंज्ञं
धरातलन्यस्तमिवेन्द्रकेतुम् ।
ददर्श राजानमशेषसैन्यै-
रन्विष्य भूयोनरराजमन्त्री ॥ ४८

तथाविधं वीक्ष्य धराऽधिनाथं
हुताशनैर्दग्ध इवैष साक्षात् ।
ह्रियाहतो दिग्धशरैरिवाभूत्
दुनोत्यमात्यान् व्यसनं प्रभूणाम् ॥ ४९

स स्वे हृदुःखोदयविह्वलः सन्
प्रज्ञावयःकीर्त्तिनयैर्वरिष्ठः ।
उत्सङ्गमत्यन्तविलुप्तसंज्ञं
पितेव पुत्रं नृपमानिनाय ॥ ५०

स प्राप्य नीलोत्पललोचनायाः
समागमं मध्यमलोकपालः ।
ननन्द तावत् प्रलयेऽप्यसत्य-
मतप्यतात्यन्तमपि प्रबुद्धः ॥ ५१

भ्रमेऽम्भसां नौरिव चित्तवृत्ति-
र्मुहुर्मुहुर्भ्रान्तिमगाद्विकर्णा ।
कर्णान्तविश्रान्तविलोचनाया-
स्तस्या वियोगान्मनुजेश्वरस्य ॥ ५२

ततः कथञ्चित् स्थिरधीः स राजा
विसर्जयामास विनिर्जितारिः ।
तं मन्त्रिणं मन्त्रविधानदक्षं
विहाय सर्व्वानमुयायिवर्गान् ॥ ५३

ततः परामृश्य विमृश्यकारी
राजा शुचिः प्राञ्जलिरूर्द्धदृष्टिः ।
शूरं समाराधयितुं कृतात्मा
प्रचक्रमे प्रक्रमतर्जितारिः ॥ ५४

विज्ञप्तवान् बोधमयेन राज्ञः
स चक्षुषा क्लैव्यमलक्षितः सन् ।
गुरुर्व्वशिष्ठः परमार्त्तमेनं
मूर्त्तः किलोपायइव प्रपेदे ॥ ५५

आश्वास्य युक्तार्थपदैर्व्वचोभिः
शुचं स राज्ञो लघयाम्बभूव ।
योगप्रकारैर्लघिमानुकूलै-
र्मुनिः स्वमात्मानमिवाचिरेण ॥ ५६

प्रक्षीणशोकः क्षितिपोमहर्षे--
राश्वासवाक्यैः परिवर्द्धिताशः ।
विचिन्त्य भूम्ना तमचिन्त्यशक्तिं
स प्रार्थितं हस्तगमप्यमंस्त ॥ ५७

ततोमुनिः प्राप्य तपोमहिम्ना
सूर्य्योपमेयः किल सूर्य्यलोकम् ।
तेजोनिधानं मनुजाधिपस्य
क्लैव्यैकमूलं तपतीं ययाचे ॥ ५८

सुतां तदाराधनतः प्रसन्न—
स्तस्मै स दातुं स्पृहयालुरेव ।
रविः पुनः सस्पृहमर्थ्यमानो—
महर्षिणा प्रत्यवदत्तथेति ॥ ५९

आदाय दिव्यामनवद्यरूपां
विशाम्पतिप्रेमवशां विवस्वान् ।
तां सुन्दरीमिन्दुकलामिवैकां
समर्पयामास महर्षिहस्ते ॥ ६०

स तामुदारां प्रतिगृह्य कन्यां
याज्यार्थमादित्यविसर्ज्जितः सन् ।
समच्युतात्मा सममम्बुजाक्ष्या
तयाऽम्बराङ्गमिमवाततार ॥ ६१

सा भामिनी भूतलमापतन्ती
स्फुरत्प्रभाभिर्नभसोऽन्तरालम् ।
प्रद्योतयन्ती द्रुतहेमगौरी
दिवश्च्युता विद्युदिवावभासे ॥ ६२

आलोक्य तामिन्दुमुखीं नरेन्द्रो—
मूर्त्तां तपःसिद्धिमभूत् प्रतीतः ।
क्लेशोऽपि लोकस्य फलोदयेन
सहर्षमन्तःकरणं करोति ॥ ६३

राजानमासाद्य रवेस्तनूजा
संहृष्टरोमा सुतरां बभूव ।
शशाक सा नम्रमुखी न किञ्चि—
दाभाषितुं वा विनिरीक्षितुं वा ॥ ६४

तत्र प्रसिद्धसुरसिद्धगणैः पवित्रे
वित्रस्तहिंस्रनिचये लघुशैलशृङ्गे ।
पुष्पावलीविलसितोज्ज्वलभक्तिशोभे
तत्पाणिपीड़नविधिर्व्विधिवद्बभूव ॥ ६५

अग्राह पल्लवरुचं करमुत्पलाक्ष्याः
स्वेदार्द्रमार्द्रहृदयः स्खलदङ्गुलीकः ।
कामस्य मूर्त्तिविकलस्य समं कलाभिः
साक्षादिव प्रकटितं प्रथमप्ररोहम् ॥ ६६

इति चन्द्रवंशे महाकाव्ये तपतीपरिणयो-
नामैकादशः सर्गः ॥



## द्वादशः सर्गः ।

नितान्तगुर्व्वीं विनिधाय पार्थिवो—
धुरं धरित्र्याः सचिवे विसृज्य च ।
गुरुं गुरुश्रोणिपयोधरश्रिया
श्रियेव रेमे स तया शिलोच्चये ॥ १

सुगन्धिभिः पुष्पफलैः समुज्ज्वले
लतागृहे पर्व्वतकन्दरासु च ।
अधित्यकायामपि धातुराजिभिः
स्फुरत्प्रभायां नरवाहनोपमः ॥ २

वसन्तपुष्पावलिभक्तिमञ्जुले
मरुद्भिराकम्पितबालपल्लवे ।
निकुञ्जपुञ्जे रुचिरे प्रियासखः
पुरन्दरो नन्दनकानने यथा ॥ ३ (विशेषकम्)

तया वनान्ते विहरन् महीपतिः
समं करिण्येव करी मदोत्कटः ।
निनाय सोमोपमचारुदर्शनः
समा दिनानीव स दीनवत्सलः ॥ ४

शरन्निशानाथसमानरोचिषः
सुखेन तिस्रः शरदश्चतुर्गुणाः ।
व्यतीयुरत्येति विमुग्धचेतसां
क्षणेन कालोविपुलोऽप्यलक्षितः ॥ ५

अथास्य राष्ट्रं सचिवापराधतो—
परो बबाधे नितरामवग्रहः ।
चिणोति लक्ष्मीं महतामपि ध्रुवं
महीपतीनामसमीक्ष्यकारिता ॥ ६

स शुश्रुवान् दूतमुखाद्दिशाम्पति-
रुपप्लवं प्राप पुरीञ्च वञ्चिताम् ।
महीञ्च सर्व्वामकरोज्जलाप्लुतां
वृषा प्रसङ्गोऽपि शुभावहः सताम् ॥ ७

चिरेण तं प्रार्थयितव्यदर्शनं
विलोचनैर्लोलतरैः प्रजेश्वरम् ।
प्रजाः पिबन्त्यो द्विगुणानुरागतो-
विसस्मरुः पूर्व्वविपत्तिमञ्जसा ॥ ८

प्रजाप्रियोऽसौ नृपतिर्न केवलं
प्रजाव्यलीकेन बभूव दुःखितः ।
प्रचक्रमे वर्द्धयितुं नयक्रमै—
र्विपत्कृशां सम्पदमप्यतन्द्रितः ॥ ९

न यावदेकव्यसनातिकर्षिताः
प्रजा नियन्तुः प्रकृतिं प्रपेदिरे ।
बभूव तावद्व्यसनान्तरोदयो-
र्विपत्प्रवृत्तिः सुलभैव देहिनाम् ॥ १०

रुरोध पञ्चालमहीपतिर्ब्बलैः
पुरं बलाद्वातिसमुज्ज्वलप्रभम् ।
अकालसम्भूततुषारराशिभि—
र्दिनोदयोबालमिवार्कमण्डलम् ॥ ११

विशेषकोलाहललीनबृंहितो-
रजोभिराच्छादितभास्करच्छविः ।
शरप्रभाशान्ततमःपरम्परो-
रणस्तयोः संववृते सुदारुणः ॥ १२

ततः कवोष्णैः क्षतजैः समुक्षिताः
सकण्टकाः प्रोतशिलीमुखच्छलात् ।
रणेषु योधाः शतशो विशिश्यिरे
ध्रुवं कृतघ्ना व्यथितासुराशिभिः ॥ १३

प्रभावविद्रावितराजमण्डल—
स्तमोऽन्धकारो तमसेव भास्करः ।
स तेन राज्ञा विजितः क्षितीश्वरो-
गतिः कृतान्तस्य नृणां दुरत्यया ॥ १४

स विद्रुतो विद्रुतवीरमण्डलो—
दिवावसाने प्रभयेव भास्करः ।
अलीयतोच्चैः सलिलेष्विवाम्बुधे—
र्वनेषु पत्न्या नियतेर्वशं गतः ॥ १५

शुशोच नात्मानमसौ नृपस्तथा
यथा प्रजा दुर्नयदुःखभागिनीः ।
त्रिलोकराज्यादपि खल्वभीप्सितं
यशोहि तद्रक्षणजं महीक्षिताम् ॥ १६

यथैव सिंहासनगोचरं नृपं
तथैव दर्भाङ्कुरवन्यभूमिषु ।
समानुरागेण तपत्युपाचरत्
न सम्भृतं प्रेम किमप्यपेक्षते ॥ १७

निसर्गतः प्रेम तयोः समुज्ज्वलं
व्यलीकसन्तमसहृदोस्तु सम्प्रति ।
न तावदाप्यायनमेव केवलं
पुपोष सौभाग्यविशेषमन्वहम् ॥ १८

वशिष्ठशक्त्याऽथ पुनर्व्विशाम्पतिः
श्रियं परेभ्यः किल निश्चकर्ष सः ।
उपप्लुतां सम्यगुपप्लवात्यय—
स्तमो मुखाच्चान्द्रमसीमिव द्युतिम् ॥ १९

परेण दैवात् परिभुक्तसम्पदं
महीं नृपालो महनीयविक्रमः ।
अभुङ्क्त भूयोऽपि सशङ्कमात्मवान्
गुरुप्रमोदः प्रमदामिवोत्तमाम् ॥ २०

वसुन्धरायां वसुधाधिपोयथा
तथा तपत्यामनुरक्तमानसः ।
न केवलं रञ्जयति क्षपाधिपः
क्षपां स पुष्यत्यपि राजिमुद्भिदाम् ॥ २१

ततोदधाना महनीयतेजसः
प्रजानिषेकं महिषी रराज सा ।
विवस्वदस्रं बहुलात्यये विधो—
रजस्रलक्ष्मीरिव कान्तिं कला ॥ २३

मुखेन तन्वी शरपत्रपाण्डुना
रराज राज्ञी विरलाल्पभूषणा ।
समुद्रपत्नी परिम्लायकैरवा
प्रभातकाले प्रतिमेन्दुना यथा ॥ २४

शनैः स्तनाभ्यामुदरं कृशोदरी
बभार किञ्चित् प्रथिमानमागतम् ।
रथाङ्गनामद्वितया तपात्यये
नदीव साम्याद्विलसन्नवोदका ॥ २५

नितान्तगुर्व्वीं वहता धुरं पुरा
सुतेन सा गर्भगतेन भामिनी ।
हरित्पतीनां स्फुरदुत्पलेक्षणा
बभार कुक्षौ गरिमाणमोजसा ॥ २६

अलङ्क्रियाभि र्लघुभिश्च या पुरा
क्लमं ययौ चारुशिरीषपेलवा ।
न जातु साऽकल्पत कर्त्तुमानतिं
विनिःसहा दुर्व्वहगर्भगौरवात् ॥ २७

तथापि तन्मन्दिरमध्यमागतो—
धरातलालम्बितसव्यहस्तया ।
कथञ्चिदर्द्धोत्थितया तया नृपो-
ननन्द न प्रेमणि नतिः प्रतीक्ष्यते ॥ २८

सुतस्तदीयः किल पार्थिवाधिप-
स्तदेकपत्नी पृथिवी भविष्यति ।
अतोऽतिरूढप्रणया तथाविधं
सकाशमस्य भुवमाससाद सा ॥ २९

मृदा तदीयं मुखमम्बिकाश्वया
रजोभिरारञ्जितपाटलाधरम् ।
ननन्द राजा परिलोक्य सम्भ्रमात्
मिथो यथा रत्नमतीव निर्धनः ॥ ३०

तदीयविम्बाधरमेत्य सादरं
न केवलं मृत् सफलत्वमानशे ।
चिराय चारु स्पृहणीयसंगमनात्
कृतार्थमात्मानममन्यतेश्वरः ॥ ३१

अजस्रमुच्चैरभिलाषपीड़िता
मनागपथ्यं बुभुजे मनस्विनी ।
रसान्तराक्रान्ततयेव चेतसा-
रसान्तरस्यान्तरमत्र नाभवत् ॥ ३२

रसान्तरेभ्यो विनिवृत्तलालसा
मनश्चकारान्तरसे मनस्विनी ।
विधोश्चकोरीव सुधामये करे
रसालपुष्पे भ्रमरावलीव सा ॥ ३३

पुरा यदन्योन्यनिपीड़नोचितं
स्तनद्वयं पङ्कजकोरकोपमम् ।
अभूत्तदस्याः पुनरुक्तदोषवत्
पयःप्रवेशेन नितान्तपीवरम् ॥ ३४

विशेषमाध्वीकरसैकलिप्सुना
नवेन भृङ्गद्वितयेन सङ्गतम् ।
ध्रुवं मृगाक्ष्याः परिपाण्डु पीवरं
स्तनद्वयं नीलमुखं व्यलक्ष्यत ॥ ३५

हिमाविलं द्यौरिव चन्द्रमण्डलं
दधार साध्वी मुखमङ्गिराप्लुतम् ।
ध्रुवं सुतस्योदयतोऽन्तरुल्लसत्-
गुरुप्रमोदोच्छ्वसितं किलाभवत् ॥ ३६

अनाविलस्नेहरसार्द्रमानसा
समुद्वहन्ती नलिनीव कण्टकम्।
रराज राज्ञी महतां न केवलं
भवत्यदोषाय गुणाय विक्रिया॥ ३७

अधित्यकायां निविड़ेव कालिका
भुजङ्गभोगे वसुधेव भाविनी।
दिशाम्पतीनामनुभावगौरवा-
दशेत सा गर्भभरालसा क्षितौ॥ ३८

अजृम्भतोच्चैर्गुरुभारपीड़िता
क्षणे क्षणे लोलजलाविलेक्षणा।
प्रसूचयन्ती दशनच्छविच्छलात्
यशः सुतस्येव भविष्यदुज्ज्वलम्॥ ३९

शरप्रहारेण किलास्य सङ्गरे
पुरा प्रमूर्च्छन्ति परे महीक्षितः।
इतीव साक्षाद्गमयन्त्यमुग्धधी-
र्मुहुर्मुहुर्मूर्च्छ हुतकाञ्चनच्छविः॥ ४०

नवाब्दमालामिव चातको दिवं
लतामिवाम्रमुकुलां मधुव्रतः।
प्रियामदूरप्रसवां विशाम्पति-
र्ददर्श विद्यामिव सम्प्रसादिताम्॥ ४१

शुभे मुहूर्त्ते शुभसंस्थखेचरैः
शुभोदये लक्षितभाग्यलक्षणम्।
ध्वजातपत्रादिभिरर्घ्यलाञ्छनै-
रलङ्कृतं मूर्त्तमिवामरात्मजम्॥ ४२

निधानमुच्चैरिव सागराम्बरा
तटी सुमेरोरिव बालभास्करम् ।
असूत साध्वी सुतमूर्द्धतेजसं
विशेषविद्येव फलं विलक्षणम् ॥ ४३ युग्मकम्

मुखान्यवापुः ककुभां प्रसन्नता—
मनर्त्तितानोकहपुष्पपल्लवः ।
मदेन सार्द्धं सुरदन्तिनां ववौ
कणानुपादाय समीरणोऽम्भसाम् ॥ ४४

गभीरमेघोर्ज्जितगर्जितोपमे
ध्वनौ च शङ्खस्य दिशः प्रमूर्च्छति ।
वसन्तकालेऽपि कलापिनामभू—
त्तदा निदाघान्तसुखं निराकुलम् ॥ ४५

प्रदक्षिणार्च्चिः किल काञ्चनप्रभः
शुभः शिखायामपि पिण्डिताकृतिः ।
विधूमितः स्निग्धरुचिर्विभावसु-
र्वषट्कृतं यज्वभिराददे हविः ॥ ४६

पुरस्त्रियो लाजचयैर्नृपाङ्गणं
सुराङ्गनाः कल्पतरुप्रसूनकैः ।
कराग्रमर्शात् सुभगैरवाकिरन्
परस्परं जेतुमिवेच्छया समम् ॥ ४७

सुरद्विपानां मदवारिभिः प्लुताः
कपोलभित्तीरपहाय षट्पदाः ।
विशेषगन्धैर्मकरन्दलोलुपाः
समाकुलास्तत्कुसुमं प्रपेदिरे ॥ ४८

दिवौकसो मङ्गलतूर्य्यनिस्वनैः
प्रमोदलोलाप्सरसाञ्च नर्त्तनैः ।
ननन्दुरानन्दितपाकशासनो-
भवः कुमारस्य किल चिताबभूत् ॥ ४९

इति चितौ च त्रिदिवे च तत्क्षणं
बभूव सर्व्वं शुभलक्षणान्वितम् ।
स कुन्दचन्द्रांशुसितैर्हि कर्म्मभि-
र्द्वयं कुमारः परिरञ्जयिष्यति ॥ ५०

अलञ्चकार चितिपालनन्दनो-
दिवं शशीव प्रभया स मातरम् ।
न दाहशक्तिर्न च लुप्यते द्युतिः
प्रदीपमात्रेऽपि हिरण्यरेतसि ॥ ५१

नवोदयस्येव जगद्विवस्वतः
स्वतेजसाऽरिष्टगृहं न केवलम् ।
विशेषकान्तेन सुतस्य निर्वृतं
मनोऽपि सद्यो नृपतेर्व्विदिद्युते ॥ ५२

नवाम्बुदं चातकवत् चितीश्वर-
श्चकोरवत् पूर्णशरत्क्षपाकरम् ।
द्विरेफवत् पद्मवनं विलोकयन्
सुतं ननन्द स्तिमितायतेक्षणः ॥ ५३

हिमादिवेन्दुर्जलदादिवांशुमान्
दिमादिभागस्तुहिनोदयादिव ।
नृपः पितॄणामृणतः सुदुःसहा-
त्सदा विमुक्तो महिमानमानशे ॥ ५४

ददौ स विद्वान् विदुषे वसूपमो-
वसूनि राजा तनुजोद्भवोत्सवे ।
विपत्सु सम्पत्सु च सुस्थिरं मनो-
धृतात्मनां धावति धर्म्मकर्म्मसु ॥ ५५

प्रसाधनैः स्निग्ध इवाग्रादर्पणो-
विवस्वदर्शैरिव बालचन्द्रमाः ।
स जन्मकालोचितशुद्धकर्म्मभि-
र्म्मलात्ययैरच्छ इवोपलो बभौ ॥ ५६

अपोढरूढर्द्धिमदुत्सवान्तरः
प्रजासखस्यात्मजसम्भवोत्सवः ।
न केवलं मध्यमलोकरक्षिणो-
गृहे प्रजानामपि साध्वलक्ष्यत ॥ ५७

सुसंयतास्तस्य सुतोदयोत्सवे
विमुक्तिमापुः कबरी तु योषिताम् ।
प्रमोदनृत्याय विलोलचेतसा-
मलङ्क्रियाभिर्दृढबन्धनं ययौ ॥ ५८

त्रिलोकधन्यं किल कर्म्म दुष्करं
सुराङ्गनागीतयशाः करिष्यति ।
ध्रुवं कुमारोऽयमिति क्षितीश्वर-
श्चकार नाम्ना कुरुमात्मसम्भवम् ॥ ५९

यथा यथा हृद्धिमियाय सोऽर्भको-
दिने दिने मोक्ष इवाजितात्मनः ।
तथा तथा प्रेमविशेषविद्रुतं
बभूव तस्यैव नृपस्य मानसम् ॥ ६०

अपि प्रवृद्धिः खलु कान्तिमत्तया
समं कुमारस्य शनैरमीयत ।
विशेषवत्स्नेहरसप्रवर्त्तिता
न जातु मातुर्गुरुहर्षसन्ततिः ॥ ६१

ततो विरिङ्गन् भवनाङ्गणान्तरे
स पांशुभिः कीर्णसुवर्णविग्रहः ।
गिरा प्रपश्यन् परिहृत्य रञ्चितु-
र्जवात् चितोशाङ्कमियाय सस्मितम् ॥ ६२

तदङ्गसंलग्नरजोभिरीश्वरो-
विरूषितः किञ्चिदिवाविलच्छविः ।
स वत्सलोऽमन्यत वत्सलात्मना
रसेन साक्षादिव गात्रमुक्षितम् ॥ ६३

मुहुर्नरेन्द्रो द्विरदेन्द्रगामिना
सुतेन किञ्चित् स्खलता पदे पदे ।
ननन्द बालेन जनो यथेन्दुना
मनस्तपत्यास्तु बभूव मन्थरम् ॥ ६४

कपोतजायापतिवत् प्रमुग्धयोः
परस्परं प्रेम पुराऽपि यत्तयोः ।
व्यमूर्च्छदुच्चैस्तदपत्यजन्मना
हिमात्ययेनेव मिथःशशाङ्कयोः ॥ ६५

सुधीः श्रुतानामथ गोपुरोपमां
लिपिं स कात्स्न्येन शनैरशिक्षत ।
सुदुस्तरं वाङ्मयमुत्तितीर्षुभि-
र्मनीषिता नौरिव साऽवलम्ब्यते ॥ ६६

क्रमाद्दसानो वसनं क्षुमाभवं
कुरुत्वचा प्रावृतदेहयष्टिकः ।
समादधानो गुणमेखलामसौ
प्रणोपवीतः पितरावनन्दयत् ॥ ६७

तथा वितन्द्रीः प्रतिभाविशेषवा-
नुदारबुद्धिर्जगृहे स वाङ्मयम् ।
यथा गुरूणां युगपन्मनस्यभूत्
सविस्मयानन्दरसस्य सम्वरः ॥ ६८

ततार विद्याश्चतुरो न केवलं
कुरुश्चतस्रः स चतुर्दशाधिकाः ।
श्रुतेन साफल्यमवाप सोऽर्भकः
श्रुतानि तेनापि कुशाग्रबुद्धिना ॥ ६९

कृतौ यथाऽस्त्रेषु तथा कलाविधौ
यथा कलायां स तथा श्रुतावपि ।
मिथो विरुद्धा अपि तस्य धौगुणः
समस्तविद्याः सखितामिवागमन् ॥ ७०

पुरेव सर्गः क्रमशः समग्रतां
सुरद्रुमोऽल्पोऽपि विशालतामिव ।
तपात्यये सिन्धुरिव प्रपूर्णतां
वयः प्रपेदे वनितामदं कुरुः ॥ ७१

मिथः प्रतिद्वन्द्वि बभूव यद्द्वयं
दयारसो वीररसश्च काङ्क्षितः ।
गुणानुरागादिव तत्र सङ्गतं
तदास्त साक्षान्नरदेवसम्भवे ॥ ७२

विनीतमेतं तनयं महीपति-
र्गुणैः प्रजानामनुरागभाजनम् ।
स यौवराज्ये विनियुज्य हर्षितो-
विधिः प्रजासर्गविधाविवात्मजम् ॥ ७४

अथ भुजविजितारिस्त्यक्तभोगः क्रतूना-
मपरिमितमकार्षीद्भूरिदानैर्यदोयैः ।
निरवधिरपि कोशः कार्श्यमासीत् प्रपन्नः
सकलजनसमाना सज्जनानां हि लक्ष्मोः ॥ ७५

अधिकृतरनयज्ञं रक्तराजन्यवर्गं
विधिवदथ कुमारं प्राज्यराज्येऽभिषिच्य ।
नरपतिरपतृष्णो धर्म्मपत्नीसमेतो-
वनमनुगतहिंस्रं शिश्रिये तापसानाम् ॥ ७६

इति चन्द्रवंशे महाकाव्ये कुरुराज्याभिषेको-
नाम द्वादशः सर्गः ॥

पूर्व्वभागः समाप्तः ॥



# चन्द्रवंशम् ।

## उत्तरभागः ।

## त्रयोदशः सर्गः ।

प्राप्याधिराज्यं विविधैरुपायैः
स सम्पदां राजिभिरारराज ।
परिस्फुरन्तीभिरिनेऽस्तमाप्ते
गौरीगुरुः शैल इवौषधीभिः ॥ १

स दण्डनीतिं समयुङ्क्त यत्ना-
दनन्तलोकस्थितये स्थितिज्ञः ।
वर्णाश्रमाणामिव भिन्नवृत्तिं
पतिः प्रजानां नियतिप्रनुन्नः ॥ २

दण्डः किलाखण्डलविक्रमस्य
शिक्षार्थएवार्थपतेर्ब्बभूव ।
अर्थस्तु धर्म्मैकरतेर्विनेतुः
स्वतः प्रजानामनुरागभाजः ॥ ३

तथा विनेता स विभुर्जनानां
कारागृहादस्य यथा विमुक्ताः ।
पुनर्न चक्रुर्मनसाऽप्यकार्य्य-
माचार्य्यलब्धामलबुद्धयस्ते ॥ ४

समाश्रितस्त्र्यं धनुरादधानः
प्रलब्धुमैन्द्रं पदमप्यलं सः ।
लोभस्तु तस्य क्षितिपस्य नाभूद्-
धर्म्मोत्तरस्यापि धराधिपत्ये ॥ ५

कालोचितं खल्वपि सन्नियुज्य
स काममर्थञ्च विनिर्व्विवेश ।
बभूव तस्यामलचित्तवृत्ते-
राराधनीयः किल धर्म्मएव ॥ ६

बहूनि तावत् कणिशानि हित्वा
तन्मात्रवृत्तिर्द्विजभाग्यलभ्याः ।
शेषाण्यथावासमतिप्रसिद्धे
क्षपीवलास्तद्विषयेऽभ्यनैषुः ॥ ७

शरत्सुधारश्मिवदस्य पाद-
च्छायामवाप्य स्पृहणीयशोभाम् ।
न केवलं काञ्चनपादपीठं
लोकः समस्तोऽपि पुपोष लक्ष्मीम् ॥ ८

एकः स राजन्यगणाननेकान्
साम्नैव निघ्नान् क्षितिपश्चकार ।
दानं विपक्षे कलुषे च भेदं
दण्डञ्च दण्ड्येर सुतरामयुङ्क्त ॥ ९

नृपस्य तावत् प्रथमोऽप्युपायो—
ज्ज्वलत्प्रतापस्य फलप्रदोऽभूत् ।
वृथा नृपास्तस्य मन्त्रोपदाभि-
र्म्महात्मनो वश्यतरा बभूवुः ॥ १०

न कोऽपि लोकः प्रतिकूलभावं
अनुभृतस्तस्य विभोः प्रपेदे ।
को लङ्घयेद्वा मनुजोऽग्रहस्तं
शुद्धेन्धनप्रज्वलितानलाय ॥ ११

न जातु वाह्यो नृपतेः प्रतीपः
स्फुरत्प्रतापस्य बभूव कोऽपि ।
इत्यान्तरानेव रिपूनतन्द्रः
स दुर्ज्जयान् योगिभिरप्यजैषीत् ॥ १२

अद्वैष राजा नियतः प्रजानां
स्वयञ्चकार व्यवहारदृष्टिम् ।
तत्रास्य निघ्नेन्द्रियजातवृत्तेः
अधर्म्म इत्येव न हेतुरन्यः ॥ १३

स शास्त्रदृष्टेन पथाऽप्रमत्तो-
याथार्थ्यनिर्भेदतया जनानाम् ।
लेभे विवादेष्वनुरागबन्धं
नयज्ञता नाम गुणोहि राज्ञाम् ॥ १४

समस्तभूपस्पृहणीयमाप्तं
रत्नादि रत्नाकरतोऽप्युपायैः ।
भिन्नं सुमेरोरिव चारुशृङ्गं
स देयमित्येव ददौ द्विजेभ्यः ॥ १५

स भूरिदानोऽप्यधिकं न धीरो-
नृपः प्रजाभ्यः करमाजहार ।
यदायती पीड़यते हि लोकान्
अधर्म्मभेदस्तदिति प्रजानन् ॥ १६

करीव भद्रः प्रहृतारिभद्रो-
महीपतिर्दानजलार्द्रहस्तः ।
अजस्रमासीन्न पुनः कदाचि-
न्मदप्रसेकात् स इवाविलोऽभूत् ॥ १७

साम्राज्यचिन्तामखिलां यथाव-
द्दुद्धया विवेक्तुं प्रभुरेक एव ।
तथाप्यतन्द्रः स बभूव मन्त्रे
शरीरवद्भिः सुलभः प्रमादः ॥ १८

अपि प्रभावेण धनुर्धरोऽभूत्
क्षमः स राजन्यगणान् विजेतुम् ।
अपक्षपाते क्षितिपे तु तस्मिन्
न कोऽपि लोकस्खलभक्तिरासीत् ॥ १९

सतूर्य्यघोषं परिमुक्तशय्यः
स वन्दिपुत्रैरभिनन्द्यते स्म ।
भवं तितीर्षोरिव बोधहेतु-
स्तस्याभवत् केवलमेव शास्त्रम् ॥ २०

स धर्म्ममत्यन्तविशुद्धबुद्धि-
रचिन्तयच्चिन्तयितव्यविज्ञः ।
अप्यर्थकामौ तमपीड़यित्वा
यामे रजन्याश्चरमे प्रबुद्धः ॥ २१

तेजस्विनस्तस्य महाप्रभावा-
न्निदाघभानोरिव दुर्व्विषह्यः ।
मुमूर्च्छ साक्षान्नृपतेः प्रतापो-
दिगन्तभूभृद्वलयान्तरेऽपि ॥ २२

आज्ञा सुपुष्पस्रगिवास्य राज्ञः
शुभागमादेश इवागमस्य ।
मरीचिरुच्चैरिव शीतरश्मे-
र्लोकैः शिरोभिः सुखमुह्यतेस्म ॥ २३

आदेशमस्य क्षितिपस्य कामं
क्षमो न कश्चित् प्रतिषेद्धुमासीत् ।
यदायतौ क्षेमकरं प्रजाना-
मसौ न तज्जातु चिदादिदेश ॥ २४

स काममास्थानमभि स्थितोऽभू-
न्नृपः प्रजापालनलब्धवर्णः ।
तेजोविशेषात्तु परिप्रकाशः
काचोद्भवे पात्रइव प्रदीपः ॥ २५

अन्ये विपन्नाः शतशः क्षितीशाः
समुन्नतिं लब्धुममुं प्रयत्नात् ।
श्रृङ्गारवीन्दुप्रमुखा विलुप्ताः
शिलोच्चयं पूर्व्वमिवाश्रयन्त ॥ २६

चकार कुल्याः स कुलप्रदीपः
कृषीवलानामुपकर्त्तुमिच्छन् ।
रिरक्षिषुर्लोकमुपप्लवेभ्यः
सेतून् यथास्थानमपि व्यधत्त ॥ २७

पुरा च यत्रामरमातृकत्व-
मासीत् प्रजास्तत्र नृपप्रयत्नात् ।
तदा नदीमातृकतामवापु-
र्गुणोत्तरा कामदुघा हि वृत्तिः ॥ २८

वर्णाश्रमाचारगुरोर्नियन्तुः
प्रमादलोभादिविवर्जितस्य ।
बभूव बह्वल्पमुदर्कपथ्यं
तस्यागमस्येव वचो न मिथ्या ॥ २९

फलैर्द्रुमाश्चाकरगुणैश्च लोका-
रत्नैरनर्घैरपि रत्नधान्यः ।
आलानदण्डा द्विरदैस्तदानीं
नार्थ्यैश्च वेश्मैरभवन् विनम्राः ॥ ३०

ऋणात् पितॄणामपरो न हेतुः
पुत्रादृते कोऽपि विमुक्तयेऽस्ति ।
अतो न भोगस्पृहया स भूपो-
दारक्रियायै स्पृहयाम्बभूव ॥ ३१

अथात्मजामात्मगुणानुरूपां
जितारिवर्गो मथुरेश्वरस्य ।
पाणौ शुभाङ्गीं क्षितिपो द्वितीयां
जग्राह लक्ष्मीमिव लक्ष्यमूर्त्तिम् ॥ ३२

ततस्तदायत्तसमस्तवृत्त्या
परिस्फुरन्त्या द्रुतहेमगौर्य्या ।
नवाम्बुवाहस्तडितेव साक्षा-
त्तया स राजा सुतरां रराज ॥ ३३

कुमारमेषा समसूत काले
शशाङ्कमैन्द्री दिगिव प्रसन्नम् ।
विदूरथं नाम रथो यदीयो-
दिवाकरस्येव विदूरगोऽभूत् ॥ ३४

सोऽन्त्यादृणात् किञ्चिदिवाविलोऽभूत्
पयोदलेशादिव सप्तसप्तिः ।
वातोदयेनेव सुतेन भूय-
स्तेजोविशेषात् स इवावभासे ॥ ३५

दिने दिने दोष इवालसानां
मुग्धात्मनां लोभ इवाधिपत्ये ।
तपात्यये सिन्धुरिवेन्दुकल्पः
स्नेहेन सार्द्धं ववृधे स पित्रोः ॥ ३६

अथोपनीतो विधिवद्गुरुभ्यः
क्रमेण विद्याः सकलाः कुमारः ।
सूक्ष्मः पदार्थोऽप्यणुवीक्षणस्य
व्यक्तीः प्रयोगैरिव प्रपेदे ॥ ३७

विद्याविशेषेण यथा यथाऽसौ
शशी करेणेव रवेरदीपि ।
तथा तथा लोक इवातिवेलं
गुरुप्रहर्षोऽस्य गुरुर्बभूव ॥ ३८

वपुःप्रकर्षेण मनोऽभिरामं
तं यौवनोद्भेद विभिन्नबाल्यम् ।
विलोक्य साक्षात् क्षितिपो ननन्द
प्रसन्नमात्मानमिवात्मदर्शे ॥ ३९

अग्राहयत् प्राग्रहरो नृपाणां
करं कुमारं किल सुप्रियायाः ।
अलिर्नलिन्या इव सोऽपि तस्या-
योगाद्विरेजे नरदेवसूनुः ॥ ४०

कान्त्या निशाकान्त इव प्रसिद्ध-
स्तेजोभिरादित्य इवाविषह्यः ।
वाचा स पीयूषमिवाभिवर्ष-
न्नुच्चोऽपि नीचैर्व्विनयाददर्शि ॥ ४१

विलोक्य तस्मिन् प्रकृतीः समस्ता-
स्ततोऽनुरक्ता नृपतिर्व्विरक्तः ।
विश्वम्भरायाः परिपालनार्थं
तमादिदेशाम्बुधिमेखलायाः ॥ ४२

अभूत् स राजा सुतरोपितश्रीः
प्रत्यर्पितन्यास इव प्रतीतः ।
स्नेहस्य कोऽपि स्फुरति प्रभावो-
यत् त्यज्यते राज्यमपि क्षणेन ॥ ४३

सुतं विनीतं हि समुन्नतेच्छाः
प्रापय्य राज्यं रजसः परस्ताः ।
नियोज्य रक्षासु सदा प्रजानां
सोमान्वयाः शान्तिपथं प्रतीयुः ॥ ४४

ततः कुरुक्षेत्रमिति प्रसिद्धं
प्रजासु पश्चात् कुरुजाङ्गलेषु ।
सुखोपयोगे शिथिलानुबन्धः
पत्नीसमेतो नृपतिर्जगाम ॥ ४५

तत्रातिविस्तीर्णमपास्तदोषः
सरस्वतीतीरमनु प्रसिद्धम् ।
अकारयत् कारुभिरात्मवद्भिः
स यज्ञवाटं त्रुटितारिवर्गः ॥ ४६

स यज्ञदीक्षां विधिवद्विधिज्ञः
प्रभां रवेरग्निरिव प्रपन्नः ।
ज्वलन्नलोकोचितरोचिषोच्चै-
र्मूर्त्तो हरस्यांश इति स्फुटोऽभूत् ॥ ४७

स चारुनेपथ्यविधिं विनाऽपि
निसर्गकान्त्यैव परिस्फुरन्त्या ।
पत्न्या समं विष्टरसन्निविष्ट-
स्तदासिधारं व्रतमाचचार ॥ ४८

अध्वर्यवो निर्म्मिमिरे क्रियाभि-
र्वपुः परं यज्ञियमागमज्ञाः ।
पवित्रतीर्थव्रजमात्मवाचः
पुरेव रम्यं मुनयः पुराणाः ॥ ४९

याज्याऽनुवाक्यावलिभिश्च पश्चात्
होता सहेलं तदलञ्चकार ।
वसन्तकालः कुसुमावलीभिः
साक्षादिवालक्ष्यरुचं वनान्तम् ॥ ५०

क्रुष्टादिसप्तस्वरसन्निवेशै-
रुद्गातृभिस्तत्र च गीयमानम् ।
न केवलं साम मनोज्ञगाणां
जहार साक्षादपि चामराणाम् ॥ ५१

मृदङ्गधीरध्वनिवन्नरेभ्यो-
विशङ्कयन्त्योत्थितवाद्यवच्च ।
प्रस्तोतृवर्गैर्विधिवत् प्रयुक्ता
स्तुतिः प्रशस्ता रुरुचे सुरेभ्यः ॥ ५२

वषट्कृतं हव्यमुपाददानो-
वह्निर्विवोढुं त्रिदिवेश्वरेभ्यः ।
ज्वलन्ननल्पं ज्वलनोबभासे
पादः सुमेरोरिव रत्नभिन्नः ॥ ५३

उत्पादयामास स सोमपानै—
र्मदं महेन्द्रस्य महीन्द्रमौलिः ।
काठिन्यमुक्तस्तनपङ्कजा तु
पुलोमजाऽऽसीत् परिलुप्तहर्षा ॥ ५४

ऋत्विक्कुलेभ्यः स कुलप्रदीप—
स्तथा ददौ भूरि धनानि धीरः ।
यथा भवेयुर्बहुदक्षिणाढ्याः
प्रत्येकमेषां शतशोऽपि यज्ञाः ॥ ५५

अपास्तदोषा जलयन्त्रराजि-
र्मलादपेतान्यमलान्तरात्मा ।
ददौ पयांसीव वसून्यजस्रं
परःसहस्राय स एकएव ॥ ५६

पयांसि यावन्त्युदधेः पयोदाः
पिबन्ति तेभ्यो बहुलीकृतानि ।
काले प्रयच्छन्त्यविचिन्तनीय-
मलोकसामान्यमुदारवृत्तम् ॥ ५७

सुतस्तदायो हि महीपतीनां
प्रमाणनीयो विनयप्रयोक्ता ।
प्रयोजनादप्यधिकानि तस्मै
वित्तान्युपात्तानि समाजहार ॥ ५८

विसृज्यार्थव्रातं नृपतिरवदातः क्रतुविधौ
पयः प्रावृट्शेषे जलद इव लोके लघुरभूत् ।
ततः पत्न्या सार्धं गतिमलभतोर्ध्वामसुलभां
वशी योगाभ्यासाद्वशगतसमस्तेन्द्रियगणः ॥ ५८

इति चन्द्रवंशे महाकाव्ये कुरुवर्णनो नाम
त्रयोदशः सर्गः ।



# चतुर्द्दशः सर्गः ।

अथाब्धिमेखलामुर्व्वीं प्रशशास विदूरथः ।
आरुरुक्षुः परं योगमश्वराजिमिवाहृतः ॥ १
रवेरिव प्रजास्तस्य तेजसा भृशमुत्सुकाः ।
गुहामद्रेः प्रपन्नास्तु रिपवः कौशिका इव ॥ २
वितरन् करमत्यर्थं जहार जगतां मनः ।
मृदुरिन्दुर्महातेजास्त्वाददानोऽपि पार्थिवः ॥ ३
यथा षाड्गुण्यसम्पन्नः साम्राज्यश्रियमादरात् ।
निःसपत्नस्तथा पत्नीं बुभुजे मनुजाधिपः ॥ ४
कालिका चातकस्येव लोकस्य विमलद्युतिः ।
प्रतिपच्चन्द्रलेखेव सैवासीत् प्रियदर्शना ॥ ५
तया किल विशालाक्ष्या स वधूष्वपरास्वपि ।
आत्मानं गङ्गयेवाब्धिः पत्नीमन्तममन्यत ॥ ६
प्राणभूताऽभवत् सा हि महिषी महितात्मनः ।
तड़िद्वार्त्तावहस्येव ताड़ितस्य महीभृतः ॥ ७
अथ सा सुषुवे पुत्रं पद्मोदरशुभद्युतिम् ।
सुमेरुहेमवल्लीव हैमं फलमनुत्तमम् ॥ ८
तमात्मसम्भवं नाम्ना निम्ननाभमुदारधीः ।
अविक्षितमथाक्षोभः स चकार क्षितीश्वरः ॥ ९
प्रतीपपृथिवीपालरथाश्वमदनिग्रहात् ।
अनश्वेत्यपि यो लोके पश्चात् ख्यातिमुपागमत् ॥ १०

तं विलोक्य महीपालो महिषीं प्रति पिप्रिये ।
लोकः शरन्निशानाथं साक्षादिव निशीथिनीम् ॥ ११
आदरः सुमहानासीत् तस्यामस्यात्मजात् पुनः ।
भूयसा ववृधे राज्ञो नीत्यामिव फलोदयात् ॥ १२
अथ प्रादुरभूद्घर्मो घर्मांशोरिव भूपतेः ।
भूयोदिगन्तरालेषु प्रतापं प्रथयन्निव ॥ १३
द्युमणिः स्पर्द्धयेवास्य भृशमासीत् स्फुरद्द्युतिः ।
न ह्यन्यतेजस्तेजस्वी निःशब्दं सोढुमर्हति ॥ १४
ददाहाग्निरिवाङ्गानि रविः पादोपसेविनाम् ।
स तु शीतलयामास मनांस्यपि महीपतिः ॥ १५
प्रताप इव राजर्षेर्दिवसो वृद्धिमानशे ।
तदीयरिपुराजीव रजनी तनुतां ययौ ॥ १६
प्रकृत्येव सुधावर्षी सुभगोमृगलाञ्छनः ।
आसीदुष्णांशुतप्तानां प्रजानां भूयसा प्रियः ॥ १७
कालभेदे हि लोकानां वस्तुष्वेकविधेष्वपि ।
प्रयोजनापेक्षितया भिद्यन्ते चित्तवृत्तयः ॥ १८
अल्पावशिष्टाः सूर्य्येण चक्रिरे गृहदीर्घिकाः ।
प्रचण्डस्यौजसोवृद्धौ मृदुः खल्वभिभूयते ॥ १९
मुक्तसोपानपर्व्वाणि पयसा शैवलच्छलात् ।
स्वाभाविकमनच्छत्वं व्यक्तीचक्रुरिवात्मनः ॥ २०
पार्श्वद्वये राजपथः सौधश्रेणीद्वयान्वितः ।
सविशेषसमृद्धिभ्यां नगरीभ्यामिवाभितः ॥ २१
निषिक्तचन्दनरसैः पुष्पोत्करमनोहरः ।
प्रवाह इव गङ्गायाः सदीपावलिराबभौ ॥ २२ युग्मक०

अनल्पजलयन्त्राणां कल्पितानामितस्ततः ।
प्रभावान्महतां पौराः वासरौष्ण्यं विषेहिरे ॥ २३
जलराशिः शिरस्तोऽस्य निम्नभित्तौ जवात् पतन् ।
आहतः शतधा भिन्नोरजतद्रववद्बभौ ॥ २४
शीकरैरेष लोकानामङ्गान्येव न केवलम् ।
अतर्पयज्जलासाररवैः श्रोत्रेन्द्रियाण्यपि ॥ २५
नदन्ती मौक्तिकप्रख्यजलपाता तदावलिः ।
सशब्दनिर्झरोद्गारा पादराजिरिवाबभौ ॥ २६
शिल्पिभिस्ताड़िताल्लोकमिव लोकः प्रवर्त्तितम् ।
तीव्रमातपमत्यर्थं न प्रेक्षितुमपि क्षमः ॥ २७
भास्करौष्ण्यसमायोगात् सूर्य्यकान्तइव ज्वलन् ।
प्रकृत्या स्पृहणीयोऽपि स्पर्शनोऽस्पृश्यतां ययौ ॥ २८
उष्णांशोरग्निदुःस्पर्शाङ्क्षियेव किरणोच्चयात् ।
सदागतिरपि प्रायो बभूव गतिमन्थरः ॥ २९
स्फुलिङ्गानिव तिग्मांशोः करान् सोढुमिवाक्षमा ।
म्लाना च्छायाऽपि मध्याह्ने वृक्षमूलमुपाश्रयत् ॥ ३०
धारावारिलवैर्यन्त्रविलोलव्यजनोद्भवैः ।
पुष्परेणुभराढ्यानां वातैरौष्ण्यमलीयत ॥ ३१
मध्यवित्तास्तालवृन्तैः स्वहस्तावर्ज्जितैर्मुहुः ।
कवोष्णैः पवनैर्निन्युः कथञ्चिद्दीर्घवासरान् ॥ ३२
विशेषरससिक्तानां व्यजनानां रवेः करैः ।
न चिरादिव सम्भिन्नो वायुरुष्णलमानशे ॥ ३३
प्रचण्डमारुतासारपांशुवर्षैर्दिगन्तरम् ।
रजोभिश्छन्नमभवत् प्रद्युम्नैरिव मानसम् ॥ ३४

पद्मानीव परित्यज्य स्थूलानि विमलत्विषः ।
सूक्ष्माणि वासांस्याद्धुर्महाधिय इव स्त्रियः ॥ ३५

रचिताकल्परचना मुक्तामलयजादिभिः ।
समुज्ज्वलसमाचारा सभ्यतेवाङ्गनाऽभवत् ॥ ३६

अमृताभिः पीतरसा देवताभिर्यथाक्रमम् ।
ततान तनुतामिन्दोः कलेव सरिदावलिः ॥ ३७

लोकैः प्रकामनिर्विष्टा भृयः कार्श्यमुपागताः ।
स्थाने दिदुग्रतिरे नद्यः साधूनामिव सम्पदः ॥ ३८

हैमवत्यस्तुषाराणां स्रुतिभिः पूर्णतां गताः ।
नद्यः सद्योऽभ्यरज्यन्त श्रद्धाभिरिव वित्तयः ॥ ३९

अन्येव रीतिमंहतां प्रपन्नपरिरक्षणे ।
विसोढ़ोपप्लवः सौधः श्रितानवति सर्व्वदा ॥ ४०

रविमन्तोरथानुच्चैरधिरुह्य दिनात्यये ।
धारायन्त्रमयं रम्यमारामं प्रतिपेदिरे ॥ ४१

सद्योदलितकौसुम्भद्युतिमद्भिः करैर्विभुः ।
भानोर्विच्छुरिता यन्तोज्ज्वलन्तइव ते रथाः ॥ ४२

प्रावारप्रान्तसंलग्ना धौतमुक्तास्रगाबभौ ।
सायमर्कांशुकारक्ता पद्मरागैरिवोद्गता ॥ ४३

केचिच्च प्रान्तरोद्यानानिलानमृतोपमान् ।
शनैः शनैः प्रसर्पन्तोदिवसान्ते सिषेविरे ॥ ४४

आस्पृष्टजलयन्त्राम्भःशीकरोऽन्वर्थनामताम् ।
दिनान्ते मल्लिकागन्धी जगत्प्राणोऽप्यपद्यत ॥ ४५

वासरोष्मप्रदग्धानां लोकानां शीतलक्रमः ।
सायन्तनोऽनिलोरात्रेर्मुखोच्छ्वास इवाभवत् ॥ ४६

अथोद्याने महाराजो विजहार प्रियासख: ।
पाटलामोदसंमुग्धलोलभ्रमरसंकुले ॥ ४७
धारागृहसहस्रैश्च कुल्याभिश्च समुज्ज्वले ।
स्निग्धोत्तरशिलाभेदै: शीतले च मनोहरे ॥ ४८
नौभिर्व्वगाह्यमानायागङ्गायाः कुन्दपाण्डरैः ।
तरङ्गैः फेनपुञ्जैश्च प्रान्तेष्वत्यन्तशोभने ॥ ४९ विशेषकम् ।
आतपादग्निदुःस्पर्शाद्गाढ़ोद्वेगनिपीड़िता ।
पुञ्जीभूता समभवत् यत्र शैत्यपरम्परा ॥ ५०
भूयः शीतोपचारत्वादादित्यज्वलितार्च्चिषाम् ।
यत्र संहृततापानामालोकफलताऽभवत् ॥ ५१
कामं शीतलवस्तूनि सन्त्वन्यानि सहस्रशः ।
हन्त्री सन्तापराशीनां प्रियैका नृपतेरभूत् ॥ ५२
मध्याह्नातपसंलीढ़ं ज्वलन्तं तपनोपलम् ।
अलं शीतलतां नेतुमेकैव हि हिमश्रुतिः ॥ ५३
अलके पाटलं तस्यारोलम्बपरिचुम्बितम् ।
नेपथ्यमिन्द्रनीलान्तः पाद्मरागमिवाबभौ ॥ ५४
तस्याः शिरीषं भोगाङ्के कपोले दष्टकेशरम् ।
कर्णच्युतमवर्णेशः प्रत्यर्थिनममन्यत ॥ ५५
कटाक्षमधुरैः साक्षात् पुराणमधुपाटलैः ।
मुखैर्विलोलभ्रमरैरब्जैर्बालातपैरिव ॥ ५६
लघुमुक्ताफलप्रख्यश्रमाम्भःपृषतोचिताः ।
नार्य्यश्चकाशिरे साक्षाज्जलदेव्य इवोज्ज्वलाः ॥ ५७ युग्मदम् ।
स्फुरन्नेपथ्यरत्नानां योषितां विलसद्द्युतिः ।
ताराणां चन्द्ररेखेव भामिनी सा विदिद्युते ॥ ५८

नितम्बचुम्बिवसनः स्वेदलेशादपाहरत् ।
प्रियाविशः प्रजानाथं चारुगन्धविलेपनः ॥ ५९
प्रासादोपरि सुप्तानां मुखानि कुलयोषिताम् ।
आममर्श करैः स्निग्धैर्व्विलोल इव चन्द्रमाः ॥ ६०
मुखेषु लब्धावसरास्तासामासवगन्धिषु ।
पद्मेष्विवेन्दुकिरणाः परभागं प्रपेदिरे ॥ ६१
वृन्दानि योषितामिन्दीराग्रवन्तोऽपि भानवः ।
चित्राणि शोभयाञ्चक्रुः काचभेदा इवाणवः ॥ ६२
मध्ये रत्नाकरोर्म्मीणां प्रस्फुरद्रत्नरोचिषाम् ।
मनःशिलादिच्छुरितः शिलोच्चय इवोज्ज्वलः ॥ ६३
कनकद्रुतगौरीणां दीपिकानामिवान्तरा ।
सभक्तिरचनः काचपात्रभेदः स्फुरद्द्युतिः ॥ ६४
विद्युतामिव विद्युत्वान् ताराणामिव चन्द्रमाः ।
लसत्पल्लवलक्ष्मीणामटवीनामिवाचलः ॥ ६४
स्फुरन्नेपथ्यरत्नानां मध्ये रेजे स योषिताम् ।
प्रफुल्लहेमवल्लीनां पारिजात इवापरः ॥ ६६ विशेषकम् ।
अथ गङ्गामङ्गनाभिर्विजगाहे जनेश्वरः ।
हिमकुल्यामिवालोलराजहंसविराजिताम् ॥ ६७
वगाह्यमाना योषिद्भिर्जाह्नवी समपद्यत ।
उद्विग्नैः परिकूजद्भिः संकुला जलपत्रिभिः ॥ ६८
विलोलनेत्रभ्रमरैरुद्ग्रीवैरापगां सुखैः ।
अलञ्चक्रुर्नितम्बिन्यः प्रोन्नालैरिव पङ्कजैः ॥ ६९
तासां मुखशशाङ्कानां प्रभयेव प्रतर्ज्जिताः ।
आविलाम्भःप्लवाः कामं मम्लुः पङ्केरुहस्रजाः ॥ ७०

तर्ज्जिताभ्रोजवक्त्राभिः सपरागाभिरापगा।
ताभिराकुलिता स्त्रीभिः सर्व्वथैव प्रचुक्षुभे॥ ७१
पथ्यङ्कुवन्तः सम्प्राप्तुं चक्रवाकाः स्तनश्रियम्।
क्रोधन्त इव निर्व्वेदादतिदूरं प्रतस्थिरे॥ ७१
रजोभिररविन्दानां पयसामपि विन्दुभिः।
अलताकृता व्यलक्ष्यन्त युताकल्पा अपि स्त्रियः॥ ७३
रदक्षताङ्कितं काचित् सपत्न्याः पङ्कजेक्षणम्।
प्रणयच्छलतो रोषान्मुखमङ्घ्रिरपीडयत्॥ ७४
वगाह्यलुलितं तुङ्गं तरङ्गं जघ्नुरङ्गनाः।
ईर्ष्ययेवोन्नतैर्भूयः कठोरस्तनपङ्कजैः॥ ७५
मृणालसुकुमारैश्च बाहुभिः पीवरस्तनाः।
प्लवन्ते स्म नितम्बिन्यो मज्जन्त्योऽप्सु पुनः पुनः॥ ७६
कस्याश्चित् स्मयमानायाश्चन्द्रबिम्बमिवाननम्।
छिद्रान्तरादिव क्रान्तं जलमध्यादलक्ष्यत॥ ७७
स्त्रीभिः पद्मरथाङ्गादि गङ्गाया ल्लपितं मदात्।
तासामप्याददे सोच्चैस्तुरतमाभरणोच्चयम्॥ ७८
योषितां प्लवमानानां केयूराश्लिष्टबाहवः।
उर्म्मयश्चाम्बुजजलाः स्पर्द्धन्ते स्म परस्परम्॥ ७९
परागरागमेतासामाददे सरितां वरा।
इति प्रतीपदर्शिन्योबभूवुर्लोहितेक्षणाः॥ ८०
चञ्चलाक्ष्यः पुण्यजलैर्विदूरथमथाङ्गनाः।
अभ्यषिञ्चन् तडिल्लत्यः कादम्बिन्य इवाचलम्॥ ८१
स लतिक्रम्य मर्य्यादां वग्रगां पार्श्ववर्त्तिनीम्।
असिञ्चत् सुभगैर्भूपः प्रेयसीमपरां रसैः॥ ८२

अकाण्डेऽप्यस्, मज्जन्त्या तयोज्ज्वलसुखश्रिया ।
समालिङ्ग्यत भूपालस्तत्परित्राणतत्परः ॥ ८३
तदालिङ्गनसम्भिन्नसालिकङ्कमलाञ्छनः ।
विवशो वसुधाधीशस्तां चुचुम्ब नितम्बिनीम् ॥ ८४
मह्लिष्याः परिपश्यन्त्यास्तदालिङ्गनमङ्गलात् ।
सेहे वारयितुं वीरो नारमानं वेपथूत्तरः ॥ ८५
तस्यां प्रेम प्रियस्यैवमतिभूमिमुपागतम् ।
वीक्ष्य देवी क्षणं तस्थौ स्तिमितेन्द्रियविग्रहा ॥ ८६
सूचीव्यधैरिवात्यन्तं भोगिदंशैरिवानिशम् ।
प्रियव्यतिक्रमैस्तैस्तैर्विव्यथे सा मनस्विनी । ८७
तस्याः प्रणयलीलाया मानोऽभूदतुलः प्रिये ।
निर्व्यलीकं खलु प्रेम तीव्रमानविशेषभूः ॥ ८८
अथोपकार्य्यामुत्तीर्णां तामार्य्यमतिरादरात् ।
अनार्य्यां क्षमयामास क्ष्मापालो रचिताञ्जलिः ॥ ८९
निगृह्य मनसः क्षोभं क्रूरसङ्कल्पलङ्घिता ।
वारस्त्रीवादरान् साऽपि बह्वन् बहिरदर्शयत् ॥ ९०
आश्वास्य क्षितिपमसौ विशालनेत्रा
संविष्टं निशि विवशा रुषा ज्वलन्ती ।
शस्त्रेण क्षतविनया जघान वक्ष—
स्यामूर्च्छद्विषविषमा भुजङ्गमीव ॥ ९१
व्यालोला जलदमिव क्षणप्रभोर्व्वी
प्राणाख्यं मरुतमिवेन्द्रियप्रवृत्तिः ।
निर्व्विश्या नरपतिमन्वगादथैषा
सम्पापम्परिनुदती तमःप्ररूढ़म् ॥ ९२

अथ नरपतिशोकात्तप्यमानोऽप्यनल्पं
सुविमलसलिलौघैः प्राज्यराज्येऽभिषिक्तः ।
सुदमगमदनघ्ना तत्सुतो दृष्टिपाते—
स्तदरनलमिवोच्चैर्गूढमन्तर्दधानः ॥ ८१

इति चन्द्रवंशे महाकाव्ये भीष्मजलविहृ-
वर्णनोनाम चतुर्दशः सर्गः ॥

——:(०):——

## पञ्चदशः सर्गः ।

सोऽमृतामममृतरश्मिरोचिषं
मागधीं विधिनिवेदितक्रमः ।
आजहार सहधर्म्मचारिणीं
मोक्तुमिच्छु रिव भक्तिमादरात् ॥ १

पुत्रमात्मसदृशं परीक्षितं
नाम तत्र जनयाम्बभूव सः ।
पुष्पसुप्तसितषट्पदं मधु—
र्लोककान्तमिव चारुवीरुधि ॥ २

तं निदेशविषये विशाम्पति—
स्तस्थिवांसमभिषिच्य सुस्थिरम् ।
स्वे पदे विदितशासनक्रमं
प्राप शान्तिनिलयस्तपोवनम् ॥ ३

भीमसेन इति भीमदर्शनः
सङ्गरेषु रिपुवीरपुङ्गवैः ।
दुर्ज्जयोऽस्य सुतवत्सलात्मनो-
लोकगीतयशसः सुतोऽभवत् ॥ ४

तं पितर्य्यमरतामुपागते
श्लाघ्यवीर्य्यमभजद्वसुन्धरा ।
द्यौरिवोष्णकिरणे तिरोहिते
शीतरश्मिमभिनन्दितोदयम् ॥ ५

स दुरालोकमधिकृत्य वासव—
स्यार्द्धमाप विदितर्द्धिरासनम्।
कृत्स्नमेव वसुधातलस्थितं
राज्यमस्य तनयः प्रतिश्रवाः॥ ६

स प्रतीप इति चापदात्मजं
यः प्रतीपयितुमन्यपार्थिवान्।
ज्यानिघोषनिगृहीततेजसो-
नो ससर्ज निशितोर्ज्जितान् शरान्॥ ७

सोऽधिकारमधिगम्य पैतृकं
पार्थिवः प्रकृतिरञ्जनादिभिः।
केवलं न यशसोज्ज्वलं गुरुं
विस्मयेन जनतां व्यलङ्घयत्॥ ८

सोऽनपत्यसुलभेन भूमिपो-
दुर्व्विलङ्घ्यतमसा विलङ्घितः।
नो रराज रुचिरोऽपि शारदः
शीतरश्मिरिव वारिदावृतः॥ ९

आश्रवः श्रुतवतः सदाशयः
शान्तिकर्म्म विदुषः पुरोधसः।
स्पृष्टगाङ्गजलवातकम्पिते
तप्यते स्म स तपस्तपोवने॥ १०

संयतस्य नृपतेः शुचिस्मिता
जातु जह्नुतनया शरीरिणी।
दक्षिणोरुमतिमात्रभूषणं
बल्लरी कुसुमितेव संश्रिता॥ ११

कामये मदनमात्तविग्रहं
त्वामहं मदनबाणविह्वला।
अग्निदग्धवपुषः प्रचक्षते
तत्प्रतापमुचितां प्रतिक्रियाम् ॥ १२

एवमाशु मनसः प्रहर्षणै—
र्लोभितोऽपि वचनक्रमैर्मुहुः।
निर्व्विकल्पहृदयो महीपति—
स्तामुवाच सुदतीं विदां वरः ॥ ५१

वाममेव रमणीनिषेवितं
प्राहुरूरमृषयः पुरातनाः।
तं विहाय सुभगे, वधूचितं
दक्षिणं त्वमवशा ममाश्रयः ॥ १४

लोकविप्लवभयान्न दोषत-
स्त्वामहं रतिमिवामलत्विषम्।
कामये न कमनीयविभ्रमां
धर्म्मभीरुमनसो हि मद्विधाः ॥ १५

तत् सुतार्थमरविन्दलोचने,
त्वां वृणेऽप्यनवरां सुरस्त्रियाः।
इत्युदारवचसं विशाम्पतिं
सा जगाद विकसन्मुखच्छविः ॥ १६

एवमस्तु समयेन कामये
त्वत्सुतेन कमनीयसङ्गमम्।
मत्कृतेषु विषयेषु खल्वसौ
मा करोतु विचिकित्सितं मनः ॥ १७

विप्रियं यदि किमप्यनादरा-
दाचरिष्यति मम प्रमादतः।
स्वेच्छयैव विहरिष्यते मया
तं विहाय समयातिलङ्घिनम्॥ १८

इत्यनल्पचपलाप्रकाशिनी
सा शरीरसहिता तिरोदधे।
भूपतेरपि मनो विगर्हिता-
न्मुक्तभीति लघिमानमानशे॥ १९

तस्य जातु महिषी महीचित-
स्त्रीन् सुतानजनयन्मनस्विनी।
आदरातिशयतो निषेविता
धर्मकीर्त्तिविनयानिव त्रयी॥ २०

बाल एव विमलं किलाग्रजः
कर्तुमाप विपिनं महत्तपः।
यत्प्रभावशमिताक्रमैर्मृगै-
र्मूर्त्तिमद्भिरिव संकुलं नयैः॥ २१

तत् पितर्य्यमरतामुपागते
प्राप राज्यमनुजोऽस्य शान्तनुः।
तिग्मरोचिषि गते विलीनतां
स द्युलोकमिव बालचन्द्रमाः॥ २२

सोऽभवत् किल कुले शमं गते
यं स्पृशेच्च जरसा समाकुलम्।
गच्छति स्म स सुखं पुनर्युवा
नामतस्तमिति शान्तनुं विदुः॥ २३

वार्द्धकेन करणैकलोपिना
विप्लवं पितरि घोरमागते।
नन्दयन् सह कुलं दिगन्तरै-
र्वंशतन्तुरखिलैः स खल्वभूत्॥ २४

तस्य जातु विषये विशाम्पते—
श्चातकानिव जनान् समाकुलान्।
पौरुषस्य परिभाविनः क्रमाः
दृष्टिपातरहिते विचिक्लिशुः॥ २५

सन्निपात्य स मुनीननन्तरं
कृत्यविद्विदितकृत्यसम्पदः।
म्लानकान्तिरपि दन्तरोचिषा।
पर्य्यपृच्छदमलोज्ज्वलप्रभः॥ २६

ब्रूत कोऽयमपदे प्रवर्त्तितो-
मन्त्रशक्तिमसकृतद्भवाद्दृशाम्।
पीड़यत्यफलयन्नवग्रह-
स्तीव्ररोग इव दुःसहः प्रजाः॥ २७

दुष्कृतेन कतमेन भूर्च्छता
प्रापिताऽद्य जनता व्यतिक्रमम्।
पद्मिनीव मथिता हिमाम्भसा
शीर्णचारुकरणा न राजते॥ २८

वात्ययेव हृतपुष्पपल्लवं
देहतोऽपि करुणं वनान्तरम्।
दह्यतेऽद्य विपदा हृतद्युति
प्राज्यराज्यमवलोक्य मे मनः॥ २९

यान्यनल्पविकसत्स्मितानि मे
कान्तिकाति नितरां मुदेऽभवन्।
तानि हन्त विकलानि साम्प्रतं
पीड़यन्ति जनतामुखानि माम्॥ २०

घोरदैवपरिपीड़िताम्तरां
क्लेशजालविकलां प्रजावलीम्।
हन्मुमूर्षुरिव दर्पणोद्भवा-
मात्मकान्तिमवलोक्य सीदति॥ २१

स प्रयोगनिपुणैर्मुहुर्मुहुः
श्लाघ्यपूर्व्वसफलैः प्रकल्पितैः।
पार्थ्यते न विविधैरुपक्रमैः
कष्टशत्रुरिव दैववर्द्धितः॥२२

क्लिश्यमानविषयस्य साम्प्रतं
हन्त पालयितुमक्षमस्य मे।
व्रीड़मावहति काङ्क्षितोऽपि सन्।
राजशब्द उदितो विड़म्बना॥ २३

यस्य नाम गुरवोभवद्विधा-
भूतभाविभवदर्थवेदिनः।
तत्पदेऽपि कथमेतदुत्थितं
कीटवेध इव निष्कले मणौ॥ २४

चीयते निगमपारदृश्वना-
मञ्जसेव भवतां ममापि च।
प्रार्थितेन यशसा प्रजावपु-
श्चन्द्रविम्बमिव चारुरश्मिना॥ २५

तत् किमत्र करणीयमद्य मे
ब्रूत तावदविशङ्कमानसाः ।
ऐलवंशनरलोकपालिनां
यूयमेव विपदन्तकारिणः ॥ ३६

अप्यसुव्ययनिवर्त्तनं भवे-
द्देवमेतदपि तत् करोम्यहम् ।
राज्यकोशबलसम्पदादिके
बाह्यवस्तुनिवहे कथैव का ॥ ३७

तेऽभिनन्द्य नृपतेर्वचो महत्
प्रोचुरस्खलितवृत्तमादरात् ।
अस्य बोधमयनेत्रगोचरम्
दुर्नयस्य करणं निशम्यताम् ॥ ३८

पूर्व्वजोऽस्ति तव सर्व्वधीगुणैः
ख्यातवृत्तिरमलो नृपोचितः ।
तं विलङ्घ्य तव राज्यलम्भनात्
क्लिश्यतेऽद्य विपदा प्रजावली ॥ ३९

तस्य चेन्नतिविधौ महात्मनो-
राज्यमेतदखिलं प्रकल्पयेः ।
राष्ट्रमद्य न चिराद्विमोक्ष्यते
दुर्नयात्तदिति नो विनिश्चयः ॥ ४०

तन्निशम्य वचनं मनीषिणा—
मास्रवः स खलु धार्म्मिकाग्रणीः ।
अग्रजाय चतुरर्णवां भुवं
दातुमाशु गमनोन्मुखोऽभवत् ॥ ४१

पूर्व्वमस्य सचिवैर्हितैस्त्रिभि—
र्हेतुवादकथया विमोहितः।
आगमस्य परिनिन्दयाऽभवत्
पङ्किलः स किल धार्म्मिकाग्रणीः ॥ ४२

इत्यसाववरजेन सादरं
प्रार्थितोऽपि पतितत्वमागतः।
राज्यमाप न कुलक्रमोचितं
किल्विषातिशयसार्गलं बली ॥ ४३ युग्मकम्।

काममात्मवचनान्निवर्त्तितः
स्वां पुरीं स पुनरेत्य पार्थिवः।
संविलोक्य मुमुदे निजं पदं
मत्तबर्हिनिचयैः पयोमुचाम् ॥ ४४

घर्म्मजालविकला प्रजावली
केवलं न जलदैः प्रतर्पिता।
कीर्त्तिरप्यभिनवा महीपतेः
सागरप्रणयिनीव वर्द्धिता ॥ ४५

अत्र विभ्रमगमार्गगामिना
जातु जह्नुतनयामुपेयुषा।
तेन योषिदवलोकिताऽभव-
न्नेत्रसाम्यपरिरचितव्रता ॥ ४६

पूर्व्वमेव गुरुणा निवेदितां
लीलया च विकसत्कुरङ्गच्छविम्।
तां त्रिलोकललनाकुलोज्ज्वलां
निर्व्विवेश समयेन पार्थिवः ॥ ४७

गूढरत्नवलयाब्धिमेखलां
चारुवेशपरिवर्द्धितद्युतिः ।
ओघिलब्धिरशना समाहसत्
सा नृपालमहिषी वसुन्धराम् ॥ ४८

जातमात्रतनयान्नकेवलं
सप्त सप्ततुरगोज्ज्वलप्रभान् ।
आनृशंस्यमपि संहसन्त्यसौ
पुण्यतीर्थसलिलेष्वमज्जयत् ॥ ४९

पार्थिवस्तु हृदि तेन कर्म्मणा
पीड़ितोऽप्यतितरां दयापरः ।
सत्यभङ्गभयवेपितात्मना
नान्वयुङ्क्त दयितां किमप्यसौ ॥ ५०

अष्टमेऽथ तनये यदा पुनः
सा जहास परिहृष्टमानसा ।
स्नेहवेगपरिलङ्घितस्तदा
दूयमानहृदयो जगाद ताम् ॥ ५१

रूपमेतदतिपेलवं तथा
वज्रसारकठिनं तवान्तरम् ।
सुप्रसन्नसलिलाऽपि जाह्नवी
गूढनक्रनिकरा भयावहा ॥ ५२

लोचनैकरुचिरा शतह्रदा
नाभविष्यदतिमात्रकाङ्क्षिता ।
केनितान्तचपलाऽपि चेदियं
नाकरिष्यदसुभिर्व्वियोजनम् ॥ ५३

श्लाघ्यकान्तिरपि भीषणाऽऽयती
स्रष्टुमप्यतिशयं न पार्य्यसे।
स्पर्शमात्रपरिलुप्तचेतना
रूढ़कार्य्यकुशला तड़िद्यथा॥ ५४

उच्यते यदतिवत्सला प्रसूः
कैतवं तदिति वेद्मि साम्प्रतम्।
यत् त्वमात्मतनयान् विनिघ्नती
स्पृश्यसे न घृणया मनागपि॥ ५५

देवपुत्रसदृशाननेकशो-
विह्वलेव जननी त्वमात्मजान्।
लोपयस्यविधिना निजेच्छया
किं दुरापगुणवत्र दूयसे॥ ५६

पुत्र एव दयिताप्रयोजनम्
प्राहुरेवमृषयः पुरातनाः।
तद्विपर्य्ययकृता त्वया शुभे,
सद्विधस्य वद कः फलोदयः॥ ५७

अस्तु तावदिममप्यनागसं
पुत्रमेकमवरत्न शोभने।
एवमप्यसुलभोज्ज्वलत्विषा
सङ्गमोऽस्तु सफलस्त्वया समम्॥ ५८

विप्रियं न किमपि प्रिये, पुरा
भीरुरस्मि मनसाऽपि नाचरम्।
तद्विशालनयने, ममाधुना
रक्ष्यतां प्रथमयाचनाञ्जलिः॥ ५९

इत्यनल्पमलिनच्छविं नृपं
शौच्यजालपरिविह्वलान्तरम् ।
द्योतयन्त्यतितरामिवान्तरम्
सा स्मितेन शुचिना स्म भाषते ॥ ६०

मा निरुन्धि तनयं महीपते,
कातरत्वमिति मा गमः पुनः ।
एष एव धुरि पुत्त्रिणां सुत—
स्त्वामलोकसुलभः करिष्यति ॥ ६१

वारुणेरनयसम्भवक्रुधा
मर्त्यलोकमवशाः प्रपित्सवः ।
कातरा हि वसवो ययाचिरे
जन्मने च जलसात् कृते च माम् ॥ ६२

तानवेहि सलिलान्तरे मया
संविदेकवशया विसर्जितान् ।
तद्गृहाण सुतमेनमादरात्
सङ्गमो न भविता मया वृथा ॥ ६३

विद्धि जह्नुतनयामयोनिजां
मां निदेशवशगां प्रजापतेः ।
स्वस्ति तेऽस्तु समयातिलङ्घनात्
साधयामि परिमुक्तबन्धना ॥ ६४

इत्यलक्ष्यगतिरापगाऽभवत्
पश्यतः क्षितिपतेस्तिरोहिता ।
प्राप सोऽपि तनयं यमाख्यया
देवपूर्व्वमृषयो व्रतं विदुः ॥ ६५

वारुणेः सुरनदीप्रणोदितात्
साङ्गवेदमयमध्यगात् पुरा ।
अस्त्रजातमथ शास्त्रकोविदा—
द्भार्गवादुशनसश्च सञ्चयम् ॥ ६६

श्लाघ्यवीर्य्यमभिनन्द्य तं नृपो—
यौवराज्यमचिरादलम्भयत् ।
सोऽपि कान्तगुणराशिभिः प्रजाः
पौरवांश्च गुरुमप्यनन्दयत् ॥ ६७

यामुने स पुलिने विलासवान्
जातु गन्धमतिसुन्दरं नृपः ।
दिव्यसत्परिमलानुकारिणं
जिघ्रति स्म किल विस्मयाकुलः ॥ ६८

तेन खल्वनुपलब्धयोनिना
काननं चलितमत्तषट्पदम् ।
केवलं न विहितं प्रसर्पता
भूपतेरपि मनो हृतं बलात् ॥ ६९

पार्थिवः प्रभवमस्य सुन्दरीं
स्तोमपद्मदरविन्दलोचनाम् ।
श्लाघ्यचूतलतिकेव केवलं
लोकधारसहकारजन्मभूः ॥ ७०

यामुने पयसि नौश्रितामिमां
स्वं विलोक्य मणिकुट्टिमोचिताम् ।
पङ्कमग्ननलिनीमिवोन्मना—
दूयतेस्म स दयालुरात्मना ॥ ७१

तेन सा प्रणयपूर्व्वमादरात्
श्लाघनीयमनुयोगमागता।
तं जगाद मलयानिलस्वनं
कोकिलान्तरटवीव माधवम्॥ ७२

दाशराजतनयास्यरयोनिजा
सत्यवत्यभिहिता यथार्थतः।
गन्धकाल्यपरसुन्दराभिधा
गन्धमुग्धतरयोजनान्तरा॥ ७३

कामयानमथ तं शुचिस्मिता
प्रत्युवाच वचनीयवर्ज्जिता।
मद्विधा न कुलजा प्रलोभिता
स्वैरिणीत्वमनुमन्तुमर्हति॥ ७४

तद्गतेन मनसा विलज्जितो-
निर्दयञ्च विनिराकृतस्तया।
सोऽथ शून्यहृदयः समाययौ
वन्यरूपइव पार्थिवः पुरीम्॥ ७५

नैत्यिकेषु विधिषु स्मरार्द्दितः
प्रार्थनाभिरसकृत् प्रवर्त्तितः।
स क्लमौघपरिलङ्घितान्तरः
कार्य्यजातमकरोदनार्य्यवत्॥ ७६

वासरेषु कथमप्यनारतं
कर्म्मभिः स सुतरां मृदुव्यथः।
यामिनीषु विरहोदयात्मना
जागरेण क्लमतामथानशे॥ ७७

तत्त्वतस्तदधिगम्य तत्सुतः—
स्तां वधूं समुदवाहयद्गुरुम् ।
ग्राम्यधर्म्मविमुखो न केवलं
निस्पृहोऽन्वयनृपश्रियामपि ॥ ७८

तस्य राजपदलाभशङ्किना
पुत्रकेषु दुहितुर्दयालुना ।
हन्त दाशपतिना न ग्रात्मनो-
रात्मजापरिणयो मतोऽभवत् ॥ ८०

प्राकृतेष्वसुलभेन कर्म्मणा
तेन तस्य तुतुषुर्दिवौकसः ।
दुष्कराचरणतस्तमूचिरे
भीष्म इत्यसकृदेव विस्मिताः ॥ ८१

तत्प्रभृत्यतितरां महौजस-
स्तस्य भीष्म इति रूढ़िरवभौ ।
कीर्त्तयते प्रतिपदं स्वकर्म्मभिः
श्लाघनीयचरितः किलेतरैः ॥ ८२

सा तु चित्रपदपूर्व्वमङ्गदं
तं विचित्रमपि वीर्य्यनिष्ठितम् ।
पुत्रमाप पतिवल्लभा क्रमा—
च्चन्द्रकान्तमरुणोरुतेजसम् ॥ ८३

बाल एव किल पूर्व्वजोबली
श्लाघ्यबाहुबलदर्पितोऽभवत् ।
वल्गुवागमरबालकोपमो-
यस्तयोरवरजः स कान्तिमान् ॥ ८४

शान्तनोरुपरतेरनन्तरं
प्राप्तराज्यमपि पूर्व्वजन्मयोः।
तुल्यनामरिपुरल्पितामरं
कीर्त्तिशेषमकरोद्रणान्तरे ॥ ८५

अप्यलब्धवयसं किलानुजं
सागरान्तधरणीमलम्भयत्।
प्राशिषञ्च वशवर्त्तिनीः प्रजा-
भीष्म एव जननीमते स्थितः ॥ ८६

यौवनेन परिभिन्नशैशवं
माधवोल्लसितपादपोपमम्।
तं विलोक्य मुमुदे न केवलं
तस्य दारविधिमाचकाङ्क्ष च ॥ ८७

काशिराजसुतयाऽम्बिकाख्ययाऽ-
म्बालिकेतरपरया च पार्थिवः।
पुष्पचापसुभगो रतिश्रिया
भीष्मवीर्य्यहृतया पतिर्वृतः ॥ ८८

चारुकामसुखमानिशाच्चया-
न्निर्व्विशन्नतितरां तयोर्व्वशः।
सप्त सोऽथ शरदोऽतिवाहयन्
राजयक्ष्मपरिलक्षितोऽभवत् ॥ ८९

दक्षबन्धुभिषजां चिकित्सितै-
र्व्विघ्नितः स बहुशोऽप्यनन्तरम्।
अस्तमभ्यगमयन्नृपं गद—
स्तं हृतान्त इव तिग्मरोचिषम् ॥ ९०

स प्रदीप इव शान्तिमागतो-
मल्लिकामिव कुलं न केवलम् ।
राष्ट्रमप्यतितरामिवान्तर-
न्तदुग्रहस्य विदधे तमोवृतम् ॥ ८०

सत्यवत्यथ शुचाऽतिलङ्घिता
वंशलोपमवलोक्य शङ्किता ।
भीष्ममेत्य विगताऽर्थितां वृथा
वेपते स्म मनसा मनस्विनी ॥ ८१

पूर्व्वमेव नृपतेः परिग्रहा-
ज्जातमात्मनि मुनेः पराशरात् ।
साऽथ साधु समचिन्तयत् सती
बादरायणमुदाररोचिषम् ॥ ८२

चिन्तितोपनतमुन्नतान्तरं
प्रज्वलन्तमिव तेजसा रविम् ।
वंशतन्तुकरणाय कान्तिम-
त्तं जगाद कथमप्यवाङ्मुखी ॥ ८३

सङ्गतोऽथ मुनिरम्बिकाख्यया
श्मश्रुराजिपरिपिङ्गलद्युतिः ।
कृष्णकान्तिरतिदीप्तलोचनः
शक्यते स्म जटिलो न वीक्षितुम् ॥ ८४

अन्धमेव तदियं महाबलं
पुत्रमाप परिपालनाक्षमम् ।
शाश्वतं श्रुतवतां यमाख्यया
राष्ट्रमेव धृतपूर्व्वमूचिरे ॥ ८५

पाण्डुरास परिसङ्गताऽपरा
तेन नाम मुनिना भयाकुला ।
अर्थतोऽपि तदसौ महौजसं
पाण्डुमेव सुषुवे स्वमात्मजम् ॥ ९६

भूय एव जननीप्रणोदितः
सङ्गतं परिगतः स शूद्रया ।
धर्म्ममभ्यजनयद् यमात्मजं
नामतः स विदुरः किलाऽभवत् ॥ ९७

सत्यवत्यनुमताऽपि भाविनी
तं विचिन्त्य परुषं प्रजावती ।
तस्य चारुपरिचारिकां निजां
प्रैषयत् किल भयादलङ्कृताम् ॥ ९८

प्रज्ञाचक्षुर्न खलु कुशलः पूर्व्वजोराज्यमाप्तुं
पाण्डुस्तस्मादलभत कुलैः कल्पितां वंशलक्ष्मीम् ।
प्रागेवासौ मधुरिव सदाऽऽह्लादनीं कान्तिमाप्त-
स्तत्सम्पर्कात् स इव लतया सङ्गतः प्रोज्ज्वलोऽभूत् ॥ ९९
गान्धारी धृतराष्ट्रमाप दयितं जन्मान्धमेनं पुन-
र्ज्ञात्वा पूर्व्वमभूत् पिनद्धनयना साध्वीव्रतं बिभ्रती ।
तस्याः पुत्रशतं बभूव परतो ये कौरवाख्यां गता-
स्तेषामभ्यधिकाश्चतुर्थसहिता दुर्य्योधनाद्यास्त्रयः ॥ १००

जननात् परमेव तं सुतं
सहसा गर्दभराविणं पिता ।
अतिवत्सलतामुपागतो-
विदुरोक्तोऽप्यनिशं न संजहौ ॥ १०१

पाण्डुराज्यं प्राज्यमासाद्य विद्वान्
भीष्माज्ञायां स स्थितोऽभूत् स्थितिज्ञः।
अग्रे जातो जातितोऽन्धोऽपि कामं
साम्राज्यर्द्धिं शिश्रिये भोगमूलाम्॥ १०२

इति चन्द्रवंशे महाकाव्ये पाण्डुराज्यलाभो नाम
पञ्चदशः सर्गः॥

---

## षोड़श: सर्ग: ।

स दोर्ब्बलेनैव बलावलेपा—
न्नतान् पुन: स्नाघ्यतमोपदाभि: ।
साम्ना विविम्नानथ दण्डयोगी—
नोत्सृङ्खलानप्यखिलान् व्यनैषीत् ॥ १

वाग्मी किलाभ्यानयनाय दूत:
कुन्त्या: प्रतापोज्ज्वलमात्मजाया: ।
स्वयंवरार्थं शरदिन्दुकान्तं
तं कुन्तिभोजप्रहित: प्रपेदे ॥ २

शूर: पुरा कृष्णपितामहोऽभू—
त्तस्यानवद्या तनया पृथाऽऽख्या ।
तां कुन्तिभोजाय दिदेश कुन्तीं
राज्ञे किलाप्ताय स सत्यसन्ध: ॥ ३

आदास्यमानो दयितां दिनान्त:
कलामिवेन्दो: सुतरां स राजा ।
साम्राज्यकार्य्यं सचिवे विसृज्य
वह्नौ प्रचण्डत्वमिवावभासे ॥ ४

शुभे मुहूर्त्ते महनीयकीर्त्ति-
र्म्महीपतीनां ककुदं स पश्चात् ।
पूर्व्वं कुमार्य्या: प्रगुणैर्व्विलोलं
श्रुतैस्तदीयं हृदयं प्रतस्थे ॥ ५

स सैन्यमुख्यैः सहितः सहिष्णुः
प्रयाणतूर्य्यध्वनिभिर्दिगन्तान्।
आपूर्य्य साक्षादनुयायिवर्गैः
सवाष्पयन्त्रान इव प्रतस्थे ॥ ६

तस्मिन् गते नागरिकावलीभि-
र्न पूर्व्ववत्तन्नगरं रराज।
संप्रस्थिते प्रस्तुतशीतरश्मौ
नक्षत्रताराभिरिवान्तरिक्षम् ॥ ७

रथं नभस्वन्तमिवोत्पताक-
मारुह्य राजा रुचिरं स गच्छन्।
द्रुतन्तड़िल्वन्तमिवाम्बुवाहं
मरुद्भिरभ्रद्विरदो रराज ॥ ८

तस्योपरिष्टादुरुविक्रमस्य
सितातपत्रं बिभराम्बुभूवे।
तेनोर्द्ध्वमालम्बितचन्द्रविम्बः
स जङ्गमः शैल इवाललक्षे ॥ ९

स चामराभ्यामतिनिर्म्मलाभ्यां
संवीज्यमानो नरलोकपालः।
चलन्नुपान्तद्वितये वलाको
मरुत्सखो मेघइवावभासे ॥ १०

गङ्गामनङ्गोपमचारुकान्ति-
स्तरङ्गमालाममलान्तरात्मा।
विशेषनौसेतुभिरप्रमत्त-
स्त्रयीमिवोच्चैर्नियमैस्ततार ॥ ११

आकम्पितानोकहपुष्परेणु-
रास्पृष्टगाङ्गाशयशीकरार्द्रः ।
गच्छन्तमत्यन्तमिवानुकूल—
स्तं सेव्यमारात् पवनः सिषेवे ॥ १२

प्राप्तो बलिं माण्डलिकैर्नृपालैः
प्रकल्पितं कल्पविदप्रमेयम् ।
प्रगृह्य पश्यन् कमनीयदेशान्
उपह्वरं भोजपराजधान्याः ॥ १३

कार्य्याधिकारैः पुरुषैः पुरोगै-
रावेदितां तन्नगराधिपस्य ।
गुर्व्वीं सपर्य्यां रचितोपकार्य्या-
मुर्व्वीपतिः प्रीतिमगाद् गृहीत्वा ॥ १४

स निमग्नां नीरपतत्त्रिसंघै-
र्नौभिश्च पश्यन् विमनायमानः ।
नृपः कुमारीं प्रति लोलुपत्वात्
क्षणप्रसुप्तः क्षणदां निनाय ॥ १५

ततः प्रभाते लघुतूर्य्यशब्दैः
प्रबोधितो वन्दिवचःप्रभिन्नैः ।
जगाम निर्व्वर्त्तितनित्यकृत्यः
स्वयंवरस्थानमसौ सुवेशः ॥ १६

तद्राजसंघैरभिशोभमानं
विशेषनेपथ्यविधिप्रकाशैः ।
ताराव्रजैरिन्दुरिवान्तरिक्ष—
मुद्भासयामास नृपः प्रपन्नः ॥ १७

महार्हरत्नासनसंस्कृतेऽसौ
मध्ये निषण्णः स्फुरदग्रवेशः।
रराज राजा परितः प्रफुल्लः
शृङ्गे सुमेरोरिव कल्पवृक्षः॥ १८

विजृम्भिते मङ्गलतूर्य्यघोषे
किञ्चिच्चलन्त्यामपि वैजयन्त्याम्।
जगाम सा राजकमण्डलान्तः
पतिंवरा भोजपतेस्तनूजा॥ १९

तस्या मधुस्यन्दि मुखं नरेन्द्रा-
निवारितेर्ष्या युगपत् पिबन्तः।
न तृप्तिमापुः शतपत्रमेकं
फुल्लं विलोलाइव भृङ्गसंघाः॥ २०

तामिच्छतां निन्दितशारदेन्दु-
मनिच्छतामप्यवनीश्वराणाम्।
अन्तर्गतं भावमुपाशशंसु—
र्व्वैलादिकोद्भूतविलासचेष्टाः॥ २१

कश्चिद्विलोलस्तिमितायताक्षो-
निवेशयिष्यन् कमलं स्वमौलौ।
सितातपत्रस्य सुवर्णदण्ड-
ममण्डयत्तेन मुहुर्मुहुर्त्तम्॥ २२

रूपाविशेषात् पृथिवीश्वराणां
चिराय पश्यन्निव चारुकान्तिम्।
तामेव कश्चित् स्पृहनीयशोभां
विलोकयामास विलोलचेताः॥ २३

आन्दोलितेनोच्चलितद्विरेफं
लीलारविन्देन चे कश्चिदन्यः ।
अस्थानएवास्थिरमानसत्वात्
पार्श्वस्थितं स्वं सुहृदं जघान ॥ २४

सिंहासनस्थः परिवृत्य किञ्चित्
कश्चिद्वयस्यं मधुरं बभाषे ।
विलोलचक्षुश्चतुरैः कटाक्षै-
र्व्विलोकयामास तु भूयसैनाम् ॥ २५

तस्या मुखेन्दोः किल कान्तिमग्र्या—
मन्यो विलासी कथमप्यलब्ध्वा ।
अदृष्टचन्द्रो बहुलक्षपायां
म्लानच्छविं लोक इव प्रपेदे ॥ २६

परागलेशैरुपरुद्धनेत्रं
सखायमाखण्डलतुल्यधामा ।
विधाय साच्चान्मधुरेण पश्चात्
कश्चित् सिषेवे मुखमारुतेन ॥ २७

शुद्धाम्बरश्री किल मङ्गलाख्या
सौवर्णवेत्रोज्ज्वलिताग्रहस्ता ।
चेदिप्रदेशाधिपसन्निकर्षं
प्रापय्य पूज्यामथ तां बभाषे ॥ २८

आलम्बिताजानुभुजो महौजा-
दानाम्बुना भद्र इवार्द्रहस्तः ।
असौ क्षितीशः समरे रिपूणां
पुरञ्जयो नाम पुरां विजेता ॥ २९

अस्यागहारैः शतशोविसृष्टै-
रष्टापदद्योतितदिग्विभागैः ।
प्रसाधिताऽभूद्वसुधा न ताव-
द्वसुन्धराभावमपि प्रपन्ना ॥ ३०

अस्यार्णवोर्म्मिप्लुततताम्रपर्णी
मुक्ताफलैः स्थूलतमैर्हसन्ती ।
विराजते शुक्तिमतीति रम्या
परैरगम्योज्ज्वलराजधानी ॥ ३१

अमुष्य मौर्व्वीस्खलिता ज्वलन्तः
शिलीमुखाः प्रस्खलिताम्तरायाः ।
रणे रिपूणां वदनारविन्दै—
श्चिराय सार्द्धं प्रणयं वहन्ति ॥ ३२

अनेन राज्ञां ककुदेन हस्त—
मामुक्तमुक्तावलयोज्ज्वलेन ।
सुरद्रुमेणेव लताप्रवालं
कच्चित्प्रसादिच्छसि गृह्यमाणम् ॥ ३३

विलोक्य किञ्चित् परिवर्त्तमानां
वातेरितामम्बुजिनीमिवैकाम् ।
दृष्टान्यभूपालसकाशमेता-
मासादितां सा सुदतीं जगाद ॥ ३४

पञ्चालदेशेश्वर एष राजा
यज्वा यशोभिः सुरभीकृताशः ।
हर्म्याग्रपारूढतृणाङ्कुराणि
परिप्रकाशानि यतो रिपूणाम् ॥ ३५

अस्य ज्वलद्भिः प्रथितैः प्रतापै-
रपि त्रियामाखरिसुन्दरीणाम् ।
मुखेन्दवः प्रग्लपितच्छविला-
न्नैव प्रमोदाय भवन्ति यूनाम् ॥ ३६

महारथानप्रतिमाननेका—
नेकोऽयमायोधनमूर्द्धनि स्वैः ।
सन्त्याजयामास शितैः पृषत्कैः
सार्द्धं धनुर्भिर्व्वरवीरगर्व्वान् ॥ ३७

ऐश्वर्य्यमासादयितुं रुचिश्चेत्
काम्पिल्यनाम्नो नगरोत्तमस्य ।
प्रेम्नां निधिं प्रार्थितसौकुमार्य्यम-
मुं वृणीष्वामलवंशकेतुम् ॥ ३८

गङ्गोर्म्मिसम्प्लावितमूलदेशा-
न्युद्यानवृन्दानि मनोरमाणि ।
लीलाविलासायतनानि चोच्चैः
कुरुष्व पादार्पण गोचराणि ॥ ३९

तां कामयन्तीमितरत्र गन्तुं
पर्य्याकुलाक्षीमवधार्य्य बालाम् ।
नीत्वा क्षितीशान्तरमन्तरज्ञा
समावभाषे सुमुखीं वयस्या ॥ ४०

भृशं स्वतन्त्रोऽपि वशो गुरूणां
शस्त्रेष्वमोघेष्वपि शास्त्रमार्गैः ।
प्रशास्ति यः कैकयकामरूपौ
स कामरूपः पृथिवीश्वरोऽयम् ॥ ४१

अजस्रमास्फालितशस्त्रसंघं
यं सङ्गरे सोढुमशक्नुवन्तः।
बभूवुरस्मुच्च शरासनज्यां
लज्जानिबद्धाञ्जलयः किराताः॥ ४२

वगाह्यमानं त्रिदशाङ्गनाभि—
र्मूलं सरो लोहितमामनन्ति।
यस्यामले वारिणि तस्य नित्यं
यस्यावरोधाः समुपस्पृशन्ति॥ ४३

अमुष्य यात्रासु नगोपमानां
कटप्रभेदाद्गलवद्द्विपानाम्।
आसेव्यते रूढकटूग्रगन्धः
सप्तच्छदानामिव माधवेऽपि॥ ४४

अस्यावरोधाननपङ्कजानि
शशाङ्करेखेव समुल्लसन्ती।
स्नानानि चेदिच्छसि पुण्यमय्या
लक्ष्मेरव संयोजय तत् सर्जनम्॥ ४५

अथस्य कृष्णागुरुपादपाना—
मामोदिते गन्धमृगप्रचारैः।
स्थित्वा गिरेर्निर्झरशीकरार्द्रै-
र्निर्विश्यतां ग्रीष्मऋतुप्रदोषः॥ ४६

रसानुकूलं वचनं न तस्या-
बभूव कामं रुचये कुमार्याः।
सर्व्वामरैः पीतमिवेन्दुबिम्बं
दर्शक्षपायाः क्षपद्दृश्यमानम्॥ ४७

सान्निध्ययोगात् क्षणमुज्ज्वलत्वं
प्रापय्य तं विद्रुतहेमगौरी ।
बाला चलन्ती चपलेव शैलं
मालिन्यमुच्चैस्तरमानिनाय ॥ ४८

महीरुहं सा लतिकेव कान्ता
शनैर्नृपालान्तरमाससाद ।
अथेन्दुपादामलवाग्विलासा
दौवारिकी राजसुतां जगाद ॥ ४९

यस्याम्बुराशिः स च रोहणाद्रि-
र्निम्नावभूतां गुणगौरवेण ।
विभाति सोऽयं नरदेवसिंहो—
महाबलः सिंहलभूमिपालः ॥ ५०

रामेण कामं विनिबद्धसेतु-
रपि प्रशक्त्यैव दुराक्रमत्वात् ।
यस्यावरत्वाऽर्णवएव साक्षात्
प्रत्यादिशत्यन्तनिविष्टसैन्यम् ॥ ५१

रत्नान्यसौ कौस्तुभसोदराणि
स्तुतानि देवैर्बहुशो दधानः ।
तदेकनेपथ्यविधिप्रसङ्गा-
न्नसहस्रलोकं हसतीव कृष्णम् ॥ ५२

अनेन दैत्योन्मथनप्रतीतात्
पुरन्दराद्दाशवता पुराऽस्त्रम् ।
नियन्त्रितः केवलमम्बुराशिः
पुरेऽस्य मुक्तापटलं तनोति ॥ ५३

अनेन कच्चिम्मदनोपमेन
विशेषपुष्पोच्चयसौकुमार्य्या।
अम्भोधिरोधस्यनुरोधपुर्य्यां
निर्वेक्ष्यसि चौणिभृता सुखानि॥ ५४

आकर्ण्य तूर्य्यध्वनिमन्द्रनादं
महार्णवस्यार्णवमेखलायाः।
अधीश्वरलक्ष्म वसुन्धराया
रम्यासु लब्ध्वा विहर स्थलीषु॥ ५५

प्रलोभिताऽपि चितिपालमेवं
कान्तं न सा कामयते स्म बाला।
औदार्य्यलच्म्यादिगुणैः प्रतीतं
पतिव्रतेवान्यपुमांसमेतम्॥ ५६

इन्दीवरश्यामलकान्तिमन्यं
बाला महीपालमथाससाद।
विलोलबाहुः स्फुरदुत्तरङ्गा
गङ्गेव विन्ध्याचलपादशैलम्॥ ५७

वातोपयोगादिव वैजयन्तीं
चन्द्रोदयादिन्द्रवशामिवाशाम्।
तत्सन्निधानादभिशोभमानां
प्रेक्ष्यायताचीमवदद्वयस्या॥ ५८

असौ किरीटी स्फुरदग्रवेशो-
विभाति रत्नैः खचितान्तरत्वात्।
आमूलसंपुष्पितपाटलाग्रो
धातुद्रवैरद्रिरिव प्रभिन्नः॥ ५९

अयं विनीतोत्तरकोशलानां
गुणैरुदारैः कुशलाधिगन्ता ।
अंशावतारप्रभवो महौजा-
श्चतुर्भुजस्योज्ज्वलकीर्त्तिशाली ॥ ६०

अस्य ज्वलद्भिः परितः प्रतापै-
र्गर्व्वोज्झितानां किल पूर्व्वजानाम् ।
पातालकुक्षिष्वपि काश्यमानै-
स्तिरस्कृतोऽभूत् प्रभवोऽपि भानुः ॥ ६१

साकेतनारीनयनोत्पलानां
प्रीतिं परां प्रेक्षणतो वहन्ती ।
शरत्सुपर्य्याप्तकलेन्दुवक्त्रो,
त्वमस्य यूनो भव धर्म्मपत्नी ॥ ६२

सौवर्णयूपैः शतशोरघूणां
पुरस्कृतां तीरवनीं सरय्वाः ।
रम्यामलङ्कृत्य च निष्कलङ्कान्
सुदुर्लभान् भुङ्क्ष्व मनोज्ञभोगान् ॥ ६३

एवं वचोभिश्चतुरैस्तयैषा
प्ररोचिता रेचितलोचनश्रीः ।
बाला परिम्लानमुखारविन्दात्
तस्मात् क्षितीशान्नयनं चकर्ष ॥ ६४

तामङ्गनां मङ्गलहस्तसूत्रा—
मनङ्गकल्पास्तिमितेक्षणस्य ।
नीत्वा विदर्भाधिपतेः पुरस्ता-
दुवाच बालां ललिताक्षरा सा ॥ ६५

अधीश्वरोऽसौ क्रथकैशिकानां
सम्भाव्यते यस्य सदा निदेशः।
प्रतीपभूपालकिरीटकोटि-
प्रभाभिराभासितदिङ्मुखस्य ॥ ६६

अमुष्य राष्ट्रं परिमाणभावा—
दियत्तयाऽपेतमभूत् पुरस्तात्।
समुच्यते मीलनलब्धवर्णै-
र्जनैर्महाराष्ट्रपतिस्ततोऽयम् ॥ ६७

आरोपितज्यं धनुरादधानं
विलोक्य युद्धे क्षितिपालमेनम्।
मृगाइवोच्चैर्मृगराजमेकं
भवन्ति दूरादरयो विविग्नाः ॥ ६८

अनेन सम्भोगपरिश्रमेण
रम्भोरु, चेत् काङ्क्षसि भोगमग्रम्।
अलङ्कुरुष्वोज्ज्वलराजमार्गं
तत् कुण्डिनाख्यं नगरं विलासैः ॥ ६९

उपस्थितां चारुगतेः पुरस्तात्
काञ्चीपतेरञ्चितविग्रहां ताम्।
सुराङ्गनाङ्गीकुशलोत्तमाङ्गी—
मालिर्बभाषे कमलायताक्षीम् ॥ ७०

यैरीश्वरो मन्मथमात्तचापं
नेत्रानलैर्भस्मयाञ्चकार।
आद्ये तदुत्थे कुल उद्बभूव
कुलप्रदीपः क्षितिपाल एषः ॥ ७१

निवेशिता भर्तृषु यस्य बाणाः
पाण्डूनि गण्डान्यरिसुन्दरीणाम् ।
सकज्जलास्रुस्नपितानि चक्रुः
प्रभातकालेन्दुवदाविलानि ॥ ७२

यशोभिरस्येन्दुमनोज्ञकान्तेः
कान्तास्मरोद्दीपनतत्परस्य ।
तमिस्रपक्षेऽपि विभाति काञ्ची
ज्योत्स्नाप्रपूरस्नपितान्तरेव ॥ ७३

रमाननङ्गप्रतिमेन सार्द्धं-
न्निर्वेष्टुमिच्छा तव चेदनेन ।
रम्भोरु सम्भावय वानिनीना-
मेनं ततो माननिवारणास्त्रम् ॥ ७४

हृष्टाऽपि सख्याश्चतुरैर्व्वचोभि-
र्व्वाला नृपालान्तरमेव याता ।
अप्यन्तरायैकपरप्रवृत्तिः
फलं परस्तादिव तत्त्वविद्या ॥ ७५

अथावदत्तामरविन्दनेत्रा—
मसौ महेन्द्रप्रतिमो महौजाः ।
श्रव्याश्वकाराधरनिर्व्यपेक्षं
योवासवं सोमरसासवेन ॥ ७६

युवा सुवेशोऽयमजातशत्रु-
र्नितान्तकान्ताजनलोभनीयः ।
अवन्तिनाथः सुरलोकपालं
प्रत्यस्पृहो यो नरलोकपालः ॥ ७७

न राजतेऽस्योज्ज्वलराजधान्यां
गौर्य्या समं केवलमेव कालः ।
वैरात्ययादीश्वरसन्निकर्षे
पुरदायुधः पुष्पधनुर्धरोऽपि ॥ ७८

वसन्नपि स्वे विषयेऽङ्गनाना-
मपाङ्गबाणैः प्रहरन्ननङ्गः ।
अजस्रमेतं स्पृहयाम्बभूव
न जातुचित् पुष्पशिलीमुखाय ॥ ७९

अमुं कटाक्षैः प्रहरन्त्यभीक्ष्णं
विलोपयास्योद्धतरावलेपम् ।
लीलाविलासेषु विलासिनीनां
चातुर्य्यरूढ़िप्रभवं निजानाम् ॥ ८०

सिप्रातरङ्गानपि चारुशृङ्गान्
तुङ्गस्तनाभ्यां जलकेलिकाले ।
आस्फालयास्फालनगर्व्वलोपा—
दवन्तिनारीस्तनपङ्कजानाम् ॥ ८१

व्यलङ्घयद्भूपतिमग्रवेश्मं
बाला नृपालान्तरमीप्सुरेव ।
वसन्तपुष्पान्तरमाप्तुमिच्छुः
सहस्रपत्रं भ्रमरीव फुल्लम् ॥ ८२

अथावदत्तां प्रतिहाररक्षी
ललामभूतां कुलकामिनीनाम् ।
कादम्बिनी मन्द्रमनोज्ञशब्दा
रसोत्तरं निर्व्वचनामिवोर्व्वीम् ॥ ८३

लाटोऽयमिन्दीवरनिन्दिकान्ति-
र्व्विलम्बमानोज्ज्वलहेममाल्यः ।
आभाति भास्वद्धरितालधारा-
मनोहरः शैलइवामलौजाः ॥ ८०

सन्ध्याविधौ पूर्व्वमभूद्विधातु-
राचामतो यत्सुलुकं जलस्य ।
मुनिस्सुलुक्यो विमलाम्बरात्मा
वंशस्य साक्षात्तिलकोऽयमस्य ॥ ८५

असौ विलासी प्रकृतीर्व्विसृज्य
विलासिनीभिर्व्विलसत्यजस्रम् ।
अनेन सार्द्धं परिभोगदीक्षां
वामाक्षि, कश्चिचरितुं रुचिस्ते ॥ ८६

भोगक्षमं कान्तमपि क्षितीशं
कुमारिका कामयते स्म नैतम् ।
लीलाविलासस्य सखायमुच्चैः
स्मरस्य जातीव वसन्तकालम् ॥ ८६

योयः प्रसादाविलया श्रियेव
तयोत्पलाक्ष्या व्यतिलङ्घ्यतेस्म ।
व्यलीकभावाकुलमानसत्वात्
स भूमिपालो ग्लपितो बभूव ॥ ८८

भूपालवर्गैः क्षणविस्मिताऽपि
सा पाण्डुमापाण्डुरचं प्रपेदे ।
मार्गाचलैर्व्याकुलिता मुहूर्त्त—
मम्भोनिधिं मेखलकन्यकेव ॥ ८९

आसाद्य साक्षादनवद्यरूपं
तमास्त बाला गमनाद्विरक्ता।
तस्याविबोधक्षपितव्यलीकं
साक्षादविद्येव तदीयसर्गात्॥ ८०

अथ प्र प्रफुल्लाननपद्मरम्यां
विलासदीक्षागुरुपद्मलाक्षीम्।
आलिर्व्विलज्जीकृतशीतरश्मिं
तामन्तरज्ञा चतुरं बभाषे॥ ८१

वंशः क्षितौ यः प्रथितः सुधांशो—
स्तत्पादतुल्यैर्व्विमलैर्गुणौघैः।
मुक्तावदातोज्ज्वलकीर्त्तिपूरै—
स्तमत्यगादप्यनिशं लसद्भिः॥ ८२

स्फुरत्प्रभैर्द्यौरिव सद्विमानै—
र्महौषधीव प्रगुणैर्म्महद्भिः।
यूपैर्निखातैः खचिता धरित्री
यद्भूमिपालैर्जलराशिचिह्ना॥ ८३

समं यशोभिः क्षितिशासनानां
येषां सदा शासनमप्रतर्क्यम्।
द्वीपान्तरेष्वप्यवकाशमास—
मुत्तालमप्यम्बुनिधिं विलङ्घ्य॥ ८४

सुराङ्गनाभिः सुरमङ्गलार्थं
वीणाकराभिः परिगीयमानम्।
येषां महद्बाहुबलं बलारि-
र्व्वैस्तरं स्थानमतोल्य तस्थौ॥ ८५

तद्वंशकेतुर्नरपुङ्गवोऽसौ
मह्वीचितां मौलिनिवेशिताज्ञः ।
वव्रे स्वयं यं कमला मुरारे-
र्व्विशालवक्षःस्थलमप्युपेक्ष्य ॥ ९६

सौवर्णपुङ्खाः समरेष्वमोघाः
शिलीमुखा यस्य समुल्लसन्तः ।
चिराय कुर्व्वन्ति विलासिनीनां
गण्डस्थलीः पाण्डुरुचः परेषाम् ॥ ९७

गुणैः समस्तैः प्रणयक्रमाद्यै-
रुदारसत्वस्य महौजसोऽस्य ।
लोभानपेक्षैरपि पक्षपातात्
परस्परं तत्यजिरे विरोधाः ॥ ९८

यशोभिरुच्चैरिव पाण्डरोऽसौ
स्फुरत्प्रभैराभरणैर्व्विभिन्नः ।
विभाति राजेव शिलोच्चयाना-
मुच्चावचैर्धातुरसैः परीतः ॥ ९९

अस्योरुवक्षस्यपरान् क्षितीशान्
विलङ्घ्य लक्ष्मीं प्रणयाद्वसन्तीम् ।
श्लाघ्यां सपत्नीमवकाशमाशा
नोत्सारयन्ती सुचिरं क्षमास्व ॥ १००

सख्यास्ततः सा वचनावसाने
प्रयत्नसंवारितसंक्रमाभ्याम् ।
विकाशसङ्कोचमनोहराभ्यां
विलोचनाभ्यां नृपतिं ददर्श ॥ १०१

तथैव दूर्व्वाङ्कुरभङ्गमय्या
पुष्पस्रजा मङ्गलचूर्णगौर्य्या ।
संयोजयामास समं जनानां
भूपालसूक्तैस्तरसाधुवादैः ॥ १०२

न केवलं तेन स एव भूप-
स्तां सुन्दरीं हस्तगताममंस्त ।
साऽपीनमत्यन्तविलोलचित्ता
मालाकरालिङ्गितमिङ्गितज्ञा ॥ १०३

इन्दोः कलेव कमनीयरुचिः प्रदोषं
यातेयमुत्पलदलोपमलोचनश्रीः ।
इत्यादराद्वचनमुच्चरितं निशम्य
लोकैर्व्व्यलीकमगमन् किल भूमिपालाः ॥ १०४

नेदुर्व्विनोदपिशुनाः कमनीयतूर्य्या-
श्चेतस्तयोरतितरां मुदमावहन्तः ।
तैरेव भूमिपतयः प्रकटं भवद्भि-
स्तापं मनस्यभिहता इव गाढमापुः ॥ १०५

मोदप्रभिन्नवरपक्षलसद्विलासो-
म्लानाननस्त्वितरत्र ततो विषादात् ।
एकत्र भानुकिरणैस्तमसाऽपरस्मि-
न्नेकप्रदेश इव भूमिपतिव्रजोऽभूत् ॥ १०६

प्राप्तां सुतां दयितमात्मगुणानुरूपम्
आकृष्टलोकपरिनिर्म्मलचारुलक्ष्मीम् ।
बालार्कमण्डलमिवोज्ज्वलपूर्व्वसन्ध्या-
मालोक्य मोदमगमत् किल कुन्तिभोजः ॥ १०७

क

इति चन्द्रवंशे महाकाव्ये कुन्तीस्वयंवरवर्णनोनाम
षोड़श: सर्ग: ।

---

## सप्तदश: सर्ग: ।

अथ तमग्रपरत्वं वसुधाधिपं
स परिगृह्य गुणाधिकमात्मवान् ।
निजपुरं समवेशयदादरात्
सुरसखं रसखण्डमिवोज्ज्वलम् ॥ १

पुरगवाक्षकुलं किल तत्क्षणा-
दपिहितं समभूत्तमिवेक्षितुम् ।
रसविशेषविलोलतरेक्षणा-
नृपपुरे पपुरेनमिवाङ्गना: ॥ २

परिचितं रुचिरै: पुरजालकं
मधुविलज्जविलासवतीमुखै: ।
प्रचुरभक्तिमतीव विदिद्युते
कारचितां रचिताम्बुरुहप्रभम् ॥ ३

मुखशशाङ्करुचो: पुरयोषितां
परिविलोक्य तमुत्सुकमानसम् ।
कुसुमचापभृत: स्थितमस्पृश-
न्मधुरिमा धुरि माधवसन्निभम् ॥ ४

मधुरया स्मितचारुमुखश्रिया
समहरन्मधुमुग्धदृशां मनः ।
स मधुमन्मथयोर्मधुराकृतिः
समरसोऽमरसोदरविक्रमः ॥ ५

श्रितविलासविलोचनवीक्षणै—
र्मनसिजं सुतरामभिवर्धयन् ।
मदवतीषु मुहुः समतेजय-
न्नरमणो रमणीषु कुतूहलम् ॥ ६

स्तनविचुम्बिसुतोज्ज्वलिताङ्कया
विगलितांशुकयाऽलसचक्षुषा ।
अनुगवाक्षमुपस्थितमीक्षितुं
स्मरसमं रसमञ्चितमेकया ॥ ७

अनिशमन्यपदोज्झितचित्तया
तमखिलैः करणैरनुयातया ।
न खलु दूरगतिर्विवरेतरा—
मपरया परयाविशदायुधम् ॥ ८

अपरिपूर्णविभूषणयाऽन्यया
विरचितैकविलोलवतंसया ।
गुरुजनान्तिकमागतमुन्नतं
मुदितयाऽऽदितया मदसम्पदः ॥ ९

अपि पिनद्धमुपात्तकचोच्चयं
समवलम्ब्य करेण नितम्बिनी ।
न सहसा न वहिस्त्वरया लस—
न्मृगमदाऽगमदालयतः परा ॥ १०

कुलजनोचितयोज्ज्वललज्जया
परिचिता गृह एव पुराऽऽस्त या ।
न मुहुरुत्कलिकाकुलिताऽभ्यगा—
द्व सहसा सह साऽऽलिजनैर्बहिः ॥ ११

किसलयोपमपाणितलाऽपरा
सकुसुमाभरणा परिपेलवा ।
प्रतिपदं ललितोत्तरमभ्यसत्
प्रचलता च लतालघुनर्त्तनम् ॥ १२

नववधूरवधूतवधूक्रमा
वहिरपि प्रतिगन्तुमनन्तरम् ।
कृतमतिः परिवादभयाकुलै—
र्निजगृहे जगृहे गुरुभिर्बलात् ॥ १३
छलितवृद्धजनैश्चटुलाक्षरै—
रकलिता गृहकर्म्मामिषाद्दहिः ।
अलसलोलविशालविलोचना
रसवशा सहसाऽऽविरभूत् परा ॥ १४
गुरुनितम्बपयोधरनिःसहा
गजवधूरिव मन्थरगामिनी ।
निजसखी समया न विलम्बितुं
व्यपरया परया प्रतितत्वरे ॥ १५
हिमकरोपमशुभ्रतमां स्रजं
मणिमयीमपरा परिबिभ्रती ।
विगलितां करएव ययौ त्वरा
पुरवधूरवधूतसुराङ्गना ॥ १६

अधिगत: कमनीयतमां वधं
स्मरइव प्रतिपन्नकलेवर: ।
नरवर: खलु सोऽयमभीप्सित:
प्रियतमो यतमो भुवि योषिताम् ॥ १७

परमसौ पतिरेव सुदुर्लभ:
किमु महीपतिपङ्क्तिपुरस्कृत: ।
हिमकरो हि पुरेव मनोहर:
किमुदितो मुदितो जलदात्ययात् ॥ १८

अमुमसौ प्रतिभाति रुचाऽधिकं
क्षितिपतिं प्रतिपद्य विलासिनी ।
रुचिरभाइव दीपशिखा भृशं
समलकाऽमलकाचविशेषगा ॥ १९

स्मरमधुप्रतिमं वपुषा गुणै-
रतिपुरन्दरमिन्दुनिभाननम् ।
क्षणतनूकृतलज्जमसुञ्जनं
सुनयने नय नेत्रपथान्तरम् ॥ २०

सुरभिमासमिव स्मरदीपनं
सुमनसामपि मोदरसावहम् ।
उपवनान्तलतेव विराजते
सुवदना वद नामुमुपेत्य का ॥ २१

अयमपाङ्गविलोकनमङ्गलै-
रसभरैरिव योषिदभीप्सितै: ।
उदशिखं सखि, पुष्पशरैर्चितं
हुतवहं तव हन्तु हृदि स्थितम् ॥ २२

रसलसत्कमनीयतमाक्षर-
स्मरकथापरिमन्थरतामसौ ।
मनसिजज्वलदायुधवेदनां
शमयिता मयि तावदपोहतु ॥ २३

इममतिप्रणयोचितमादरा-
द्दयितमाप्य नृपं सुभगोत्तरा ।
प्रथमपि क्षणवत् क्षपयेन्मुदा
रसमयं समयं मदिरेक्षणा ॥ २४

इममपि प्रविलोक्य विलासिनं
रतगुरुप्रतिमं रमणीजनः ।
यदि भवेदपरेक्षणलालसा-
मधिगतो धिगतोऽपविडम्बनाम् ॥ २५

इति वधूजनमुग्धमुखोद्गताः
स विनिशम्य कथा मधुराक्षराः ।
नरपतिः प्रविवेश निकेतनं
सुहृदयैर्हृदयैश्च मृगीदृशाम् ॥ २६

स खलु विष्टरमर्घ्यमुपाहृतं
मधुमदप्रतिमो दधि चाग्रहीत् ।
शशिनिभञ्च दुकूलयुगं बली
भवपुषा वपुषा मदनोपमः ॥ २७

अथ वधूवरयोर्मुखचन्द्रिका—
ममलचन्द्रकचन्द्रिकयोरिव ।
कुलगुरौ जनता समलोकय-
त्युपरते परतेजसि भूपतेः ॥ २८

अथ तयोर्नयनानि परस्परं
विवलितानि विकाशमितानि च ।
अपि विलज्ज्य विलोकयतोर्मिथः
सुमनसो मनसोरवहन्मुदम् ॥ २९

अथ वधकरपल्लवमादरात्
समवलम्ब्य लसज्जलसङ्कुलम् ।
प्रचलता स्वकरेण समागम-
न्मुदमसौ दमसौरभवानपि ॥ ३०

कुसुदराशिरिवेन्दुमरीचिमान्
विधुरिव प्रतिपर्वनिशामुखः ।
स च तथाविध इन्दुरुचिर्व्वभौ
सचपलश्चपलोऽपि घनोयथा ॥ ३१

अथ स मेरुमिनः परिदक्षिणं
रथलसत्सुपताक इवाकरोत् ।
नववधूसहितो ज्वलदर्च्चिषं
दिनकरोनकरो दहनं मृषा ॥ ३२

अथ शमीभवपल्लवभङ्गव-
न्नववधूरुचिराञ्जलिविच्युतम् ।
अनल उज्ज्वललाजमयं हवि-
र्निपतितं पतितन्तुसुखोदयम् ॥ ३३

तदखिलं निपतज्ज्वलदर्च्चिषो-
र्हुतभुजः कनकाचलशृङ्गवत् ।
मरकताञ्चितमौक्तिकभक्तिव-
द्रुचमितं च मितं क्षणमुज्ज्वलम् ॥ ३४

स खलु तत्र वधूकरमादरात्
समवलम्ब्य चकार रसालसम् ।
विगलितस्ततएव मुहुर्मुहुः
स्मरवशो रवशोभिमुखाम्बुजः ॥ ३५

अनलधूमसमागमतः क्षणं
तनुसमुच्छ्वसिताञ्जनमञ्जुलम् ।
निजसखीमुखमण्डलवेन्दुना
तुलितमालितमा समलोकयत् ॥ ३६

इति विधाय विवाहविधिं नृपो-
दयितया सह पार्वणचन्द्रमाः ।
रुचिरचन्द्रिकयेव चचाल स-
द्युतिरयन्तिरयंश्च दिशान्तमः ॥ ३७

पथि दिनानि दिनेश्वरसन्निभः
समतिवाह्य रथैरतिवाहितः ।
अथ विवेश पुरं वरयोषिता
स विलसन् विलसन्नरिपुव्रजः ॥ ३८

नववधूरकरोद्विविधाध्ववत्
पुरमुदारहिरण्मयतोरणाम् ।
परपुरन्ध्रिमुखाञ्चितजालका-
मचिरभा चिरभावितमङ्गलाम् ॥ ३९

स खलु मद्रपतेरपि भामिनीं
सुरधुनीतनयोपनतां नृपः ।
उदवहद्विहिताभिरतिर्नृणां
दुहितरं हितरक्ततरोऽमृषा ॥ ४०

पितरि नाकमिते किल मद्रपः
कुरुकुलर्षभभीष्मसमर्थितः।
भृशमदादनुजां सुपरिच्छदैः
श्रियमितां यमितान्तरकाङ्क्षिताम्॥ ४१

नयइवोज्ज्वलभूतियशःफलो-
दयगतोनवराग इवोत्कटः।
नरपतिर्दयिताद्वितयान्वितो
नवतमो वत मोहकरोऽभवत्॥ ४२

सुरनदीयमुनाद्वयमध्यगो-
ऽर्णवइव प्रतिभिन्नमदोज्ज्वलः।
गज इवान्तरगो गजयोषितोः
स हि तयोर्हितयोरभिदिद्युते॥ ४३

युधि जयाय दिशां शमलक्षणः
कुलधुरन्धर एष विनिर्गतः।
प्रतिचकार रिपून् शरदृष्टिभि-
र्धृतिमितैस्तिमितैश्च बलैर्वृतः॥ ४४

अथ परागभरैरभिरञ्जयन्
जगदगान् कुसुमैरुपशोभयन्।
रतकलाकलनाविलतामिल-
ज्जनमनोनमनो मधुरबभौ॥ ४५

स्थितिमतां समयातिविलङ्घनं
खलु यतः सुतरामयशस्करम्।
मलयशैलवतीमपि काङ्क्षितां
रविरतो विरतः प्रति दक्षिणाम्॥ ४६

स खलु दक्षिणया समुपेक्षितः
परिजहौ द्युमणिः कमनीयताम् ।
परुषया सहितः पुरुषो भव-
त्यपरसोऽपरसोल्लसितोऽपि सन् ॥ ४७

मृदुतया न चिरादिव भानुमान्
विरलतामनयत्तुहिनावलिम् ।
सहजतः खलु कोऽपि विनिग्रहो-
बलवतो लवतोऽपि सुदुष्करः ॥ ४८

स्वयमभूदथवा हिमजालकं
विगलितं तपनस्य समागमात् ।
द्रवयते महतामिह सङ्गति-
र्दृतमनस्तमनःसदृशं जडान् ॥ ४९

परिगतं शिशिरोपचयात्यया-
द्बहुलशीततया न च चण्डताम् ।
रविकराः परिपोषयितुं क्षमाः
मक्षिकया हि कयाऽपि तदा स्थितम् ॥ ५०

प्रति विमृष्टमणिप्रकरोपमै-
रुडुचयैर्नितरां समलङ्कृताः ।
अपि सुधाकिरणेन समन्विता-
न रजनीरजनीह क्षणारमता ॥ ५१

मिलितमुज्ज्वलचन्द्रिकया मुहुः
शशधरं परिफुल्लरुचं न सा ।
न खलु रात्रिरिवेक्षितुमक्षमा
तनुतया नु तया समदृश्यत ॥ ५२

तनुरसौ चणदाऽपि वियोगिनी:
चणपुरस्कृतदैर्घ्यंभयङ्करी ।
विगलिताश्रुमुखी: परिमीलिता:
समदहन्मदहन्द्रशुचाऽऽविला: ॥ ५३

मधुमुखे कुसुमैर्व्विरलोदयै-
रुपवनान्तभुवो रजनीमुखे ।
अनिबिडैरुडुभि: खवदुज्ज्वले-
रुरुचिरे रुचिरे मधुलेहिनाम् ॥ ५४

रतिपतेरथवा मणिदीपिका-
ज्ज्वलितपुष्पलिहोऽतिसुगन्धय: ।
विदधिरे मधुना कुसुमोत्करा:
सततमस्ततमस्तविलासिनाम् ॥ ५५

कुसुमिता तरुणारुणरागभृत्-
किसलया मलयानिलकम्पिता ।
मधुरसा स्म न चारुकलेवरै-
र्म्मिलति का लतिका वनपादपै: ॥ ५६

प्रणयिणा दयितेव रसोत्तरा
सुरभिणा कुसुमाभरणोज्ज्वला ।
नवपलाशकुलांशुकविभ्रमा
तिलकिताऽलकिता च वनस्थली ॥ ५७

कमलमुग्धकुलं प्रमदामुखं
त्रितयमेतदभून्मधुना समम् ।
मधुरितं शिशिरस्य विनिग्रहा-
न्नसदयं सदयश्च विलासिना ॥ ५८

अगमयन् सरितः समयोद्धते-
र्जलरुहैरसितोत्पललोचनाः ।
मृगदृशः स्तनतामरसैर्यथा
न कमनाः कमनारतमुत्कताम् ॥ ५९

रविकरैः सदयं परिलालिता
रसवती मधुदानविशारदा ।
मधुलिहं हृदये निदधे मुदा
कमलिनी मलिनी वितथोक्तितः ॥ ६०

उपवनान्तमिवेक्षितुमुत्सुकः
कुसुमचापसखः किमिहागमत् ।
नवपलाशमिषान्नवचन्द्रमा-
बहुतपाहुतपावकवद्रुचा ॥ ६१

शरतया किल पुष्पधनुर्भृतः
क्षतजदिग्धसुरःसु रुषाऽधिकम् ।
ध्रुवमशोककुलं विनिवेशितं
तरुणमारुणमास वियोगिनाम् ॥ ६२

अभिनवस्तवकोदयशोभया
किसलयारुणया लतया स्थितम् ।
विटपिनो विटपाग्रसमागमा-
न्नतया नतयाऽतनुकम्पया ॥ ६३

कृतविदो नतमौलिपरम्पराः
प्रणतिभिः कुसुमाभरणोच्चयाः ।
विरहिणो मलयानिलमाचरन्
विषदमौषदमी वनपादपाः ॥ ६४

उपवनान्तलता किल पुष्पिता
किसलयारुणरागमयांशुका ।
पतिरतेव धृता मलयानिलै-
सुरतरसा तरसा स्म विकम्पते ॥ ६५

युवतिभिर्व्वदनासवसेवितः
सरसमौक्तिकपुष्पकदम्बकैः ।
अलिनितम्बवतीरहरन्मुदा
नवकुलो बकुलो मधुगन्धिभिः ॥ ६६

सुरभिणा सदयं परिलालिता
किसलयैः सहकारलतोज्ज्वला ।
नववधूरिव लोलविटैर्बला-
न्मुकुलिताऽऽकुलिता भ्रमरैरभूत् ॥ ६७

अरुणयोः कुसुमं नवपत्रयो-
रधरयोरिव मध्यगतं स्मितम् ।
परिविलोकितमुत्सुकतां न वा
प्रकमनं कमनङ्गमुपानयत् ॥ ६८

मलयवातलवोपनतं रजः
कुसुमजं विरजः श्रितसौरभम् ।
ध्रुवमियं विपिनान्तमही वधू-
रनवरं नवरञ्जनमाददे ॥ ६९

भ्रमरगुञ्जितगीतिमनोहरा
सलयमुच्छलिता मलयानिलैः ।
कमनयद्वनितेव न नर्त्तकी
विचलताञ्च लताऽञ्चितविग्रहा ॥ ७०

उपवनान्तभुवोऽतिसुगन्धिभि—
र्विकसितैः कुसुमैः परितो बभुः ।
धृतनवाभरणा इव योषितः
पिकरवाः करवारितपल्लवाः ॥ ७१

नवयवाङ्कुरया धृतपुष्पया
लसदशोकतरूत्थप्रवालया ।
भ्रमरसम्भ्रमयोत्सुकतामगात्
प्रमदया मदयातमुदा प्रियः ॥ ७२

विफलयन्ति मदाविललोचनाः
स्मरनिदेशभृतः स्म रुषाऽबलाः ।
प्रणयिनां ललिताङ्गुलितर्ज्जनै—
र्भुजबलं जवलङ्घितसंयताम् ॥ ७३

प्रणयिणं विहिताद्र्ंतरागसं
प्रणतमप्यसकृच्चरणान्तिके ।
अपि दृगन्तविलोकनमन्थराऽ-
परवती रवतीव्रतराऽदहत् ॥ ७४

प्रणयकोपवशात् समपास्य यां
निभृतमास मिथो दयितः पुरा ।
तमधुना सरसे स्म मधूत्सवे
हरति सा रतिसारवती प्रिया ॥ ७५

चरणयोः प्रणतं प्रियमाविला
यमतिमात्ररुषा निरकाशयत् ।
अनुनिनाय वधूः स्वयमादरा-
त्तमधुना मधुनाऽऽकुलितान्तरा ॥ ७६

न खलु मानमपास्य कृतागसं
दयितमप्यनुनीय मनस्विनी ।
परमतोऽभ्यथितेव गुरुव्यथे-
नं किल कोकिलकोपनतस्वरैः ॥ ७७

नरपतिः परिभोगमपि श्रितो-
मदवदुन्मदयौवनवानपि ।
न विकृतान्तरतामगमत् कृती
यमितयाऽमितयाऽपि मधुश्रिया ॥ ७८

वनिताहितयान्वितः परां
स पुरीं स्वामपहाय पार्थिवः ।
विचचार वने वनेचर—
प्रतिमः पार्श्वचरेष्वनादृतः ॥ ७९

ज्वलदोषधिकल्पिते मुहु—
र्वसिदीपे बलभित्सखीवली ।
विजहार हिमाद्रिकानने
मणिजालैरविलुप्तशोभने ॥ ८०

तत्र त्रिलोकपरिगीतयशाः स राजा
रम्येषु तेषु विहरन् विपिनान्तरेषु ।
क्षेमोत्तरैः स्पृहयतः किल नन्दनाय
धर्मैरमर्त्यसुलाभाय वशी जहास ॥ ८१

वीरोचितैः परिचितोज्ज्वलकर्मजालै-
र्वीर्यातिरेकमददर्पितदुष्टसत्वा ।
तं श्लाघ्यसाहसमयी ध्वजिनीव साक्षा-
दक्षोभितं क्षितिपतिं मृगया जहार ॥ ८२

मृग्यां मृगं स परिसङ्गतमभ्यवेक्ष्य
प्रायोरजोभिरवलुप्तविवेकशक्तिः ।
विव्याध तं मदनवद्धृदि तीक्ष्णबाणै-
र्विद्वानपि प्रगुणसंघजयी कृतान्तः ॥ ८३

विद्धः स मर्म्मणि शरैर्न तथा शुशोच
कालेतरत्र परलोकमभि प्रयाणम् ।
क्रीड़ारसेष्वतितरां मदिरेक्षणाया-
विच्छेदमात्मनि यथाऽपरिहृष्टएव ॥ ८४

दीनोभृशं नयनवारिभिरेष मृग्या-
स्तस्थौ चिराय विषयान्तरलुप्तबोधः ।
मन्ये प्रियाश्रुसलिलं ज्वलनाशनिभ्यां
तीव्रं जगत्सु विषदिग्धशिलीमुखाच्च ॥ ८५

धीरोऽपि बाष्पजलसिक्तकलेवरः सन्
कण्ठावरोधविकलो निभृतं रुरोद ।
विस्मापयन् तमथ मतंगगिरा विपन्नं
दग्धोऽन्तरे स किल दिग्धशरैरवाप ॥ ८६

जात्या सुधाकिरणवंशधरोऽसि राजन्,
शीलैः श्वपाकमपि नाम तिरस्करोषि ।
क्षेमाय नोर्ध्वशिरसो विपरीतवृत्ति-
र्मद्यास्तलस्य दहनस्य यथाऽवलेहः ॥ ८७

क्लेशैर्जना विषयजालभवैः प्रतप्ता-
यत्र क्षणं सुखलवैः क्षपयन्ति कालम् ।
तत्प्रेयसीललितसङ्गमतत्परं मां
हत्वा कमत्र ननु पश्यसि लाभलेशम् ॥ ८८

एको न केवलमहं चरता त्वयैव—
मेषाऽपि मत्प्रियतमा निहता वराकी ।
आलिङ्गनोत्सवरसे खलु संप्रवृत्ते
विघ्नोनितान्तमबलाजनदुर्व्विषह्यः ॥ ८९

नाहं मृगोऽस्मि मृगरूपधरस्तपस्वी
क्रीड़ापरः क्षितिप, पुत्रफलाय मृग्याम् ।
अज्ञातमेव हतवानसि मामतस्ते
कश्चिद्भविष्यति न विप्रवधापराधः ॥ ९०

जातो यतोऽसि मम केलिसुखान्तरायः
श्लिष्टस्ततो दयितया भविताऽसि न त्वम् ।
अद्यैवमाकुलहृदा क्षितिपालमागा-
दस्तं भियेव धरणीतलदुर्नयेभ्यः ॥ ९१

प्रत्यग्रशापदलितान्तरलुप्ततेजाः
कीटानुविद्धमणिवन्मलिनच्छविः सन् ।
आवासमेत्य दयिताहितयाय सर्व्वं
म्लानाननो नरपतिः कथयाम्बभूव ॥ ९२

इति चन्द्रवंशे महाकाव्ये पाण्डुशापवर्णनोनाम
सप्तदशः सर्गः ।

——:(०):——

## अष्टादशः सर्गः ।

विसृष्टभृत्यः प्रति राजधानीं
शापान्विताल्ताकुलितान्तरात्मा ।
प्रभातकाले परिलीनतारः
शशीव नैको नृपतिर्दिदीपे ॥ १

मनोज्ञशृङ्गे शतशृङ्गनाम्नो-
गिरेरसौ तापसवृन्दमध्ये ।
कुर्व्वन् तपः कालवशाद्विशालं
ब्रह्मर्षितुल्यः प्रियदर्शनोऽभूत् ॥ २

जायाद्वयान्तर्नरलोकपालः
स चीरवासाः सुतरां रराज ।
शुद्धान्तरो लुप्तरजस्तमस्त्वाद्—
धर्म्मो यथा निर्वृतिशान्तिरम्यः ॥ ३

स शुश्रुवान् प्रेत्य न कोऽपि लोकः
पुण्योऽनपत्यस्य कदाचिदेवम् ।
कथाप्रसङ्गेन महर्षिसंघा—
दतन्तुमात्मानमथो शुशोच ॥ ४

तस्यानुमत्या किल लोकलिप्सोः
कुन्ती मिथः शुद्धतरान्तरात्मा ।
धर्म्मात् सदा धर्म्मरतं वरेण्यं
युधिष्ठिरं नाम सुतं सुषाव ॥ ५

दुर्व्वाससः पूर्व्वमियं महर्षेः
शुश्रूषया लब्धवती प्रतीतात् ।
मन्त्रं स्वतोबुद्धिरचेतनाऽपि
प्राज्ञप्रसङ्गादिव चेतनत्वम् ॥ ६

तस्योग्रवीर्य्यस्य किल प्रभावाद्
यमेव बालाऽऽह्वयति स्म देवम् ।
दुर्म्मोचरज्ज्वेव विकृष्यमाणो–
विलम्बितुं नालमभूत् स एव ॥ ७

पुनर्निदेशाद्दयितस्य साध्वी
सा मारुतात् पुत्रमसूत कान्तम् ।
वृकोदरं भीमपरश्च सेनं
समाख्यया भीमबलं यमाहुः ॥ ८

उत्सङ्गतः प्रस्खलितो जनन्याः
पतन् शिलातुल्यशरीरबन्धः ।
स खल्वतिस्थूलशिलाप्रकाण्डं
सञ्चूर्णयामास नवप्रसूतः ॥ ९

यत्राह्नि जातः स वृकोदरोऽभूत्
मनुष्यलोकेष्वविभाव्यतेजाः ।
दुर्य्योधनोऽप्यार्य्यविगर्हितात्मा
बभूव तत्रैव दिने प्रजातः ॥ १०

आखण्डलान्मण्डलमध्यरत्नं
महीपतीनामहतप्रभावम् ।
दैतेयदेवोरगराक्षसेषु
शस्त्राग्रगण्यं समसूत पुत्रम् ॥ ११

यमर्जुनैः कर्म्मभिरप्रमेयै-
र्न केवलं भूमितलं समस्तम् ।
प्रकाशयिष्यन्तमपि त्रिलोकीं
वदन्ति सन्तोऽर्जुनमेव नाम्ना ॥ १२

मन्त्रप्रभावेन ततोऽपि कुन्त्या-
माद्राश्विनाभ्यां तनयावसूत ।
यावश्विनावेव मनुष्यलोकं
प्राप्तौ जनोऽमन्यत मूर्त्तिमन्तौ ॥ १३

कुले न कोऽप्यस्य समानरूपो-
वदन्ति तस्मान्नकुलाख्यमेकम् ।
सदैव देवप्रवणान्तरत्वात्
समाख्ययाऽन्यं सहदेवमाहुः ॥ १४

ते पाण्डुपुत्राः सममेव सर्व्वै-
र्गुणैरवर्द्धन्त नदीर्घकालात् ।
समुर्व्वरायां निपुणैर्व्विकीर्णा-
बीजव्रजाः खल्वचिरात् फलन्ति ॥ १५

अल्पेन कालेन गुणैरनल्पैः
पञ्चैव तेऽलङ्कृतचारुशीलाः ।
अम्भोजसंघाः सलिलेष्विवास-
न्नयत्नसम्पादितवृद्धिमन्तः ॥ १६

उदारकान्तीनवलोक्य पाण्डु--
स्तान् पाण्डवानन्तरसौ ननन्द ।
नक्षत्रतारानिकरानिवोच्चै-
र्लोकः शरच्चन्द्रमरीचिभिन्नान् ॥ १७

स पारिजातोन्नतरेणुजालै-
र्व्यनं मरुद्भिर्लघुभ्यो विकीर्णैः।
मधूदये माधवतुल्यकान्ति-
र्वनान्तलक्ष्मीरव जगाम माद्र्या॥ १८

मिथोवयःस्थान्तनुवाससक्तां
विलोक्य किञ्चिद्विवृताङ्गलक्ष्मीम्।
क्षणेन कालप्रतिणोदितस्त्वा-
द्विलुप्तधैर्य्यः क्षितिपोबभूव॥ १९

तद्रूपसंप्रेक्षणमात्रजन्मा
मनोभवाग्निर्बधिरदुर्निवारः।
अक्षाणि तस्योन्मथयाञ्चकार
कक्षाणि दावाग्निरिव प्रवृद्धः॥ २०

स ग्राम्यधर्म्मेण बलादिवैना-
मालिङ्गदङ्गैः परिवेपमानाम्।
शिखामिवाग्नेः प्रभया ज्वलन्तीं
यथा पतङ्गः सुखलेशलिप्सुः॥ २१

स पौरवप्राग्र्यहरस्तरस्वी
तया मिथः सङ्गतमात्र एव।
दुर्लङ्घ्यशापाहतचेतनोऽभू-
द्धाधामहत्या विपदेव लोकः॥ २२

ततो गतप्राणनृपालग्ना
प्रश्लिष्टलावण्यगुणावशेषा।
पद्माकरे शुष्कजले निमग्ना
वाह्लीककन्या नलिनीव मग्ना॥ २३

कदाचिदापायितकालकूटं
प्रमाणकोट्यां तमथ प्रसुप्तम् ।
अपातयत् पाशनिबद्धदेहं
दुर्य्योधनो जह्नुसुताजलेषु ॥ ३६

विशन्तमुच्चैः सलिलान्तमेनं
सर्पा दशन्ति स्म महाप्रमाणाः ।
भुजङ्गमानां गरलैर्व्विलीनं
बभूव तस्योल्बणकालकूटम् ॥ ३७

अथ प्रतीतेन भुजङ्गमाना-
मधीश्वरेणानुमतो रसानाम् ।
अष्टौ स कुण्डान्यपिबत् ततोऽभूत्
प्रसिद्धनागायुततुल्यवीर्य्यः ॥ ३८

युधिष्ठिरो धर्म्ममतिस्तु तैस्तै-
रप्यप्रियैस्तत्र न शङ्कितोऽभूत् ।
विशेषतः पश्यति साधुवृत्तः
स्वेनानुमानेन परस्य चित्तम् ॥ ३९

निशम्य भीमस्य मुखान्मनस्वी
क्रूराभिसन्धिं स सुयोधनस्य ।
अवारयद्वारितचापलस्तं
कालप्रयुक्तो हि नयः फलाय ॥ ४०

पाण्डोः सुताः खण्डितदुर्नयास्ते
मते स्थितास्तस्य नयोत्तरस्य ।
प्रमादशून्या विदुरस्य सर्व्वे
सदा स्वरक्षां निभृताः प्रचक्रुः ॥ ४१

भीष्मस्य यत्नादथ तेऽस्त्रविद्या
द्रोणात् प्रवीणाद्लभन्त बालाः।
तडिद्विशेषान्निपुणप्रयोगा—
ज्जड़ाः पदार्था इव दीप्तिमग्र्याम् ॥ ४२

धृतायुधाः पाण्डवकौरवास्ते
बभूवुरत्यन्तमनोज्ञदृश्याः।
वसन्तकालोपनतप्रवाला—
लसत्प्रसूना इव पादपाग्र्याः ॥ ४३

अस्त्रप्रयोगादिविधौ प्रवीणाः
कामं बभूवुः किल सर्व्व एव।
तथापि तेषामधिकोऽर्जुनोऽभूत्
शिलोच्चयानामिव शैलराजः ॥ ४४

पुरन्ध्रिवर्गैः सह पौरमुख्याः
कुरुप्रवीराश्च समुत्सुकास्ते।
अस्त्रप्रयोगादिषु रङ्गभूमौ
नैपुण्यमेषां द्रष्टुः समेताः ॥ ४५

रङ्गं स्फुरन्निर्म्मलसंविधानं
शुक्लाम्बराचार्य्यवरः सपुत्त्रः।
पयोधरास्पृष्टनभःप्रदेशं
समङ्गलो भानुरिवावतीर्णः ॥ ४६

तैः पञ्चभिः पाण्डुसुतैर्महौजा—
रराज गौरोज्ज्वलचारुवेशः।
हस्तेन सम्पूर्णकलाभिरामः
सपञ्चतारेण युतः शशीव ॥ ४७

तस्याज्ञया क्वापि मयुक्तवृत्ते
ततः प्रवृत्ते कुरवो बभूवुः ।
म्लानत्विषः पाण्डुसुतप्रभाभि-
र्विवस्वदंशैरिव ऋक्षसंघाः ॥ ४८

गदामथादाय विचेरतुस्तौ
रङ्गेषु दुर्य्योधनभीमसेनौ ।
चलौ भृशोत्पातिकवातवेगात्
सदेकशृङ्गाविव पर्व्वताग्रौ ॥ ४९

दुर्य्योधने चैव वृकोदरे च
स्नेहाद्विशेषेण च पक्षपातात् ।
समाकुलोत्का जनता तदानीं
द्विधेव भिन्ना परिलक्ष्यते स्म ॥ ५०

गुरोर्निदेशाद्गुरुपुत्रवाक्या-
दुभौ निवृत्तौ गुरुभक्तिमन्तौ ।
शैलात् प्रचण्डानिलसंप्रवृत्तौ
महार्णवस्येव मिथस्तरङ्गौ ॥ ५१

अथोत्थितः काञ्चनवर्म्मधारी
धनुर्धरो गोत्रभिदस्तनूजः ।
तड़िन्मयः सेन्द्रधनुर्व्विशालो-
रराज साक्षादिव वारिवाहः ॥ ५२

अथाविशद्रङ्गभुवोऽन्तरालं
कर्णोऽर्णवस्पर्द्धिगभीरनादः ।
वीरोचितैः प्रक्रमणैर्म्महौजा-
जनैर्मुहुर्व्विस्मितनेत्रदृष्टः ॥ ५३

दुर्य्योधनेनाथ सभाजितोऽसौ
तेनैव सार्द्धं सखितां ययाच ।
सोऽङ्गीचकार, प्रथते समाना—
मङ्गाय तत्साम्पदीनभाव: ॥ ५४

अथाङ्गराज्येष्वभिषिच्य कर्ण—
मयोधयत्तं सह फाल्गुनेन ।
क्षिप्रं तदोत्साकरणाय लोको—
यन्त्रै: समुत्क्षिप्त इवोत्थितोऽभूत् ॥ ५५

तयोर्व्विवादं शमयन्निवोच्चै-
रस्ताचलं भानुरियाय तूर्णम् ।
स्वं स्वं निवेशं प्रययुश्च सर्व्वे
तदाश्रयाश्चारुकथा ब्रुवन्त: ॥ ५६

वैकर्त्तनस्याभवदर्जुनेन
कर्णस्य राधातनयस्य सार्द्धम् ।
स्पर्द्धा विशेषेण निसर्गसिद्धा
सुयोधनस्यापि वृकोदरेण ॥ ५७

परिस्फुरत्कुण्डलवर्म्मधारी
कानीनपुत्र: स हि सम्पायाम् ।
दुर्व्वाससामन्त्रबलोपनीतात्
विकर्त्तनात् पूर्व्वमभूत् पृथायाम्॥ ५८

बालाऽथ कौलीनभिया किलैन—
मवर्ज्जनीयं विससर्ज्ज गूढ़म् ।
वृथा यश:प्रार्थनयाऽऽकुलोऽयं
लोकोह्यकार्य्याणि मिथ: करोति ॥ ५९

सूतेन राधापतिनाऽथ लब्धा
सम्बर्द्धितः कुण्डलवर्म्म दिव्यम् ।
इन्द्राय सूनोर्हितलिप्सवेऽदात्
स विप्ररूपाय दयाप्रवीरः ॥ ६०

आखण्डलादप्यवदानतुष्टात्
शक्तिं किलैकप्रतिघातिनीं सः ।
लेभे, सतां प्रत्युपकारजालैः
सद्यः फलत्येव कृतोपकारः ॥ ६१

पाञ्चालराजं द्रुपदं विजित्य
पुरीमहिच्छत्रपदाभिधेयाम् ।
द्रोणाय पार्थो गुरवे दिदेश
वीरप्रवीरो गुरुदक्षिणार्थम् ॥ ६२

अथाम्बिकेयः परिलम्बबाहुं
युधिष्ठिरं पौरजनप्रतिष्ठम् ।
अग्राहयत् प्रायहरं कुरूणां
योग्योपचारं युवराजशब्दम् ॥ ६३

दुर्य्योधनः पाण्डवकीर्त्तिमग्रां
प्रजानुरागञ्च निशम्य तेषाम् ।
अतप्यतान्तः प्रकृतिः खलानां
निसर्गतोऽन्यगुणासहिष्णुः ॥ ६४

क्रूरैः स दुर्य्योधनसौबलाद्यैः
क्रूरान्तरात्मा परिणोदितः सन् ।
पापं महत् कर्तुमियेष मूढः
पाण्डोः सुतेष्वन्धनृपोऽतिगूढम् ॥ ६५

स वारणापूर्व्ववतं क्षितीशः
पुरं वृथावर्णितगौरवाख्यम्।
प्रस्थापयामास युधिष्ठिरादीन्
कुन्तीसमेतान्मुदितान्तरात्मा॥ ६६

दुर्य्योधनो रासभवाह्ययानैः
पुरोचनं तत्र विसृज्य पूर्व्वम्।
लाक्षादिभिर्वस्तुभिरग्निदाह्यै—
र्निर्म्मापयामास मनोज्ञहर्म्यम्॥ ६७

युधिष्ठिरं प्रस्थितमप्रमत्त-
स्तत् सर्व्वमाख्यद्विदुरो महात्मा।
म्लेच्छस्य वाचं परिगृह्य वाग्मी
दुश्चेष्टितं खल्वपि कौरवाणाम्॥ ६८

आकारमात्रेण बुबोध तेषां
मन्त्रं किल प्रस्तुतबुद्धिरेषः।
नभस्तलस्थानपि निर्णयन्ते
धियैव लोकाः खलु खेचरादीन्॥ ६९

ऊर्म्मिक्षमां यन्त्रवतीं स नावं
पताकिनीं वातसहां दृढाञ्च।
ररक्ष तेषां परिरक्षणार्थं
वप्रे विधायाशु विधानदक्षः॥ ७०

गत्वाऽथ ते तन्नगरं वरार्हाः
पुरोचनस्यैव वचःक्रमेण।
मनोज्ञलाक्षानिलयं प्रविष्टाः
कैलासशैलविलासवासन्॥ ७१

युधिष्ठिरो भ्रातृभिरप्रमत्तः
शिल्पेष्वभिज्ञैर्विदुरप्रदिष्टैः ।
गूढ़ान्तमत्यन्तविगाढ़बुद्धि—
रकारयज्जातुबिलं गृहान्तः ॥ ७२

कालप्रदिष्टां किल तत्र रात्रौ
निषादपत्नीमथ पञ्चपुत्राम् ।
वीक्ष्य प्रसुप्तां परिदीप्य गेहं
बिलेन निश्चक्रमुरेव सर्व्वे ॥ ७३

हुताशनेनैव निशि प्रदग्धं
सप्रत्यभिज्ञानमथो निशम्य ।
विपक्षसंघं क्षपितोरुदुःखा-
दुर्य्योधनाद्या मुदमापुरुच्चैः ॥ ७४

हिंस्रैः परीतामटवीं प्रविष्टाः
पदेपदे शङ्कितचेतसस्ते ।
क्लेशाकुलाः पाण्डुकुलावतंसाः
प्रतस्थिरे दक्षिणदिग्विभागम् ॥ ७५

नावं समारुह्य सुरापगायाः
ते प्राप्य पारं विदुरप्रदिष्टाम् ।
सुयोधनस्येव मनोऽतिघोरं
पुनर्व्विशन्ति स्म महावनान्तम् ॥ ७६

हिड़िम्बनाम्ना ददृशेऽथ रक्षो-
दंष्ट्राकरालं परिपिङ्गलाक्षम् ।
लसद्बलाकं चपलासमेतं
प्रावृड़्विशालाभ्रमिवातिनीलम् ॥ ७७

प्रलयग्रहीत्तं किल भीमसेनो-
महाबलं बाहुबलाप्रमेयः।
अपि प्रकाण्डं सजलाभ्रजालं
विक्षोभयत्युल्वणमातरिश्वा ॥ ७८

वीरावुभौ भूमितले लुठन्तौ
रजःसमाच्छन्नबृहच्छरीरौ ।
नीहारजालैर्निचिताविवोच्चैः
शिलोच्चयौ प्रापतुरग्रशोभाम् ॥ ७९

भीमस्तमाक्रम्य खरोनभस्वान्
वनस्पतिव्रातमिव प्रमथ्य ।
भेजे हिड़िम्बां किल तत्स्वसारं
गुरूपदेशात् परिकामयन्तीम् ॥ ८०

तस्याममुष्यात्मभवोऽथ वीरो-
घटोत्कचोनाम मदोत्कटोऽभूत् ।
तैरुत्तरामेव दिशं विसृष्टा-
वगच्छतां तौ समयं विधाय ॥ ८१

सर्व्वे जटावल्कलधारिणस्ते
तपस्विलोकोचितसंविधानाः ।
निरीक्षमाणा रमणीयदेशान्
जग्मुः पतङ्गोपचितान् वनान्तान् ॥ ८२

व्यासोपदेशात् पुरमेकचक्रां
प्रविश्य विप्रस्य गृहेऽवसंस्ते ।
युगान्तकाले पुरुषस्य कुक्षौ
गूढं जगन्तीव यथाऽवकाशम् ॥ ८३

उपांशु भीमोऽथ गुरोर्निदेशा—
द्बकं बली राक्षसमप्रमत्तः ।
जघान कृत्वा रुधिरोक्षिताङ्गं
व्याप्तं पलाशैरिव काननान्तम् ॥ ८४

आपृच्छ्य विप्रं विनयावनम्राः
प्रतस्थिरे स्थास्नुयशोऽवदाताः ।
ते पञ्च काले किल मातृषष्ठाः
पाञ्चालदेशम्प्रति सम्प्रतिष्ठम् ।। ८५

मध्यं ततश्चित्ररथेन जात-
मङ्गारपर्णे विपिनेऽर्जुनस्य ।
तस्योपदेशादथ धौम्यमेते
पुरोहितञ्चक्रुरुपक्रमज्ञाः ।। ८६

पाञ्चालदेशाधिपतेः सुतायाः
स्वयंवरं लोकमुखान्निशम्य ।
तत्रैव कृष्णापरिदर्शनोत्का—
स्ते राजमार्गाश्रयिणः प्रजग्मुः ॥ ८७

तत्रार्जुनश्चापवरं प्रगृह्य
विधाय सज्यं निशितैः पृषत्कैः ।
सन्देहजालैः सममेव लक्ष्यं
संसज्जनानां तुमुलैर्बिभेद ॥ ८८

पाञ्चालपुत्री परिविद्धलक्ष्यं
विक्षोभितान्तःकरणं नृपाणाम् ।
परिस्फुरन्मङ्गलपुष्पमय्या
न्ययोजयत् संवरणस्रजैनम् ॥ ८९

शैलात् परं शैलमिव स्रवन्ती
ह्रदादिवान्यं नलिनी ह्रदान्तम् ।
दीपान्तरं दीपशिखेव बाला
कुलान्तरं साऽपि कुलात् प्रपेदे ॥ ८०

महीभृतां गोत्रभिदः सुतस्य
स्त्रीरत्नलाभव्यथितान्तराणाम् ।
अधिज्यधन्वा स रणोत्सुकत्वं
शरोत्करैरन्तरयाञ्चकार ॥ ८१

अलोकसामान्यगुणोपपन्नां
व्यासस्य कृष्णस्य च शासनेन ।
पञ्चैव पाण्डोस्तनयाः क्रमेण
पाञ्चालकन्यां परिणिन्युरेते ॥ ८२

सा पाण्डवात् पाण्डवमाश्रयन्ती
घनाद्घनं विद्युदिवासितश्रीः ।
कलिन्दकन्योर्म्मिरिव स्फुरन्ती
पद्मान्तरं तामरसाद्बभासे ॥ ८३

नीलाश्मजालं द्रुपदस्य वेश्म
रत्नावलीभिः खचितान्तरालात् ।
आसीद्विशेषद्युतिमत्तदानीं
नभो यथा निर्म्मलतारकाभिः ॥ ८४

अत्यन्तमासीन्मुदितान्तरात्मा
स पाण्डवेभ्यो विधिवत् प्रदाय ।
कन्याललामोज्ज्वलरत्नजालं
न्यस्तं पुरस्तादिव तत्प्रभुभ्यः ॥ ८५

दग्धान् पुरा पाण्डुसुतान्निशम्य
पाञ्चालराजेन च पुनः प्रवृद्धान् ।
तेषु स्थिरस्नेहरसोत्तरा येऽ-
मन्यन्त तांस्ते पुनरेव जातान् ॥ ९६

अजातपक्षाः शिशवः पुरान्त—
र्ये बाधितुं नैव पुराऽपि शक्याः ।
दूरप्रवृद्धा प्रवजातपक्षा-
नोपायसाध्याः किल पाण्डवास्ते ॥ ९७

इत्यात्मनो मन्त्रिभिरात्मवद्भिः
शिष्टः परित्यज्य मलाभिसन्धिम् ।
अन्धोनृपः चालयितुं प्रवृत्तः
पुरोचनोत्थं समभूदवर्णम् ॥ ९८ युग्मकम् ।

क्षत्ताऽऽनयत् स क्षतकल्मषांस्ता—
नुदारतेजःक्षपितारिपक्षान् ।
निरीक्षणीयान् सकलः क्षपेशा-
दिनात्ययेनेव विवस्वदस्तान् ॥ ९९

राज्यार्द्धमिन्द्रावरजाश्रितेभ्यो-
महेन्द्रतुल्योजितवीर्य्यवद्भ्यः ।
स पाण्डवेभ्यः प्रददौ धृतात्मा
सभाजनं मूर्त्तमिवामरेभ्यः ॥ १००

ते खाण्डवप्रस्थमथ प्रविष्टा-
नृपाज्ञया तत्र पुरीमुदाराम् ।
चक्रुर्हरिप्रस्थपदाभिधेयां
पुरं हरेरप्यनिशं हसन्तीम् ॥ १०१

निर्म्माणविद्भिः कृतहर्म्यसंघै-
र्व्विचित्रवर्णैः परिकीर्णमेतत् ।
इलावृतं चारुशिलोच्चयेन्द्रै-
रुच्चावचैर्व्योमसिवाबभासे ॥ १०२

पाञ्चालीतरलदृशं मिथः पिबन्त-
मस्माकं कमपि सुखोपविष्टमेकम् ।
अन्यश्चेत् कथमपि लोकयत्यकस्मा-
त्तद्भूयाद्विपिनचरो द्विषट्कवर्षम् ॥ १०३

इत्यन्योन्यं समयमथ ते नारदस्योपदेशा-
च्छेदाशङ्काऽऽकुलितमनसश्चक्रुरत्युन्नतेच्छाः ।
केचिद्विप्राः कपटरुचयः सम्भवन्त्यप्यकाण्डे
भिन्नाः सन्तोऽप्युदितकरुणा निर्व्यलीका भिलन्ति ॥ १०४
युग्मकम् ।

इति चन्द्रवंशे महाकाव्ये पाण्डवराज्यार्द्धलाभो नाम
अष्टादशः सर्गः ॥

---

# एकोनविंशः सर्गः ।

कृष्णा बभौ तैर्गजयूथनाथैः
सरस्वतीतीरवनस्थलीव ।
लक्ष्मीरिव साक्षाद्द्रुपदस्य पुत्री
तथैव नागाः कुरवोऽपि रेजुः ॥ १

उद्दिश्य गां तस्करकाश्यमाना—
मादिश्य राजानमभ्यर्थमानः ।
द्वारि स्थितः कश्चिदथाग्रजन्मा
चक्रन्द संक्रन्दनजोपकण्ठे ॥ २

तस्योत्तमस्योत्तमगोधनस्य द्-
ध्वाङ्क्षैरिवाग्र्यं हविरध्वरस्य ।
चौरैरकस्मात् परिभूयमाणं
न चक्षमे क्षत्रकुलप्रदीपः ॥ ३

कृष्णासनाथेन युधिष्ठिरेणा-
प्यधिष्ठितं शस्त्रगृहं प्रविश्य ।
विद्राव्य सर्व्वानथ तस्करांस्तान्
प्रत्यानयद्गोधनमस्य पार्थः ॥ ४

कुरुप्रवीरेण सुरेन्द्रसूनु-
र्निवार्य्यमाणोऽप्यटवीं जगाम ।
परानुरोधादिभिरन्तराये-
र्न लङ्घ्यते शीलवतां प्रतिज्ञा ॥ ५

भागीरथीद्वारमुपेत्य वासं
कुर्व्वन्नुलुप्या सह सङ्गतोऽभूत्।
जले निमज्जन् किलनागलोक-
मनङ्गबाणाकुलया स नीतः॥ ६

गत्वा वशी हैमवतं स पार्श्वं
जटाधरोऽगस्त्यवटं प्रपद्य।
शैलं वशिष्ठस्य च तुङ्गनाथे
गाः कोटिशो ब्राह्मणसाच्चकार॥ ७

आप्लुत्य तोयेषु हिरण्यबिन्दो-
रम्यां नदीमुत्पलिनीं वगाह्य।
स नैमिषारण्यमतीत्य नन्दा-
मियाय भूयोऽप्यपरादिनन्दाम्॥ ८

महानदीं प्राप्य ततोऽपि गङ्गा-
मङ्गांस्तथा वङ्गकलिङ्गदेशान्।
व्यलोकयल्लोचनलोभनीयं
महेन्द्रशैलं स महेन्द्रसूनुः॥ ९

समुद्रतीरेण शनैस्तरस्वी
पुरं प्रपेदे मणिशब्दपूर्व्वम्।
पुत्रीञ्च चित्रादिकवाहनस्य
चित्राङ्गदां पुत्रिकयोपयेमे॥ १०

स वाहनाख्यं किलबभ्रुमस्यां
सुतं समुत्पाद्य भृशप्रतीतः।
हयाधिकाम्तत्र समामुषित्वा
सर्व्वान् समापृच्छ्य ततः प्रतस्थे॥ ११

तीर्थान्यथागस्त्यमुखानि पञ्च
विशोध्य पञ्चाप्सरसः स्वरूपम्।
प्रापय्य शापेन जलेचरत्वं
गताः स गोकर्णमथाभ्यगच्छत् ॥ १२

पुण्यानि तीर्थान्यपरान्तदेश-
स्थितानि सर्व्वाण्यभिगम्य पार्थः।
प्राप्तः प्रभासं सहसैव यस्मिन्
सखायमेनं मधुसूदनोऽगात् ॥ १३

कालं कियन्तं किल रैवताख्ये
विहृत्य शैले सह माधवेन।
स द्वारकां नाम पुरीमुदारा-
मलङ्कृतां शिल्पिभिरध्युवास ॥ १४

शैलोत्सवेऽसौ तुमुले प्रवृत्ते
लोकेषु तद्भोगपरायणेषु।
कृष्णोपदेशादथ तत्स्वसारं
भद्रां बलाद्भद्रमतिर्जहार ॥ १५

पार्थाय संरम्भमितस्तु कृष्णो-
वृष्ण्यन्धकानां शमयाम्बभूव।
वाग्भिः शशाङ्कः स्वगताभिरङ्गि-
र्भानोः कराणामिव तिग्मभावम् ॥ १६

आनीय पार्थं विनयेन पश्चा-
त्ते कारयामासुरपोढरोषाः।
भद्रोपयामं चपितारिभद्राः
समक्षमुच्चैर्ज्ज्वलनस्य सर्व्वे ॥ १७

अपाः अपेश प्रतिमः प्रतीतः
संवत्सरादप्यधिकाः स तत्र।
तयोत्पलाक्ष्या विहरन्नुवास
लक्ष्म्येव दुग्धाम्बुनिधावनन्तः॥ १८

तस्मात्ततः पुष्करमेत्य वीरः
कालावशेषं क्षपयाञ्चकार।
सुखोचितः सोऽतिसुखेन तस्या—
मुखारविन्दे भ्रमरः प्रियायाः॥ १८

शुभे मुहूर्त्ते स पवित्रकीर्त्ति-
स्तया समारुह्य रथं पृथुश्रीः।
नवाम्बुवाहस्तड़िता समेतः
साक्षान्नभस्वन्तमिव प्रतस्थे॥ २०

ऐन्द्रिर्हरिप्रस्थमथप्रविष्ट-
स्तया समं रत्नमरीचिशोभम्।
नक्षत्रतारोपचितान्तरीक्षं
सरोहिणीकः स शशीव रेजे॥ २१

पुलोमजेन्द्रादिव वैजयन्त—
मुपक्रमात् कान्तफलं क्रियेव।
आराधनादुबुद्धिरिव प्रसादं
प्राप्नादिवादिः प्रकृतिर्महान्तम्॥ २२

चूतं मधोश्चूतलतेव रम्यं
भद्रा कुमारं समसूत पार्थात्।
जन्ये परेषामुपरोधयोग्यं
नाम्ना यमुच्चैरभिमन्युमाहुः॥ २३ युग्मकम्।

अरिन्दमः पादचतुष्टयाढ्यं
कृत्स्नं धनुर्वेदमविन्दतासौ ।
आदानसन्धानविमोचणादि-
दशप्रकारं पितुरेव वीरः ॥ २३

पाञ्चालकन्याऽपि सुषाव सूनुं
युधिष्ठिरादयं प्रतिविन्ध्यमाद्युः ।
वृकोदरादप्यतिसोमकान्तं
पद्मायताक्षं सुतपूर्व्वसोमम् ॥ २५

धनञ्जयाच्च श्रुतशब्दपूर्व्वं
कर्म्माणमन्यं नकुलाच्च वाला ।
नाम्ना शतानीक इति प्रसिद्ध—
मसूत शेषात् श्रुतसेनमेव ॥ २६

सर्व्वेऽप्यमी पाण्डुकुलावतंसा-
वालार्कवत् प्रोज्ज्वलचारुदेहाः ।
धनञ्जयादेव धनुःसु शिक्षाम्
अक्षोभितान्तःकरणाः समापुः ॥ २७

निदाघकाले रमणीयतायाः
पराङ्गरूपे मधुसूदनेन ।
बलारिपुत्रस्य कलिन्दकन्या-
तीरे विलासः समसुल्ललास ॥ २८

आखण्डलेनाथ सुरक्षितस्य
दाहानुकूल्यं किल खाण्डवस्य ।
आगत्य पार्थं समयेन बद्ध्वा
द्विजस्वरूपी दहनो ययाचे ॥ २९

असाध्यमभ्यर्थ्यत सर्व्वलोक-
रक्षाय तत् प्रत्यपदत्तरस्वी।
अत्युन्नतेच्छाः प्रणयापघात
साढुं क्षमन्ते न हि याचकस्य॥ ३०

अग्निप्रसादाद्वरुणात् स लेभे
गाण्डीवमाखण्डलचापतुल्यम्।
अक्षय्यतूणी परिपाण्डराश्वैः
कपिध्वजं स्यन्दनमप्युपेतम्॥ ३१

अलाकलभैः स महायुधाद्यै-
रलंकृतः प्रोज्ज्वलवर्म्मधारी।
भाम्ना दिदीपे किरणैरिवाश्वैः
शुचौ शुचिर्ब्बोधसमो विवस्वान्॥ ३२

तस्यानुमत्या ज्वलनस्तदानीं
ददाह तद्दावमभिप्रदीप्तः।
युगान्तकालोचितभीमतेजाः
समं समन्ताभिरितः शिखाभिः॥ ३३

प्रदह्यमानो विपुलः स दावो-
ज्वालाभिरुच्चैर्ज्ज्वलनस्य दीप्तः।
भूयिष्ठरम्यः किल बालभानो-
र्व्याप्तः करैर्मेरुरिवावभासे॥ ३४

स घोरघोषस्य जीवातिरेका
द्विशेषतः सर्व्वतोऽनलस्य।
स्रवत्पतङ्गस्खलपादपाग्रो-
भियेव चक्रन्द तथा चकम्पे॥ ३५

तदाश्रयो यो निचयः पशूनां
व्यदह्यताचैदहनेन सोऽपि ।
धनुर्धराभ्यामभितःक्रमाभ्यां
निवार्य्यमाणोऽर्जुनकेशवाभ्याम् ॥ ३६

अभ्याहतानां निशितैः पृषत्कै-
र्व्वनौकसां प्रज्वलितस्य चाग्नेः ।
घोरो विरावः परितः श्रुतोऽभूत्
प्रमथ्यमानस्य यथाऽर्णवस्य ॥ ३७

नीहारजालैरिव सायकैः खे—
राच्छाद्य तत् खाण्डवमप्रमेयम् ।
आखण्डलादीनमरान्निरास्थ-
द्गाण्डीवधन्वा सृजतः शरौघान् ॥ ३८

मन्दोतरन्मन्दरशैलशृङ्गं
महेन्द्रमुक्तं निचितं द्रुमौघैः ।
स खण्डयामास शरैरनेकैः
सहस्रशः प्रज्वलिताग्रभागैः ॥ ३९

तथागतं तच्च विदार्य्यमाणं
नक्षत्रताराग्रहचन्द्रसूर्य्यैः ।
सहैव सर्व्वैर्व्वहुशो बभासे
व्योमेव साक्षात् परिशीर्य्यमाणम् ॥ ४०

विदारिताः पार्थशिलीमुखाग्रै-
र्दैत्याः समन्ताद्रुधिरप्लुताङ्गाः ।
शैलाइव प्रचुरतगैरिकाक्ता-
दिवावसानाभ्रचया इवासन् ॥ ४१

सुतोष वीर्य्येण सुरैर्विड़ौजाः
पार्थस्य देवाभिभवक्रमेण।
गुणाः परेषामकृतात्मनां ये
मत्योपमास्ते महतां प्रियार्हाः॥ ४२

वातः पयोदानिव देवसंघान्
विद्राव्य पार्थौ द्विषतां निहन्ता।
जघान सर्व्वानसुरान् शरौघै-
र्मयं विना तच्छरणप्रपन्नम्॥ ४३

अथावदानान्मुदिताशयस्य
विशेषतो हव्यभुजः प्रसादात्।
तस्मात् प्रभृत्येव गतव्यलीकं
सुसूत्रं कृष्णार्जुनयोः सखित्वम्॥ ४४

मयोऽपि निर्म्माणविधिप्रवीणो-
विनिर्म्ममे निर्म्मलचारुलक्ष्मीम्।
सभामुदारां किल पाण्डवानां
प्रतिप्रियं स्वल्पमलं चिकीर्षुः॥ ४५

परिज्वलन्तीमपि चारुकान्त्या
सुखोत्तरस्पर्शवतीं मनोज्ञाम्।
गुणैर्हसन्तीं ज्वलनस्य लक्ष्मीम्
मालामिवोच्चैस्तड़िताभकाम्याम्॥ ४६

नवाब्दराजीमिव दिव्यरूपां
सभां परां निर्म्मितिमप्रमेयाम्।
विड़ौजसोऽप्याशु विड़म्बयन्ती—
महेश्वरश्चःकुलरत्नमाणाम्॥ ४७ विशेषकम्।

मुक्ताफलै रत्नकुलैरनर्घ्यै-
र्मध्येसभं रम्यसरोऽपि चक्रे ।
स्वच्छोदकत्वान्मुहुरीक्ष्यमाण—
मपि स्थलभ्रान्तिकरं नराणाम् ॥ ४८

स देवदत्तं प्रददौ महार्हं
पार्थाय वीरप्रवराय शङ्खम् ।
अरातिपक्षक्षपणैकदक्षां
गदामुदाराञ्च वृकोदराय ॥ ४९

आहर्त्तुकामः किल राजसूयं
महाक्रतुं धर्म्मसुतोऽनुजातम् ।
प्रस्थापयामास वधाय पूर्व्वं
दाशार्हवाक्यान्मगधेश्वरस्य ॥ ५०

कृष्णार्जुनाभ्यां सहितोऽथ भीमो-
रणे जरासन्धमुदारवीर्य्यम् ।
विदारयामास बली विशालं
शिलोच्चयं वज्रइव क्षणेन ॥ ५१

निष्पाद्य तस्याशु वधं समेता-
स्त्रयोऽग्नयो यज्ञमिवान्तरज्ञाः ।
विमोचयामासुरशेषतस्ते
महीक्षितस्तेन पुरा निबद्धान् ॥ ५२

वीरान् हरिप्रस्थमथ प्रविष्टान्
हृष्टान् प्रजाभिर्हि गुणादरेण ।
युधिष्ठिरो हर्षजवाष्पजालै—
रासिच्य मौलिष्वनुजिघ्रति स्म ॥ ५३

सौम्यां दिशं वज्रधरात्मजातो-
भीमश्च पूर्व्वां सहपूर्व्वदेवः।
याम्यान्तरस्थो नकुलः प्रतीचो-
न्तदाशया जेतुमनाः प्रतस्थे ॥ ५४

पार्थः कुलिन्दानथ कालकूटा-
नानर्त्तदेशेष्वपि भूमिपालान्।
शरेण चक्रे परिहीणकान्तीन्
ग्रहानिवास्त्रेण सहस्ररश्मिः ॥ ५५

द्वीपं बली शाकलनामधेयं
शिलीमुखैः श्लाघ्यतमं विजित्य।
उच्चाभिलाषं प्रतिविन्ध्यमुच्चै—
र्वन्ध्यप्रयत्नं समरे चकार ॥ ५६

विनिर्जितैर्वीर्य्यवतां पुरोगै-
राजन्यवर्गैः सममर्जुनोऽथ।
प्राग्ज्योतिषं देशमसौ वरौजा-
रुरोध रोधःस्थितवाहिनीकः ॥ ५७

तं चीनदेशैरथ सागरस्य
तीरस्थितैर्योद्‌धृभिरुग्रवीर्य्यैः।
जग्राह राजा भगदत्तनामा
दैत्यैरिवेन्द्रं दितिजाधिनाथः ॥ ५८

अस्त्रैः समाच्छन्नविवस्वदस्र-
मलक्ष्यमाणक्षणदाव्यपायम्।
नक्षत्रकल्पेषुपरिप्रकाश-
न्तयोः समीकन्तुमुलं बभूव ॥ ५९

पार्थस्य वीर्य्यातिशयेन तुष्टः
सन्धाय तस्मै स करप्रदोऽभूत् ।
सर्व्वैरुपायैरपि दुष्करं यत्
करोति तच्चारुगुणानुरागः ॥ ६०

अन्तर्गिरश्चैव वहिर्गिरश्च
जयी तथैवोपगिरं समस्तम् ।
उलूकराजश्च बलातिरेका-
च्चक्रे शरैरेव पराजितं सः ॥ ६१

सेनादिविन्दुं निजसेनयाऽसौ
सिंहासनाच्च्यावयति स्म पार्थः ।
दिव्याद्विमानादिव पुण्यवन्तं
फलापवर्गः किल दुर्निवारः ॥ ६२

तेजस्विनस्तस्य महोच्छ्रितोऽन्यान्
सैन्याधिनाथस्तरसा निरास्थत् ।
अपुष्णरश्मेः प्रतिबिम्बमात्रं
प्रभाविशेषेण दुनोति चक्षुः ॥ ६३

भियेव मोदापुरवामदेव-
सुदामराजन्यगणाः समस्ताः ।
अपुत्तरोलूकधराधिपालाः
करैस्तदाराधनमभ्यकार्षुः ॥ ६४

स विश्वगश्वं सह पर्व्वतीयै-
र्योधैस्तदीयैस्तरसा विजित्य ।
सङ्केतकानुत्सवशब्दपूर्व्वा-
नुत्सारयामास विलुप्तशङ्कः ॥ ६५

काश्मीरकादाय करं गृहीत्वा
पलाशमुच्चैरिव फुल्लपुष्पम् ।
स लोहितं लोहितरक्तदेहं
देहातिगैस्तिग्मशरैश्चकार ॥ ६६

पुरी मनोज्ञा न चिरादिवास्य
वशे स्थिताऽभूदभिसारिकेव ।
अलंकृता काञ्चनरत्नजालैः
पार्थस्य नाम्नाऽप्यभिसारिकैव ॥ ६७

सिंहोपमः सिंहपुरं विलोड्य
प्रमथ्य सुह्मानथ वाह्लिकांश्च ।
काम्बोजकान् पश्चिमशब्दपूर्व्वान्
सौम्यानृषीकान् मिलितान् बिभेद ॥ ६८

रणे ऋषीकाः कृतहस्तमुक्तै-
र्महौजसस्तस्य शरैर्निरस्ताः ।
शुकोदराभानथ वाजिमुख्या—
नुपायनीचक्रुरपायविज्ञाः ॥ ६९

ततः स निष्कूटगिरिं शरौघै—
र्हिमालयञ्चाप्यनलैः प्रताप्य ।
निवेशयामास विशालसुखै—
रप्यर्थतः श्वेतगिरौ बलौघम् ॥ ७०

देशन्ततः किम्पुरुषाभिधानं
नाराचवर्षैः स्ववशे चकार ।
स गुह्यकैर्हाटकमुत्कटास्त्रै—
रधिष्ठितं हाटकपूरितञ्च ॥ ७१

तन्मानसं नाम सरः परस्तात्
स्वच्छं मुनीनामिव मानसं सः ।
आप्लुत्य तावन्नविमानमाप्तो—
मलात्ययान्निर्मलमानसोऽभूत् ॥ ७२

करं प्रगृह्योत्तरशब्दपूर्व्वा—
द्धरेस्तनूजो हरिवर्षतोऽपि ।
विद्राव्य दस्यून् द्रविणातिपूर्ण—
स्ततो हरिप्रस्थमसौ प्रतस्थे ॥ ७३

भीमोऽप्युपायैः स्ववशे वशित्वात्
पाञ्चालदेशाधिपतीन् विधाय ।
निगृह्य दण्डैरथ गण्डकोशान्
शरैर्विदेहानकरोद्विदेहान् ॥ ७४

बाणैर्दशार्हान्नृपलब्धवर्ण—
स्ततोऽश्वमेधेश्वररोचमानम् ।
निगृह्य साम्ना शिशुपालमुख्यै—
श्चेदिप्रभुं संग्रहयाञ्चकार ॥ ७५

करं कुमारेश्वरतोऽथ लब्ध्वा
कोटालपालाच्च बृहद्बलाख्यात् ।
युद्धेष्वयोध्याधिपतिं निगृह्य
वशेऽकरोदुत्तरकोशलान् सः ॥ ७६

भल्लेन मल्लाधिपतिं प्रमथ्य
जलोद्भवान् पार्श्वगतान् हिमाद्रेः ।
भल्लाटदेशं तरसा विजित्य
मनोज्ञशैलञ्च स शक्तिमन्तम् ॥ ७७

अशक्नुवन् सोढुमुदूढवीर्य्यः
पराक्रमं विक्रमशोभिनोऽस्य।
ररक्ष राज्यं प्रणतो हतारिः
सुपार्श्वदेशाधिपतिः कथोऽपि ॥ ७८

विनीय मत्स्यान् मलदांश्च सर्व्वान्
ततोऽधिचक्रे पशुभूमिमेषः।
महीप्रमाणां महधारसंज्ञं
प्रशाह्वयामास च सोमधेयान् ॥ ७९

यामेशन शैलं किल भोगवन्तं
निरुह्य मल्लाननलोग्रतेजाः।
सवर्म्मकानुज्ज्वलवर्म्मधारी
शिलीमुखैर्म्मर्म्मणि सञ्जघान ॥ ८०

ततः शकानामथ वर्व्वराणां
गर्व्वं निकृत्यौर्व्व इवाम्भसां सः।
आनम्य भूपान् निकषेन्द्रशैलं
सुह्मप्रसुह्मानजयत् पृषत्कैः ॥ ८१

भेदोगिरिस्थानथ भूमिपालान्
तीरद्रुमान् स्रोत इव स्रवन्त्याः।
समूलमुन्मूल्य बलातिरेकात्
पाण्डोः सुतः पुण्ड्रपतिं व्यजैषीत् ॥ ८२

स कौशिकीकच्छगमच्छवर्णो–
महौजसं नाम नृपं महौजाः।
आजौ विनिर्जित्य समुज्ज्वलश्री–
र्वपादवदङ्गपतिं बलौघैः ॥ ८३

समुद्रसेनं विनिगृह्य वीरः
स चन्द्रसेनञ्च सताम्रलिप्तम् ।
उर्व्वीपतीनामथ कर्व्वटेशं
निर्व्वापयामास विशेषदृप्तम् ॥ ८४

स सागरावासविलुप्तशङ्कान्
नौसाधनान् म्लेच्छगणान् विजित्य ।
उपात्तमुक्ताफलशोभमानो—
लौहित्यदेशांस्तरसा प्रपेदे ॥ ८५

तीरे समुद्रस्य जलप्रधान-
देशेषु सेनां महतीं स कर्षन् ।
म्लेच्छाधिपालान् सकलान्निगृह्य
बलिं समादाय बली निवृत्तः ॥ ८६

तथैव देवः सहशब्दपूर्व्वः
पूर्व्वं विजिग्ये किल शूरसेनान् ।
मत्सेश्वरं चक्रधरोपमेयः
पराक्रमेणैव च दन्तवक्रम् ॥ ८७

उत्खाय भूयोऽपि फलाप्तयेऽसौ
न्यवेशयत्तं निजराज्यएव ।
कृष्टस्थले शालितरुप्रकाण्डं
कृषीवलो बालमिवामलौजाः ॥ ८८

विनीय वीरः सुकुमारवीर्य्यं
नाम्ना यमाहुः सुकुमारमेव ।
मैत्र्या सुमित्रं निरमित्रकारी
संगृह्य मत्स्यानपरानजैषीत् ॥ ८९

प्रक्षाल्य चोलान् स निषादभूमिं
गोशृङ्गसंज्ञञ्च विजित्य शैलम् ।
निर्जित्य राष्ट्रं नवशब्दपूर्व्वं
चर्म्मण्वतीकूलमगाद्बलौघैः ॥ ८०

विधाय निघ्नं चितिपं तदीयं
सेकांस्तथैवापरपूर्व्वसेकान् ।
निगृह्य रत्नानि ततो गृहीत्वा
वीरः स रेवामभितो जगाम ॥ ८१

विन्दानुविन्दावुदितौ पुरस्ता—
दावन्त्यभूपौ क्रमशस्तरस्वी ।
चकार तेजोभिरसौ विहीनौ
सन्ध्योदयः कालइवेन्दुसूर्य्यौ ॥ ८२

पुरन्ततो भोजकटाभिधानं
स कोशलेशञ्च बली निगृह्य ।
वेणातटस्याधिपमुग्रवीर्य्यं
कान्तारकादींश्च शरैर्निरास्यत् ॥ ८३

ग्रामं स मुञ्जं श्रितमस्त्रपुञ्जै-
र्मौर्व्वीगुणास्फालनलुप्तवीर्य्यम् ।
बली पुलिन्दानरविन्दवक्त्रो-
व्यदण्डयत् पाण्ड्यमपि चितीशम् ॥ ८४

स दक्षिणामेत्य रथी पथास्तां
दक्षोरणेष्वप्यतिदक्षिणात्मा ।
किष्किन्ध्ययोधैर्गुहया समेतां
गुहोपमोऽग्राहयदग्रजाज्ञाम् ॥ ८५

माहिष्मतीं नाम पुरीं प्रपन्नो-
नीलेन वीरो बलिना बलीयान् ।
भयङ्करं भीरुजनस्य जन्यं
प्रवर्त्तयामास विकर्त्तनौजाः ॥ ९६

ज्वालाकरालोऽग्निरथातिकोपा-
ज्जज्वाल सैन्ये नकुलानुजस्य ।
सदैव नीलस्य मृधे सहायो-
दवेषु दावाग्निरिव प्रवृद्धः ॥ ९७

विशेषलावण्यगुणोपपन्ना-
मलोकसामान्यमनोज्ञरूपाम् ।
नीलस्य कन्यां किल कामयान-
स्तस्यानुकूल्यं स युधि प्रपेदे ॥ ९८

रथाश्वनागोच्चयपत्तिसंघा
वरूथिनी तस्य रुचाऽवलीढ़ा ।
आरञ्जितोच्चैस्तरुणार्ककान्त्या
सशैलदावेव मही बभासे ॥ ९९

सुदुःसहाद्धव्यभुजः प्रकोपा-
दनन्यकार्य्योपशमात् स भीतः ।
युगान्तकालोचितघोरवाताद्-
यथाऽतिसारोऽप्यचलश्चकम्पे ॥ १००

तुष्टाव चैनं शुचिरुग्रवीर्य्यं
माद्रीसुतः पावकमुज्झितास्त्रः ।
माहिष्मतीशश्च महार्घरत्नै-
स्तमर्चयामास तदाज्ञयैव ॥ १०१

स त्रैपुरश्चैव सुराष्ट्रनाथ-
माखण्डलौजाः किल दण्डकांश्च ।
द्वीपाश्रयान् म्लेच्छगणान् पयोधे-
रधिज्यधन्वा तरसा विजिग्ये ॥ १०२

जित्वा बली कोलगिरिं बलौघै-
र्द्वीपञ्च ताम्रं स तिमिङ्गिलञ्च ।
अन्ध्रान् कलिङ्गान् जवनांश्च वार्धे-
श्चकार निघ्नान् जवनैः समस्तान् ॥ १०३

रत्नान्यथादाय महार्हवस्त्रैः
पौलस्त्यतः प्रस्तुतसामवादः ।
ततः प्रतस्थे स बलैरुदारै-
ररिन्दमः कौरवराजधानीम् ॥ १०४

ततोबलौघैर्नकुलोऽपि वीरान्
जित्वा शरैर्मत्तमयूरसंज्ञान् ।
पदे पदेऽम्बुभ्रमवञ्चितात्मा
क्लेशादतीयाय मरुप्रदेशम् ॥ १०५

शैरीषकादींस्तरसा विजित्य
सरस्वतीसिन्धुतटाश्रितांश्च ।
शैलाश्रयान् पञ्चनदञ्च सर्व्वं
स ज्योतिषञ्चोत्तरशब्दपूर्व्वम् ॥ १०६

क्रमात् समानीय वशं स देशान्
बहून् महाबाहुरधिज्यधन्वा ।
अम्भोनिधेः कुक्षिगतान् परस्ता-
च्छिलीमुखैर्म्लेच्छगणानजैषीत् ॥ १०७

स पह्लवान् बर्व्वरकांश्च संख्ये
वीर: किरातान् यवनान् शकांश्च।
रत्नानि यत्नेन पर:सहस्रै-
रुष्ट्रै: प्रवाह्यानि निगृह्य लेभे ॥ १०८

समागत: स्वामथ राजधानीं
माद्रैं बलैरक्षतदेह एव।
स बाहुवीर्य्यार्ज्जितसम्पदं तां
निवेदयामास युधिष्ठिराय ॥ १०९

चतुर्दिगीशोपमवीर्य्यसारै-
श्चतुर्द्दिशश्चापि जयेन दृप्तै:।
मेने निजं धर्म्मसुतोऽनुजातै-
र्मूर्त्तैरुपायैरिव रक्ष्यमाणम् ॥ ११०

सम्राट् ततश्चक्रधरानुमत्या
स राजसूयं क्रतुमाजहार।
सतां हि लोभै: परिवर्जितानां
विसर्जनायैव जय: परेषाम् ॥ १११

राजन्यवर्गैः शतश: समेतै:
स्फुरत्प्रभालङ्करणै: पुरन्तत्।
चापोज्ज्वलैरिन्द्रधनु:प्रकाशै-
र्नभस्तड़िल्वद्भिरिवावभासे ॥ ११२

व्यासेन साक्षादिव केशवेन
विप्रैश्च वेदैरिव मूर्त्तिमद्भि:।
उपाहृतै: प्रस्तुतयज्ञवेदि-
र्न्यस्तैरिव द्यौर्मधुरं चकाशे ॥ ११३

श्रियमथ कुरुनाथः पाण्डुसूनोर्विलोक्य
सकलमवनिपालं विस्मयं लम्भयन्तीम् ।
हृदयइव भुजङ्गैर्दश्यमानो न लेभे
सुखमपरसमृद्धिः खल्वसह्या खलानाम् ॥ ११४

इति चन्द्रवंशे महाकाव्ये पाण्डवदिग्विजयोनामै-
कोनविंशः सर्गः ।

—:o:—

# विंशसर्गः।

क्लिष्टबुद्धिः स दैवेन तेजसेवाहतेक्षणः।
द्यूतेन कपटेनैच्छदाहर्त्तुं पाण्डवश्रियम् ॥ १
बन्धुभिर्वार्य्यमाणोऽपि सौबलोत्साहमोहितः।
दुर्य्योधनस्तथैवासीत् द्यूताय कृतनिश्चयः ॥ २
द्यूतमेवाहितोदर्कं रुरुचे हतचेतसे।
आसन्नविलयायोच्चैरपथ्यमिव रोगिणे ॥ ३
धृतराष्ट्राभ्यनुज्ञातः सुतरां कालचोदितः।
पार्थमाह्वाययामास मूर्त्तं मृत्युमिवात्मनः ॥ ४
अथ प्रवृत्ते द्यूते तु कपटाक्षैर्युधिष्ठिरम्।
अजयत् शकुनिः सद्यो निकृत्या कितवाग्रणीः ॥ ५
स्फीतं वसु च राज्यञ्च भ्रातृंश्चात्मानमेवच।
द्रौपदीञ्च क्रमात् पार्थः सर्व्वं हारितवान् क्षणात् ॥ ६
एवं दुरोदरे वृत्ते विदुरोऽन्धमुपादिशत्।
तदस्याप्रियमेवाभून्मुमूर्षोरौषधं यथा ॥ ७
अथ दुःशासनो भ्रातुः शासनात् द्रुपदात्मजाम्।
आचकर्ष बलात् केशे राज्यलक्ष्मीमिवेच्छया ॥ ८
तस्याः स वसनाक्षेपं चिकीर्षुर्दैवतोऽभवत्।
जिघृक्षुरङ्कगो बालो मृगाङ्कमिव निष्फलः ॥ ९
अरुन्तुदमिदं कर्म्म विमृशन्तोऽपि पाण्डवाः।
सत्यबद्धास्तथैवासन् मन्त्ररुद्धा इवोरगाः ॥ १०

निदेशादन्धराजस्य त्रस्तस्योत्पातदर्शनात्।
पार्थाः पूर्व्वपदारूढ़ा हरिप्रस्थं प्रतस्थिरे। ११
भूयोऽप्यर्द्धपथादेतान् दुर्य्योधनमते स्थितः।
आनिनायाम्बिकापुत्रो देवितुं दैववञ्चितः १२
जानन्तोऽपि महात्मानो गुरोराज्ञेति पाण्डवाः।
अन्तरत्यन्तसन्तप्ताः प्रजग्मुर्गजसाह्वयम्॥ १३
दुरोदरमभूद्भूयः सर्व्वेषां परिपश्यताम्।
सौबलेन समन्तत्र धर्म्मपुत्रस्य धीमतः॥ १४
पराजितो वनं गच्छेत् समा द्वादशसंख्यया।
अज्ञातं निवसेद्वर्षमेकमेष पणोऽभवत्॥ १५
विजितास्ते तु पाञ्चाल्या वल्कलाजिनवाससः।
अनुयान्तोर्व्वनं जग्मुर्निषिध्याश्रुमुखीः प्रजाः॥ १६
अस्रप्लुता म्लिष्टरुचः पौराः पुरमथागमन्।
तुषारसमये प्रातस्तुषारकिरणोपमाः॥ १७
प्रमाणवटमुद्दिश्य पाण्डवाः पण्डितोत्तमाः।
प्रापुः सुरधुनीतीरमारण्यतरुशोभितम्॥ १८
ब्राह्मणानां गणः पार्थान् कृतबुद्धिरभीप्सितान्।
पुनः पुनर्व्विघ्नितोऽपि पुरुषार्थानिवान्वगात्॥ १९
स्थालीमौडुम्बरीं लेभे सूर्य्यमाराध्य पाण्डवः।
पाञ्चालराजतनयाभोजनात् पूर्व्वमक्षयाम्॥ २०
युधिष्ठिरस्तत्प्रभावाद्वनेऽपि स्नातकान् बहून्।
पालयामास लोकानां धर्म्मात् किमिव दुष्करम्॥ २१
स तैर्धौम्येन च समं सरस्वत्युर्म्मिसंप्लुतम्।
कमनीयं मुनीनाञ्च काम्यकं वनमाश्रयत्॥ २२

अध्वानमारुरोधैषां राक्षसो भीमदर्शनः ।
किर्म्मीरोऽञ्जनसङ्काशः कुर्व्वन् कर्म्मातिमानुषम् ॥ २३
शुभ्रदंष्ट्रः प्रदीप्ताक्षः सम्प्रदीप्तशिरोरुहः ।
तड़िद्वानिव संसक्तो बलाकासूर्य्यरश्मिभिः ॥ २४ युग्म
रिपुरेष महाक्रूरस्तेषां क्षतधियामपि ।
सहसा गोचरानासीदक्षणामिव विप्लवः ॥ २५
पाञ्चाली प्रविलोक्यैनं भर्तॄणां मध्यवर्त्तिनी ।
स्रवन्तीवाचलेन्द्राणामन्तरा व्याकुलाऽभवत् ॥ २६
दंष्ट्राकरालं गर्जन्तं प्रभिन्नमिव कुञ्जरम् ।
केशरीवानयत् क्रूरं मारुतिर्नामशेषताम् ॥ २७
ततो द्वैतवनं गत्वा कुटजार्ज्जुनशोभितम् ।
ते रोधसि सरस्वत्या निवासं चक्रिरे मिथः ॥ २८
व्यासात् प्रतिस्मृतिं लब्ध्वा निःश्रेणीमिव सम्पदाम् ।
पार्थस्तदाज्ञया सर्व्वैर्भूयः काम्यकामययौ ॥ २९
द्वैपायनस्योपदेशादादेशाच्च महीक्षितः ।
ऐन्द्रिर्दिव्यास्त्रलाभार्थमिन्द्रकीलाचलं ययौ ॥ ३०
तपस्विरूपिणः साक्षात् शासनात् पाकशासनेः ।
आखण्डलस्य गाण्डीवधन्वा प्रायाद्धिमाचलम् ॥ ३१
कठोरपिङ्गलजटः प्रयतः स परन्तपः ।
आरिराधयिषुः शम्भुमतप्यत परन्तपः ॥ ३२
अथ मूकाभिधः कोऽपि राक्षसः कोलविग्रहः ।
जिघांसुरर्जुनं प्रागादत्यन्ताद्भुतदर्शनः ॥ ३३
किरातरूपी भगवान् तत्क्षणोपनतः क्षणात् ।
गाण्डीवी च बिभेदैनं सममेव शिलीमुखैः ॥ ३४

लक्षीकृत्य शरव्यन्तं किरातार्जुनयोरभूत् ।
रणोऽवमाननालेशोऽप्यसह्यो हि महौजसाम् ॥ ३५
दुर्लभस्तपसाऽप्यस्य सन्तोषः पार्थतेजसा ।
आसीद्वीर्य्यवतां वीर्य्यं पूर्वमेव हि गण्यते ॥ ३६
अथ पाशुपतं नाम सोऽस्त्रं परमदारुणम् ।
मन्त्रवत् प्रतिजग्राह स्वयापेतः स्मरान्तकात् ॥ ३७
अथ तेजोभिरभवद्भगवान् भूतभावनः ।
अविभाव्यः क्षणाद्भानुर्यथाऽस्तमयमागतः ॥ ३८
हरिताम्पतयोऽपि तमागत्यास्त्रैरपूजयन् ।
नयप्रयोगा भूपालं सदुदर्कैः फलैरिव ॥ ३९
अथामरावतीं सोऽगात् पाकशासनशासनात् ।
मनोरथमिवारुह्य रथं मातलिसारथिम् ॥ ४०
अनन्यदुर्लभं तस्मादस्त्रजालं स्फुरद्बली ।
लेभे नक्षत्रतारादिः प्रकाशं भास्करादिव ॥ ४१
किरीटमपि दिव्याभं देवराजो वरौजसः ।
स्वयमासञ्जयामास पश्चात् पार्थस्य मूर्द्धनि ॥ ४२
अमानुषैरस्त्रजालैस्तेजसा च ज्वलन्निव ।
दिव्यं तौर्य्यत्रिकं चासौ चित्रसेनादशिक्षत ॥ ४३
मेघच्छन्नेन्दुलेखेव नीलाम्बरधरोर्व्वशी ।
प्रपेदे तं किलोदग्रकन्दर्पशरपीड़िता ॥ ४४
प्रभवत्वात् पौरवाणां प्रत्याख्याताऽर्जुनेन सा ।
षण्डो भविष्यसीत्येनं शशाप व्यथितान्तरा ॥ ४५
अवदानेन सन्तुष्टो बिड़ौजा अमितौजसः ।
अज्ञातवाससमये तस्य क्लीबत्वमादिशत् ॥ ४६

लौमशस्योपदेशेन धनञ्जयदिदृक्षया।
वत्सलाः पाण्डवाः सर्व्वे प्रजग्मुर्गन्धमादनम्॥ ४७
इतस्ततः प्रस्रवणैर्व्योमसुन्नीर्णवारिभिः।
संस्कारनिस्तलैस्तारैर्मुक्तामालाकुलैरिव॥ ४८
विलोलजलदव्रातैः संलग्नैः पार्श्वयोर्द्वयोः।
विस्तार्य्य पक्षावभितो नृत्यन्तमिव सम्मदात्॥ ४९
अप्सरःशिञ्जितैर्नृत्यन्मयूरं कन्दरागतैः।
स्रोतसाम्पतनात् स्रस्तदुकूलमिव लक्षितम्॥ ५० कलापम्।
पाञ्चाल्या प्रणयोद्भेदात् प्रार्थितः पवनात्मजः।
काञ्चनानि सुगन्धीनि पद्मान्याहर्त्तुमुद्ययौ॥ ५१
प्रीणयित्वाऽऽञ्जनेयं स प्रभञ्जनसुतो बली।
विद्राव्य रक्षिणः सर्व्वानानयत् कमलोच्चयम्॥ ५२
हरन्तं पाण्डवानुच्चैर्भीमो बदरिकाश्रमे।
जघान विकटाकारं जटासुरमरिन्दमः॥ ५३
भूयो हिमवतः पृष्ठे तरसा यक्षराक्षसान्।
निर्जित्य शापादलकानाथं कामममोचयत्॥ ५४
निवातकवचान् हत्वा पार्थोऽपि युधि दुर्जयान्।
आनन्दयामास ततो चिरसन्दर्शनेन तान्॥ ५५
यमुनामनु शैलेन्द्रे वने चैत्ररथोपमे।
मिलिताः पाण्डवाः सर्व्वे विचेरुर्व्वनचारिणः॥ ५६
कुम्भयोनेः प्रकोपेन नहुषः सर्पतां गतः।
भीमसेनं निजग्राह ग्राहः प्राकृतवद्बली॥ ५७
युधिष्ठिरः परिप्रश्नान् तस्योत्तीर्य्य महामतिः।
शापादमोचयत् सर्पं सोऽपि बभ्राह वृकोदरम्॥ ५८

द्वैतारण्यसरस्तीरमागतास्ते यशस्विनः ।
नभः प्रदोषे नक्षत्ताराइव विरेजिरे ॥ ५९
कौरवा घोषयात्रायां गन्धर्व्वैर्युधि निर्जिताः ।
त्राताः किरीटिना त्रासाद्धिमेषशरणार्थिनः ॥ ६०
जयद्रथः किलैकान्ते कदाचिद्द्रुपदात्मजाम् ।
ययाचे कामसम्भ्रान्तः सिंहीमिव महागजः ॥ ६१
युवानमपि सा साध्वी श्रद्दधे न कथञ्चन ।
भर्त्तारं वार्द्धकग्रस्तं तरुणीव नितम्बिनी ॥ ६२
अहरत् स बलात् कृष्णां पूर्व्वदेव इवाहुतिम् ।
तं निगृह्य बलेनैव पाण्डवास्तां समानयन् ॥ ६३
विपन्नान् पाण्डवानन्यान् पीत्वा यक्षसरःपयः ।
पुनरुज्जीवयामास लब्धवर्णो युधिष्ठिरः ॥ ६४
आवध्याथ शमीवृक्षे श्मशानस्थे महोच्छ्रये ।
अस्त्राण्युत्तमनसस्ते विराटपुरं ययुः ॥ ६५
अज्ञातवासं विवशास्ते मत्स्यनगरेऽवसन् ।
अह्नि ग्रहगणाश्छन्ना नभसीवार्करोचिषा ॥ ६६
युधिष्ठिरः सभास्तारो विराटस्य महीपतेः ।
प्रियोबहुमतश्चासीदक्षाणामपि देविता ॥ ६७
सूपकारोऽभवद्भीमः फाल्गुनस्तु बृहन्नला ।
क्लीवस्तौर्य्यत्रिकाचार्य्यः कन्यानां दैन्यमाश्रितः ॥ ६८
नकुलस्त्वश्वपालोऽभूत् सहदेवोऽपि गोपतिः ।
प्रत्यादेशः सुन्दरीणां सैरिन्ध्रीवृत्तिमाश्रयत् ॥ ६९
एवं प्रच्छन्नदुर्लक्ष्यास्ते विचेरुर्व्वरौजसः ।
तन्वाणुमात्राः सलिले जलौकसइवानिशम् ॥ ७०

अथ तत्रोत्सवे मल्लानभिभूय बलाधिकम् ।
जीमूतमवधीद्भीमो वलान्तं भीमविक्रमः ॥ ७१
कामयानश्च पाञ्चालीं कीचकं विकचोत्पलैः ।
तुल्याक्षीमक्षिणोद्गूढ़ं व्यूढ़ोरस्कमपि क्षणात् ॥ ७२
अथ सूतात्मजेनैव दिधक्षून् द्रुपदात्मजाम् ।
शतं पञ्च तथैवान्यानवधीत् कीचकान् बली ॥ ७३
जेतुं यातेषु सर्व्वेषु त्रिगर्त्तानाततायिनः ।
बृहन्नलासखः प्रायाद्वैराटिः कौरवान् प्रति ॥ ७४
स्फीतं कुरुबलं दृष्ट्वा वेपमानं मुहुर्मुहुः ।
बली बालं समाश्वास्य सारथ्ये तं न्ययोजयत् ॥ ७५
दिवाप्रदीपानिव तानस्त्रैरिव शिलीमुखैः ।
चक्रे विलुप्ततेजस्कान् विवस्वानिव फाल्गुनः ॥ ७६
प्रत्यानयदमेयात्मा हृतं तैर्गोधनं महत् ।
दैतेयानिव विद्राव्य यज्ञभागमधोक्षजः ॥ ७७
पाण्डवानथ विज्ञाय विराटस्तानुदारधीः ।
यथावदर्च्चयामास स विपश्चिदपश्चिमान् ॥ ७८
दूतांश्च प्राहिणोत्तेषां बन्धुभ्योबान्धवोचितः ।
अप्रमेयैर्बलैस्ते च प्रागमन् विगतक्लमाः ॥ ७९
उत्तराञ्च ददौ कन्यां स मान्यायाभिमन्यवे ।
लक्ष्मीमिव विशालाक्षीमच्युताय महोदधिः ॥ ८०
पाण्डवैः सह सन्धातुं दुर्य्योधनमधोक्षजः ।
वीर्य्यवद्भिर्वृथा यत्नमकरोद्धस्तिनां गतः ॥ ८१
ते सपत्नैर्हृतं राज्यं छलेन बलिनां वराः ।
उपचक्रमिरे लब्धुं बलेनैव मनस्विनः ॥ ८२

युयुत्सवस्ततो जग्मु: सर्व्वे कौरवपाण्डवा: ।
कुरुक्षेत्रं क्षत्रियाणामन्ते साक्ष्यइव स्थितम् ॥ ८३
हेतुमद्भि: पदै: कृष्णो निर्व्वेदं वदतां वर: ।
अर्ज्जुनस्य जहारोच्चैर्हिंसादोषैकदर्शिन: ॥ ८४
अथ प्रववृते युद्धं महत् तेषां महौजसाम् ।
आशास्यमानकौन्तेयजयं दिक्षु महात्मभि: ॥ ८५
विचेरुरभिगर्ज्जन्तो नभसीव रणस्थले ।
घनाइव तड़िन्माला नागा: काञ्चनशृङ्खला: ॥ ८६
बृंहितै: सिंहनादैश्च हेषाशब्दैश्च पुष्कलै: ।
शङ्खरावैश्च घोरोऽभूद्ध्वनि: समरदुन्दुभे: ॥ ८७
गजारोहो तुरङ्गस्थमश्वसादो महीस्थितम् ।
एतानपि रथारूढ़ो न कदाचिदयोधयत् ॥ ८८
विनाशमिव वंश्यानां घोरं द्रष्टुमनीश्वरौ ।
सूर्य्याचन्द्रमसावास्तां रज:-प्रच्छन्न-विग्रहौ ॥ ८९
विलयात् किल भर्त्तॄणां शुचाऽऽर्त्ता धूलिधूसरा ॥
विदीर्णहृदयेवोर्व्वी बभूव रुधिरप्लुता ॥ ९०
अथ पार्थौरथोपस्थात् पुरस्कृत्य शिखण्डिनम् ।
दिनात्यय इवादित्यं रक्तं भीष्ममपातयत् ॥ ९१
प्रतीक्षमाण: स क्षेममयनं दक्षिणेतरत् ।
अशेत शरशय्यायां जनयन् जनविस्मयम् ॥ ९२
तथागतस्य तस्योच्चै: कातरत्वं पिपासया ।
कृतास्त्रोऽपाहरत् पार्थ: पुण्यैर्भागवतीजलै: ॥ ९३
अभिमन्युवधामर्षाज्ज्वलतेव किरीटिना ।
पश्यत्सु कुरुवीरेषु निहतोऽभूज्जयद्रथ: ॥ ९४

अश्वत्थाम्नः स्वपुत्रस्य मिथ्याऽस्तं श्रावितोगुरुः।
न्यस्तशस्त्रः शिरश्छेदादधृष्टद्युम्नेन लम्भितः॥ ९५

नृसिंह इव दैत्यस्य सत्यसन्धो वृकोदरः।
दुःशासनस्य हृदयं विदार्य्य रुधिरं पपौ॥ ९६

योधयित्वाऽर्जुनं संख्ये कर्णोऽप्यस्तमगाच्छरैः।
दावानल इवारण्यं दग्धुकामो घनाम्बुभिः॥ ९७

दुरुद्धरमपि श्रीमान् यत्नादुदहरत कृती।
प्रथमः पाण्डवः शल्यं हृदि शल्यमिवार्पितम्॥ ९८

ज्वलज्ज्योतिष्कपिण्डानि युगान्त इव संयुगे।
परस्पराहतैः पेतुः खण्डितानि बलान्यपि॥ ९९

एवमष्टादशदिनैस्तेषामक्लिष्टकर्म्मणाम्।
अष्टादशैव वीराणामक्षौहिण्यः क्षयं ययुः॥ १००

अथातिक्षीयमानौजाः प्रतीच्यामिवांशुमान्।
द्वैपायनह्रदस्यान्तरलीयत सुयोधनः॥ १०१

तस्मादुत्थापयामास भीमस्तं रूक्षभाषितैः।
रत्नं महीतलादुच्चैर्मूलैरिव महीरुहः॥ १०२

समुद्यतगदौ वीरौ चेरतुस्तौ रणक्षितौ।
उत्पातोल्कान्वितौ व्योम्नि मूर्त्तिमन्ताविव ग्रहौ॥ १०३

वामदक्षिणगोमूत्रमण्डलप्रक्रमात्तयोः।
सुरस्त्रीभ्यः प्रियं रेणुराचचाण इवोत्थितः॥ १०४

गदालीढशरीरौ तौ व्यूढोरस्कौ पदात् पदम्।
मातङ्गरदनिर्भिन्नौ शैलाविव न चेलतुः॥ १०५

कौरवेणाहतो भीमो वक्षस्युपलसन्निभे।
क्षणमज्ञातदुःखोऽभूत् प्रलयेन बलीयसा॥ १०६

स दुर्योधनपक्षाणां प्रहर्षं विगतव्यथः ।
दैन्यञ्च पाण्डुपुत्राणां खण्डयन्नुत्थितोऽभवत् ॥ १०७
सत्यप्रतिज्ञः समरे चरन् गाण्डीविसंज्ञया ।
ऊर्व्वोरभ्यवधीद्वीरो भीमसेनः सुयोधनम् ॥ १०८
स काञ्चनाभीरक्ताक्तशरीरः पादपर्व्वतः ।
मेरोर्बालातपव्याप्तोवज्राहत इवापतत् ॥ १०९
अथ तस्मै हलभृतः कोपं समयलङ्घिने ।
समयव्यपदेशेन शमयामास केशवः ॥ ११०
अथ द्रौणायनिः सुप्तान् रिक्तानच्युतपाण्डवैः ।
सैनिकान् द्रौपदेयांश्च जघान किल निर्घृणः ॥ १११
निर्वासुरथ कृष्णस्य वचोभिर्विनिवारितः ।
किरीटम्तस्य चिच्छेद किरीटी किरणोज्ज्वलम् ॥ ११२
पाञ्चाली तमथ शिरोमणिं स्फुरन्तं
व्यासक्तं परिविदधे नृपोत्तमाङ्गे ।
तेनासावपि शुशुभे शशाङ्कबिम्ब—
व्यालम्बो गिरिरिव तत्प्रभाऽवलीढः ॥ ११२

इति चन्द्रवंशे महाकाव्ये दुर्योधनवधोनाम
विंशः सर्गः ॥

———

# एकविंशः सर्गः ।

अथ संकुलसङ्गराङ्गणं
धृतराष्ट्रादिभिरश्रुविक्लवाः ।
अगमन् सकलाः कुरुस्त्रियो—
गुरुशोकाः कुररांगना इव ॥ १

गजकाञ्चनवर्मलोहितैः
परिकीर्णं युगपद्दिनोदये ।
तरुणार्कमरीचिहव्यभुक्—
क्षणदाध्वान्तभरैरिवान्वितम् ॥ २ युग्मकम् ।

अथ ताः परिकीर्णमूर्द्धजाः
सुहृदां लक्षणवीक्षणाकुलाः ।
करुदुर्वदनानि वारिभि—
र्नयनोत्थैरभिषिच्य योषितः ॥ ३

परिहाय किमद्य भूतले
शयनं कोमलतूलिकोत्तरम् ।
अतिदीन इवास्तचेतनः
सुत, शेषे शरजालसंकुले ॥ ४

पितरौ त्वदधीनजीवितौ
वसुधेयं वशगा वधूरिव ।
स्वजनोऽपि विधेय एव ते
व्यवसायः कुत एष निष्ठुर. ॥ ५

व्यथयेर्यदि मध्यत: स्थितान्
समरे वीर, शरैरपि क्षत: ।
जननीमतिवत्सलां तदा
कथमाभग्नवपुर्न मां दहे: ॥ ६

वसुधापतय: प्रकम्पिता—
स्तव तेजोभिरसह्यविक्रमै: ।
स भवान् पतगैर्व्विलङ्घ्यते
जगतो धिग् जलबिम्बलोलताम् ॥ ७

स्तुतिभि: किल वन्दिनामभू-
र्मुदितात्मा नृपनन्दनादित: ।
वद सम्प्रति दूयसे न किं
कटुगोमायुरवैर्भयावहै: ॥ ८

न सितातपवारणं न वा
शरदिन्दुप्रभचामरद्वयम् ।
पुरुषा न शरीररक्षका—
स्तव नालोकरवोऽद्य लक्ष्यते ॥ ९

अभव: परिचारकै: पुरा
ननु काश्मीरकरेणुरूषित: ।
विभवे सति किं रज:कणै—
रकरोर्धूसरितं कलेवरम् ॥ १०

पृथगात्मतया यदीदृशं
कृतमेतत्तव पुत्र, नोचितम् ।
पितरौ परिलुप्तदर्शनौ
परिहायाद्य [illegible]ीं वधूमपि ॥ ११

पतगैरभिजग्धलोचनं
सुखमेतन्मलिनं दुनोति माम् ।
शशिरश्मयविभ्रमं यथा
घनजालान्तरितेन्दुमण्डलम् ॥ १२

अभितस्तव योषितः पुरा
रमणीयालपनाः किलाभवन् ।
अधुना बत भाग्यपर्य्ययात्—
दशिवोऽयं प्रथते शिवारवः ॥ १३

प्रवरैः किल पण्डितैः पुरा
सदसि त्वं परिमण्डितोऽभवः ।
पललं प्रति लोलुपैर्भृशं
धिगहो गृध्रगणैः प्रवेष्ट्यसे ॥ १४

यदि बान्धवशोकदुर्मनाः
परलोकं सुत, गन्तुमिच्छसि ।
परिलुप्तदृशौ कथं तदा
प्रभवौ मावनुमान्य नो गतः ॥ १५

अनमः स्वयमेत्य मां पुरा
रुदतीमप्यधुनाऽम्बिकस्थिताम् ।
किमिदं सुत, लुप्तचेतनः
परिसुप्तो जननीं न वीक्षसे ॥ १६

शपथैर्मुहुरर्थयेऽधमा
सकृदप्यालप मां कलाक्षरैः ।
किमिदं करुणासुहृत्तमा
चिररात्राय सपुत्र, सुप्यते ॥ १७

त्वमसह्यबलो महीतले
लसदेकादशवाहिनीपतिः।
पतगैरभिभूयसे बला—
न्नरभाग्यं धिगिदं चलचुरतम् ॥ १८

इति तं परिलप्य सौबली
सुतमुच्चैः स्थिरतां समतगात्।
अचलाऽपि चलत्ययोल्वणं
लसदन्तर्भृशविक्लवाकुला ॥ १९

अथ भानुमती शुचाऽऽकुला
पतगोदष्टमुखं सुयोधनम।
अभिवीक्षितुमक्षमेव सा
सहसाऽभूत् परिलुप्तचेतना ॥ २०

शकुनैरपि खण्डिताङ्कं
मुखमेतत्तव समीन्दुवत्।
प्रिय, मामविलुप्तकान्तिम्-
अदयत्युत्पलिनीमिवोन्मदाम् ॥ २१

रचितं परिहासतोऽप्यभू-
न्न कदाचित् प्रिय, विप्रियं मया।
प्रवियोगविलीनमानसां
किमकाण्डे वद मां न भाषसे ॥ २२

विशिखैरसि नाम विद्धवा—
मथवा स्तीनखरैर्हृदि क्षतः।
दयितालप मां न मानिनी
परमुत्थविरहाकुलाऽस्मि ते ॥ २३

अनिमेषदृशा सुरस्त्रिया
परिपीतो यदि नाथ, माद्यसि ।
ननु पश्य निषिद्धचापले
मम लौल्यप्रचुरे विलोचने ॥ २४

अपराधविशेषजो ध्रुव-
स्तव मन्युर्मयि कान्त, विद्यते ।
कथमस्तघृणोऽन्यथा मुहु-
र्विलपन्तीं दयितां न वीक्षसे ॥ २५

लसदश्रुलवोऽपि मे मन-
स्तव दिग्धाशुगवत् पुराऽदुनोत् ।
प्रिय, सा स्नपिताऽहमश्रुभि-
र्बत नैवास्मि दयालवोऽपि ते ॥ २६

किमिदं परिहाय मां सती-
मनुकूल, त्वयि बद्धलालसाम् ।
वद संयमिनामुपाश्रितो-
व्रतमुच्चैस्तरुणोऽप्यसाम्प्रतम् ॥ २७

रणदुन्दुभिघोषकर्षितो-
रचितामर्द्धकपोलपत्रिकाम् ।
असमाप्य ममाद्रवः पुरा
रमणैहि प्रसमापयाद्य ताम् ॥ २८

यदकारि किमप्यशोभनं
मम तावत् त्वमिति प्रमूढया ।
प्रिय, मर्षय तत् प्रसादये
रचितोऽयं शिरसि क्षमाञ्जलिः ॥ २९

अबला बलवद्भिरुद्धताऽ-
प्यनुगृह्येत दयापरैर्नृभिः।
कथमस्तमितानयां नु मां
त्वदधीनां त्यजसि प्रियामपि॥ १०

दशनक्षतपीड़िताधरा
प्रतिकूलाऽस्मि पुरा रदक्षते।
इति मानसुपाश्रितोऽसि किं
दश कामं शिरसा प्रसादये॥ ११

इति काचिदतीव विक्लवा
मुखपङ्केरुहलग्नमाननम्।
दयितस्य विधाय भाविनी
स्तिमिताक्षी विदितास्तमासदत्॥ १२

अपरोपचितैर्मुहुर्मुहुः
प्रियमस्त्रैः परिलुप्तदर्शना।
अवलोकयितुं न चाशक-
द्विफलोद्वाष्पपयःप्रविक्लवा॥ १३

अथ सा विरुरोद भाविनी
मुहुरार्त्तस्वरवेजिताङ्गजा।
वसुधामवसन्नविग्रहा
परिरभ्याखिलमित्राकुलान्तरा॥ १४

विधिना हरताऽपि निष्ठुरं
दयित, त्वां नयनोत्सवं मम।
मुहुरश्रुजलातिसर्जनैः
किमु दृष्टिप्रसरोऽपि वार्य्यते॥ १५

मम भाग्यविपर्य्ययो महा-
नवलुप्तेक्षणशक्तिरस्मि यद् ।
दिवसोदयचन्द्रवद्वपु-
स्तव हन्तेक्षितुमक्ष्यमक्षमा ॥ ३६

इयताऽपि न यद्विदीर्य्यते
हृदयं तत् खलु वज्रनिर्म्मितम् ।
रमणी किल कोमलेति वाङ्
ननु पुंसां प्रणयातिरेकजा ॥ ३७

इतरत्र सुदुर्लभं नृणां
मरणं काङ्क्षितमायुषः क्षयात् ।
अवलोक्य तवेदृशीं दशा-
मपि यन्मे न गतं हतासुभिः ॥ ३८

इति मोहमगान्मृगेक्षणा
प्रियमाश्लिष्य परेतमुत्सुका ।
अपुनःप्रतिबुद्धये सती
पतिलोकान्तरसा ततोऽजयत् ॥ ३९

अपराऽप्युपलभ्य लक्षणे-
रवधार्य्याकुलिता हृदीश्वितुः ।
प्रचुरैः किल बाष्पवारिभिः
परिधौतक्षतजं कलेवरम् ॥ ४०

क्षणमात्रविलुप्तचेतना
नवमोहेन पुनर्व्विबोधिता ।
करुणैः कुरुवीरकामिनी—
प्रविलापैर्व्विललाप भाविनी ॥ ४१ युग्मकम्

पिशिताशिभिरुत्सुकात्मभि-
स्तव देहो बहुशोऽद्य भक्षितः ।
भ्रमरैरिव भूयसा शशी
परिपीतोऽप्यमितो दुनोति माम् ॥ ४२

परिनष्टकलेवरात्मन-
स्तव सत्यं प्रिय, कीर्त्तिशेषता ।
कथमेवमवेक्ष्य ते वपु-
र्हृदयं मे शतधा न दीर्य्यते ॥ ४३

परिहाय गतोऽसि मामितः
परलोकं कपटैकवत्सलाम् ।
निरुपाधि ममत्वमस्ति चेद्-
ध्रियते किं हतजीवितं मया ॥ ४४

तव लोकविमोहनात्मनो-
निरुपाधिः प्रणयोऽस्ति मां प्रति ।
नय मामपि तत्र दुःखिनीं
प्रिय, यत्राद्य गतोऽस्यलक्षितः ॥ ४५

किमपि स्पृहणीयमात्मनः
पुरतस्त्वं न मया विनाऽचरः ।
नरलोकसुदुर्लभः कथं
सुरलोकः स्वयमेव गम्यते ॥ ४६

चतुरं रमणाप्सरोगणं
ननु मत्तो बहु मन्यसे यदि ।
सुरतं न तदर्थये पुन-
स्तव शुश्रूषणमेव कामये ॥ ४७

अपि वीक्ष्य विलुप्तजीवितं
तव देहं मम रुध्यते मनः ।
नितरां करुणाबहिर्मुखो-
विधिरेतद्धत सोढुमक्षमः ॥ ४८

हतदैवविशेषवञ्चिता
कठिनोर्व्वीर्व्यसने करोमि किम् ।
मम जीवितमातुरस्य वा
बहुलक्लेशफलाय केवलम् ॥ ४९

इति सा करुणाक्षरं मुहु-
र्हतसत्वा प्रविलप्य वामिनी ।
प्रलयं प्रियसङ्गमावहं
स्फुटरोमाञ्चमगाद्गतक्लमा ॥ ५०

अपसार्य्य गणं पतत्रिणां
कथमप्याशमकरेण शोणितम् ।
वसनाञ्चलतोरजःकणान्
प्रियमन्वा श्रितदैन्यमैक्षत ॥ ५१

तव लूनभुजं कलेवरम्
द्विषदस्त्रैरवलोक्य निर्घृणैः ।
प्रिय, कल्पमहीरुहं यथा
क्षतशाखं मम दूयते मनः ॥ ५२

क्व स मे स्तनमण्डलोषितः
कचपाशप्रहणैकपण्डितः ।
सुरतात्ययनिःसहोवपुक्—
परिसंवाहनपेशलः करः ॥ ५३

किमिदं न विलापविह्वलां
रमणाद्यालपसि प्रियामपि ।
हृदयेशमृते नतभ्रु वां
वद कोऽन्यो व्यसनेन दूयताम् ॥ ५४

अयि मानपरिग्रहोऽसि किम्
अपराधं त्वयि न स्मराम्यहम् ।
यदि वा त्वमवैषि तन्मुहुः
शिरसा त्वां दयित, प्रसादये ॥ ५५

यदि वा कथमप्यतिक्रमं
परि मूढ़ाऽकरवं सहस्व तम् ।
स्वजने प्रभुताऽस्ति देहिनां
त्वमिहैको मम कान्त, केवलम् ॥ ५६

अपरं कमहं ब्रवीमि वा
कतमो वा सहतां मदक्रमम् ।
चपलापरितापमम्बुदा-
दपरः कोऽस्ति विसोढुमुत्सुकः ॥ ५७

प्रबलोल्वणमनुविक्लवो—
यदि मामीक्षितुमप्युपेक्षसे ।
प्रतिषेधय कृच्छभाषिते—
रियताऽपि प्रिय मे सुखोदयः ॥ ५८

रमणीजनदुर्लभं पुन-
स्तव यत् प्रेम न तत्तु कामये ।
प्रियतातरलं मदन्तरं
तव चन्द्राननवाक्यलालसम् ॥ ५९

सुरलोकनतभ्रुवामहो
किमिवास्ते प्रिय, चारु कौशलम्।
चिरप्रेमपदं न वीक्षसे
यदमूभिः क्षणमात्रसङ्गतः॥ ६०

तपसा कतमेन लेभिरे
फलमेतत् सुरलोकयोषितः।
यदि वेद्मि तपस्तदाश्रिता
दयितादेव भवन्तमाश्रये॥ ६१

इति सा करुणप्रलापिनी
गुरुशोकप्रसरातिविह्वला।
क्रममीलितजीवितात्ययं
मुहुरिच्छन्त्यपि नाप दुर्मनाः॥ ६२

रुरुदुः सकलास्तथाऽबला-
मुहुराच्छिन्नकलेवरा यथा।
करुणाक्षरविद्रुतान्तरा-
मुदिता अप्यरुदन् सुरस्त्रियः॥ ६३

भृशबाष्पजलप्लुतारुणै-
र्नयनैः कौरववीरयोषितः।
उषसीव तुषारबिन्दुभिः
सरितः कोकनदैः प्रतीयिरे॥ ६४

अथ शोकहुताशनार्चिषा
परिदग्धाः परिसान्त्वयन्नमूः।
दवलीढवनीरिवाददे
सलिलं मेघ इवाच्युतो वचः॥ ६५

जगतीष्वखिलः प्रजायते
म्रियते प्राणिगणोऽप्यहर्निशम् ।
भ्रियते न चिराय कोऽपि चे—
न्मरणे का परिदेवना नृणाम् ॥ ६६

अयिणो वनशैलसागरा-
गुरुसारा अपि पिष्टपाश्रयः ।
पिशितादिविनिर्म्मिताः कथं
नरदेहाः स्थिरतां समाप्नुयुः ॥ ६७

अमरोऽपि यदा प्रमार्थ्यते
विधिना कालवशाद्बलाधिकः ।
मरणैकजुषां तदा नृणां
क्षणमात्रोच्छ्वसितं हि मङ्गलम् ॥ ६८

प्रभवः किल ये शरीरिणां
स्थितिसर्गप्रलयेष्वपि क्षमाः ।
यदि तेऽपि विपत्तिगोचरा-
वद मर्त्याः कथमन्तवर्जिताः ॥ ६९

दिवसक्षणदोदयोपमं
सुखदुःखद्वितयं शरीरिणाम् ।
क्रमवर्त्तितरां सुदुस्त्यजं
न हि मुह्यन्ति तयोर्व्विपश्चितः ॥ ७०

यदि कोऽपि चिराय केवलं
सुखमेव प्रतिपद्यते नरः ।
अपरस्थिरदुःखभाग्भवे-
दिति दुःखं सुखमप्यसंतुलम् ॥ ७१

सुखदुःखविभागमादरा-
दिति जानन् जनो विमुह्यति।
कथमुद्धिजतामदीनधीः
प्रतिकार्य्येतरवस्तुसङ्गतो॥ ७२

यदि दुःखमसह्यमिष्यते
सुखलेशेषु कथं नु रज्यते।
तदनागतदुःखदर्शिनां
पिशुनं खल्विति हि प्रचक्षते॥ ७३

सुखभोग इवाप्रियोऽपि स-
न्नितरस्यावसरोऽपि दुस्त्यजः।
प्रियमेव कथं नु काङ्क्षते
मनुजैः स्वार्थपरैर्न विप्रियम्॥ ७४

परिपीड्य जनानमी सुहृ-
च्चिरमौत्पातिकतोयदोपमाः।
पवनैरिव घोरसायकैः
परिलीनाः किमिदं न पश्यत॥ ७५

निजकर्म्मफलानुबन्धिनो-
नरदेवासुरकिन्नरोरगाः।
विवशा हि भवन्ति जन्तवो
ध्रुवमेषां न पुनः समागमः॥ ७६

न सुखोदयमारमन्नो न वा
मृतबन्धोरपि तोषकारणम्।
उभयोरपि तत् क्षमावहं
रुदितं यत् क्रियते पृथग्जनैः॥ ७७

जलबुद्बुदवत् क्षणोदये
क्षणमात्रप्रलये च देहिनाम् ।
क इवावसरः शुचोभवे-
दपि किञ्चित् प्रतिकर्त्तुमक्षमे ॥ ७८

गुरुवेगविसृत्वराम्भसां
सरितां तीर इवातिसैकते ।
तरवो नरलोकदेहिनः
क्षणभङ्गप्रवणा न संशयः ॥ ७९

अनतिक्रमनीयविप्लवे
भुशरन्ध्रावसरे विशेषतः ।
इयताऽपि समागमेन किं
बहुलाभो दयितैर्न मन्यते ॥ ८०

सुतबन्धुषु मन्दचेतनाः,
त्यजत क्षोभभरं क्लमावहम् ।
यदुपाधिवशात् प्रदह्यते
ननु वर्त्ति र्लघुदीपवह्निना ॥ ८१

त्यजत प्रियविप्रयोगजं
गुरुशोकं हृदि धैर्य्यमाश्रिताः ।
यदनन्तरकार्य्यमादरा-
त्तदिहाक्लीबतया विधीयताम् ॥ ८२

अथ धर्म्मसुताज्ञयाऽभवन्
कुणपा वह्निमुखे समर्पिताः ।
सुरभीन्धनगन्धतो बभौ
भुवमेषां सुरभिर्यशःक्रमः ॥ ८३

आम्नानिघ्ना गुरूणामथ सुरसरितं योषितः प्राप्तदैन्याः
शोकावेगादनल्पप्रतिहतमनसः शून्यदेहा इवापुः।
स्नानैस्तासां सुखाब्जैरतिकरुणमिलत्कज्जलाश्रुप्रवाह्या
गङ्गा रेजे प्रसङ्गादिव कमलवभा यामुनोर्म्मिगाः प्रदोषे॥ ८४

मन्दाकिन्याः पयसि मिलिता स्नानचिन्ताः कथञ्चित्
बाष्पाविद्धं सलिलमबलाबान्धवेभ्यः प्रदाय।
चक्रुः सङ्कोचितमपि पुनस्तन्न्यवाक्यादतन्द्रा-
स्तत्कीर्त्तिभ्योऽप्यतिशयगुणं संविधानं विधिज्ञाः॥ ८५

गुरुवधपरिखेदात् प्राप्तनिर्व्वेददैन्यो-
मुनिभिरुचितवाक्यैर्बोधितो धर्म्मसूनुः।
सुरसरिदनुजाताद्राजधर्म्मादिधर्म्मान्-
अवहितमतिरासीत् शान्तचेता निशम्य॥ ८६

पार्थस्तथाप्यतिशुचा गुरुणाऽभिभूत-
स्तत्त्वावबोधमपि लोपयता स भूयः।
ग्रस्तः सहस्रकिरणस्तमसेव साक्षाद्-
धूमाकुलोऽनल इवास विलुप्ततेजाः॥ ८७

अथ गुरुतरशोकप्राप्तमश्रुप्रवाहं
कथमपि शमयद्भिः पुण्यतीर्थाम्बुपातैः।
अभिषिषिचुरुदारं धर्म्मसूनुं समेता-
नसुचिरिपुमिवोच्चैर्देवता मन्त्रिमुख्याः॥ ८८

रचितरुचिरवेशं सुप्रकाशं यशोभि-
स्तरणिकिरणदीप्तं वारिवाहं तड़िद्वत्।
जलनिधिसलिलमाला रत्नमालोज्ज्वलाङ्गी
समभजत विशाला भूमिपालं धरित्री॥ ८९

विदुरस्य मते स्थितः स्थितिज्ञः
कथमप्यात्मशुचं निगृह्य पार्थः।
समनन्दयदिन्दुसुन्दरश्री-
र्जनता रक्षण वीक्षणैकदक्षः॥ ८०

इति चन्द्रवंशे महाकाव्ये युधिष्ठिरराज्याभिषेकोनामैक-
विंशः सर्गः॥

---

# एकविंशः सर्गः ।

अथोत्तरा चारुशरीरबन्धं
द्रौण्यस्त्रतेजःपरिलुप्तसंज्ञम् ।
सुषाव काले कुलतन्तुमेकं
वर्षोपलक्लिष्टफलं लतेव ॥ १

मनांसि तं कौरवसुन्दरीणा-
मस्पन्दमानं ग्लपयन्तमुच्चैः ।
दृष्ट्वाऽच्युतोऽजीवयदम्बुवृष्ट्या
निदाघदग्धस्तरुवत् पयोदः ॥ २

यतः परिक्षीणतमेऽन्ववाये
जातः कुरूणामभवत् कुमारः ।
ततोऽच्युतोऽन्वर्थविदां वरेण्यः
परिक्षिदित्याह्वयमेनमूचे ॥ ३

द्वैपायनाद्यैरथ यज्ञविद्या-
विधानदक्षैः क्षतकिल्बिषैश्च ।
ऋत्विग्भिरत्यक्तविधिक्रमः सन्
पार्थोऽश्वमेधक्रतुदीक्षितोऽभूत् ॥ ४

हिरण्मयी मञ्जुलयज्ञशाला
रराज तस्योज्ज्वलकीर्त्तिभाजः ।
अपार्थिवानामिव वारणार्थं
कान्त्या तमांसि क्षपयन्त्यभीक्ष्णम् ॥ ५

किरीटिनं सङ्गरकर्मदक्षं
रक्षाविधौ होमतुरङ्गमस्य ।
नियुज्य सव्यस्त्रतुरादधानं
स क्ष्माभृतामक्षयमादिदेश ॥ ६

विपक्षभूतानथ भूमिपालान्
जयन् पृषत्कैर्नमयन्निरिव ।
स पालयामास किलाशजाशा-
मुत्खातपूर्व्वान् प्रतिरोपयंश्च ॥ ७

स वज्रदत्तस्य गजं शरौघै-
श्चकार वीरः क्षतजोक्षिताङ्गम् ।
तेनापि भूयिष्ठमसौ द्विपेन्द्रः
शैलः क्षरद्गैरिकवद्बभासे ॥ ८

ततः किरीटी विनिवेश्य मौलौ
निदेशमस्य क्षितिशासनस्य ।
पुरं प्रपेदे मणिशब्दपूर्व्वं
सुतस्य बभ्रूादिकवाहनस्य ॥ ९

पुत्रस्य स क्षात्रबलं दिदृक्षु-
स्तदस्त्रजालैरवलुप्ततेजाः ।
विवस्वदस्रैरिव हव्यवाह-
स्तस्मात् क्षतौ श्लाघ्यनिपातमाप ॥ १०

बालस्य तस्यापि शिलीमुखाग्राः
क्रान्तान्तरीक्षाः क्षितिमूललग्नाः ।
पातालमाविश्य यशस्तदीयं
शशंसुरुच्चैरिव लोककान्तम् ॥ ११

पराजयोऽप्यस्य सुहृद्गणानां
सुखार्थमात्मप्रभवाद्बभूव ।
विपत्तिकालेऽपि फलोन्मुखत्वं
न लुप्यते पुण्यकृतां वृषस्य ॥ १२

किरीटिनं भूमितले लुठन्तं
कुलाचलप्रख्यमुलुप्यवेक्ष्य ।
सञ्जीवयामास समग्रशक्तेः
सञ्जीवनाख्यस्य मणेः प्रभावात् ॥ १३

पार्थस्ततः पार्थिवसंघमुच्चै—
रानम्य कामं निशितैः पृषत्कैः ।
पुरस्कृताश्वः परमोत्सवाढ्यं
वशी स्वरिप्रस्थपुरं प्रपेदे ॥ १४

निर्वर्त्तयामासुरथर्त्विजस्ते
क्रमप्रवीणाः क्रतुमश्वमेधम् ।
लब्धः पुरा यत्र शिलोच्चयेन्द्रा-
द्विश्राणितोऽभूत् प्रचुरोऽर्थराशिः ॥ १५

सति प्रभुत्वेऽपि भृशं विनीतो-
युधिष्ठिरोऽभूद्युवराजकल्पः ।
आज्ञाविधेयैः किल सर्व्वलोकैः
शशास राष्ट्रं धृतराष्ट्रएव ॥ १६

नयप्रयोगाद्विदुरस्य ताव-
न्महाधियोऽत्यार्थविसर्ज्जनेन ।
सामन्तराजन्यगणादनल्पं
लेभे नृपालः प्रियकार्य्यजातम् ॥ १७

अथानुमान्याश्रुमुखं कथञ्चिद्—
युधिष्ठिरं सानुचरोऽम्बिकेयः ।
भीमस्य गूढाप्रियदह्यमान-
स्तपोवनं प्राप तपश्चिकीर्षुः ॥ १८

निवारिताऽपि क्षितिपेन भूय-
स्तमन्वगेव प्रययौ पृथाऽपि ।
विपक्षपक्षैः क्षणविघ्निताऽपि
समृद्धिरुच्चैरिव भाग्यवन्तम् ॥ १९

यथायथैनां नयनाश्रुपूरै-
र्नृपोऽभ्युपायैरिव मन्दभाग्यः ।
लक्ष्मीं समाक्रष्टुमियेष सैव
तथा तथा दूरमियं जगाम ॥ २०

पुराद्बहिस्ताननुगम्य पार्था-
गतेषु तेष्वश्रुमुखाः सपौराः ।
त्यक्त्वा कथञ्चिद्विषयानिव स्वान्
संसारिणः प्रापुरपोढसत्त्वाः ॥ २१

गच्छत्सु कालेषु समाधिमग्नान्
दावाग्निना दग्धकलेवरांस्तान् ।
आकर्ण्य वर्णाश्रमपालकोऽभूत्
शोकाकुलो नारदतोऽनुजातैः ॥ २२

तदूर्ध्वदेहोचितसंविधानं
विधाय धर्मप्रभवोऽनुरूपम् ।
धर्माविरोधेन शशास राज्यं
रजस्तमोभ्यामभिमुक्तचेताः ॥ २३

षट्त्रिंशदब्देऽशुभसूचकानि
निमित्तजालान्यवलोक्य पार्थः ।
नितान्तमन्तः स समाकुलोऽभू
दरिष्टलक्ष्माणि यथाऽऽमयावी ॥ २४

स यादवानां विपदं निशम्य
पदेषु सर्व्वेष्वपि निर्व्यपेक्षः ।
बभूव भीतोबलहृत्सकालात्
कृष्णोऽपि यस्माद्विलयं प्रपेदे ॥ २५

प्राजेषु राजेष्वभिषिच्य बालं
वेलावसानेष्वकृतास्तमेव ।
रक्षाविधौ क्षोणिभृतां वरेण्यो-
युयुत्सुमत्युत्सुकमादिदेश ॥ २६

कृत्वोर्द्ध्वदेहोचितमूर्द्धमौलि-
र्लोकान्तरप्रस्थितबान्धवानाम् ।
स नैष्ठिकीमिष्टिमपि प्रयुज्य
प्राज्यं जलान्तर्विससर्ज्ज वह्निम् ॥ २७

छिमन्नु ताम्भोजवतीरिवासा-
वश्रुप्रवाहाकुलवक्त्रपंक्तीः ।
आमन्त्र्य सर्व्वाः प्रकृतीः परस्ता-
द्विसृष्टनेपथ्यविधिर्ब्बभूव ॥ २८

नृपोऽनुजैस्तैरथ धर्म्मपत्न्या
वनान्तरं राजपुरात् प्रतस्थे ।
प्राणैरिवात्मा नियतिद्वितीयो-
देहान्तरं दुर्गत २९-पूर्व्वदेहात् ॥

तदा न नेपथ्यमपि श्रयन्ती
राज्ञा वियुक्ता नगरी दिदीपे।
अलङ्कृताऽप्युज्ज्वलरत्नजालैः
प्रत्यग्रवैधव्यदशेव नारी॥ १०

लोकस्य भूपालवियोगशोकात्
परिक्षिपति क्षामकलेवरस्य।
दुर्भिक्षकालेऽप्यनतिप्रमाणे
क्षुधातुरस्यान्नइवादरोऽभूत्॥ ११

पञ्चक्षितीशव्यसनाग्निजालै-
रनल्पतप्ताऽपि तपस्विनीव।
बालेऽपि तस्मिन्नवकौर्णिभावं
सर्व्वंसहा कालवशात् प्रपेदे॥ १२

बालोऽप्यसौ लाञ्छनलेशशून्यः
कल्पिष्यमाणः परिपूर्णतायै।
कान्त्या स्फुरन् प्रार्थितया प्रजाना-
मनन्दयच्चन्द्र इवाम्बराणि॥ १३

गुणैरुदारैः सममेव तस्य
वृद्धिं शरीरावयवाः समापुः।
कलाः सुधांशोरिव तेन लोकोऽ-
प्यमन्दमानन्दरसं पुपोष॥ १४

माद्रीं जनश्रीहपराङ्मुखोऽसौ
पुलोमजामिन्द्र इवोपयेमे।
सा तेन सम्पर्कमुपेत्य बाला
नीतिः फलेनेव भृशं दिदीपे॥ १५

दीपार्च्चिषेवोज्ज्वलदीपहस्तः
प्रदोषशक्तिः चमयेव साचात्।
विनम्रभावः परविद्ययेव
तया गुणोत्कर्षमसौ पुपोष ॥ ३६

प्रपालयामास महीं समस्ता-
मुपायजालैः परिपेशलैः सः।
अङ्गैरनूचानगणाग्रगण्य-
स्त्रयीमिवाव्यस्तमना मनीषी ॥ ३७

सर्व्वप्रयत्नैः शरणप्रपन्नान्
अधिज्यधन्वा स ररच लोकान्।
कृतापराधान् पुनरागमश्चो-
व्यशिचयत्तानपि दण्डलेशैः ॥ ३८

स कान्तवीर्य्योपमबाहुवीर्य्यो-
दुर्धर्षणीयोऽग्निरिवोन्नतार्च्चिः।
समुद्रवत् प्राकृतदुर्व्विलङ्घ्यः
सैव्यस्तुषाराचलवद्बभूव ॥ ३९

पराक्रमी सिंह इव क्रमज्ञः
चमेव साचात् चमयोपपन्नः।
मातेव स स्नेहविलोलचेताः
सर्व्वास्ववस्थासु सहिष्णुरासीत् ॥ ४०

कामं विवस्वानिव दचिणस्थो-
बभूव भूपः स्पृहणीयतेजाः।
तथापि तस्योज्ज्वलितैः प्रतापै-
ररातयः कौशिकवद्विलीनाः ॥ ४१

तस्याभवत् श्लाघ्यगुणस्तनूज-
स्तेजःक्रमैरेजयिता जनानाम्।
जवोत्तरं संयति सर्व्वलोका-
यमाचचक्षे जनमेजयाख्यम्॥ ४२

तेनात्मजेनात्मवतां वरिष्ठौ
नृपश्च माद्री च विनिद्रसत्त्वौ।
बाल्येऽपि तेजस्वितयाऽरुणेन
द्यावापृथिव्याविव नन्दतः स्म॥ ४३

तरङ्गलेशैः सुरशैवलिन्याः
पवित्रिते रोधसि शुद्धबुद्धिः।
महाक्रतूनुन्नतदक्षिणाख्यान्
क्रमेण चक्रे नृपचक्रवर्त्ती॥ ४४

मृगेन्द्रतेजा मृगयाविहारी
राजा महारण्यचरः कदाचित्।
अन्वग्व्रजन् नानुचरः शरव्यं
पिपासयाऽऽसीत् परिशुष्ककण्ठः॥ ४५

जलाभिलाषी किल भूमिपालो
बभ्राम भूमौ विफलप्रयासः।
विलुप्तभाग्यः प्रतिकूलदैवा—
द्दीनो धनप्रेप्सुरिवादरेण॥ ४६

मग्नं समाधौ किल निर्व्विकल्पे
शमीकनामानमसौ महर्षिम्।
निःषिद्धसर्व्वेन्द्रियवाह्यवृत्तिं
पुनः पुनर्व्वारि वृथा ययाचे॥ ४७

ततस्त्ववज्ञापरिशङ्कितचेताः
कण्ठेऽर्पयत् प्रेतममुष्य सर्पम् ।
संयोजयिष्यन् विपदा हि लोकं
विधिर्व्विपर्य्यस्तधियं करोति ॥ ४८

समागतः स्वामथ राजधानीं
शुश्राव शापं स तदात्मजस्य ।
इतो दिने सप्तमके विमूढं
तं तक्षकः स्वस्वभिदंक्ष्यतीति ॥ ४९

ततोऽभिषिच्यात्मजमात्मराज्ये
पुराद्बहिः सौधगृहोपरिष्टात् ।
विषघ्नमन्त्रौषधिरक्ष्यमाणः
स मन्त्रिवृन्दैः सममध्युवास ॥ ५०

दंशात् परं जीवयितुं क्षितीशं
समागतं कश्यपमर्द्धमार्गात् ।
दृष्टप्रभावं प्रचुरार्थवृष्ट्या
निवर्त्तयामास स एव नागः ॥ ५१

अथादशल्लङ्घितमन्त्रवीर्य्य-
स्तन्तक्षकः क्षौणिभृतां वरिष्ठम् ।
दैवक्रमातिक्रमणं नराणां
सुदुष्करं केवलपौरुषेण ॥ ५२

स तेन दष्टो विषवह्निवृष्ट्या
शशाम भूपालगणाग्रगण्यः ।
दावानलस्यावयवैर्व्विकीर्णै-
र्वातेरिता चन्दनपादपाग्रः ॥ ५३

प्रत्यग्रभूपालविपत्तिशोकाः
प्रजा नवो लोकपतिर्गुणौघैः ।
आनन्दयामास यथेन्दुरंशैः
प्रभाकरापायविलुप्तचेष्टाः ॥ ५४

वपुष्टमां नाम सुवर्णवर्णां
स काशिकेशस्य सुतामुदाराम् ।
दारक्रियायोग्यगुणैर्वरिष्ठा-
ममात्यमत्या विधिनोपयेमे ॥ ५५

स मासमात्रं श्वशुरालयान्त-
र्नृपो नवोढासहितोऽध्युवास ।
द्वितीयलक्ष्म्येव तयोज्ज्वलश्री-
स्ततः प्रतस्थे निजराजधानीम् ॥ ५६

रथं विनीताश्वलसत्पताक-
मध्यास्य विद्वान् सुहृदां वियोगात् ।
नातिप्रहृष्टां स वपुष्टमां तां
विनोदयामास मनोज्ञवाग्भिः ॥ ५७

कलिन्दकन्योर्म्मिमिलत्तरङ्गां
तथैव गङ्गामवलोक्य शुभ्राम् ।
भङ्गाय मेने नृपधर्मपत्नी
मलं न नैसर्गिकनिर्मलानाम् ॥ ५८

कृतोपचारैरनुजीविवर्गै-
स्तेषु प्रदेशेषु मनोरमेषु ।
मार्गेषु काश्चिद्वसतीर्व्यतीत्य
तौ प्रापतुः स्वामथ राजधानीम् ॥ ५९

रथान्नियन्ता यमिताश्वरश्मेः
शुभे मुहूर्त्ते प्रिययाऽवतीर्य्य ।
शुद्धान्तमध्ये विनिवेश्य चैनां
क्ष्मापः क्षमाभारमसौ बभार ॥ ६०

तस्मात् शतानीक इति प्रसिद्धो-
बभूव तस्यां रुचिरः कुमारः ।
अग्निप्रसङ्गादिव वाष्पमय्यां
स्फुरत्प्रभं ज्योतिरयोऽवर्त्याम् ॥ ६१

गुर्व्वर्थमत्युत्कटमाहरिष्यन्
कृतान्तरायः किल तक्षकेण ।
वैरानुबन्धक्षुभितान्तरत्वा-
दुत्तङ्कनामा तमृषिः प्रपेदे ॥ ६२

उवाच चैनं नतपूर्व्वकाय-
माशीर्भिरुच्चैरभिनन्द्य पूर्व्वम् ।
साम्ये स्थितानामपि धैर्य्यलोपं
वैरं किलातिक्रमजं करोति ॥ ६३

तव पितरमुदारं तक्षकः क्ष्माप, साक्षा-
दशनिरिव महीध्रं धर्षयामास मूढः ।
द्रविणचयविसर्गैर्विप्रमप्यर्थमार्गात्
क्षितिपतिलकरक्षाबद्धकामं निषिध्य ॥ ७४

स खलु यदि न मन्दोऽवारयिष्यद्द्विजाग्र्यं
दशनमनु तदानीं क्षौणिपालं स एव ।
तरुमिव दववह्निज्वालयालीढमङ्गः
प्रबलबहुलशक्तिर्नूनमाजीवयिष्यत् ॥ ६५

परिभवति कृतान्सन्तस्तकेनापि दृष्टः
स्वमिति नवमवर्षं पश्यता व्याकुलेन।
प्रतिकरणसमर्थोवारितस्तेन विप्र-
स्तदहह परिलुप्तस्त्वत्पिताऽप्राप्तकालः॥ ६६
क्षितिपतिलक, तस्यावर्णराशिः खलाना-
मतिगुरुरवलेपः कीदृशः पश्य जातः।
अशमयदविलुप्तप्रक्रमं कीर्त्तिजालै—
र्धवलितजगदन्तं यद्वृथागर्व्वितोऽसौ॥ ६७
नरप, पितुरमित्रे क्रोधनः क्षत्रियः सन्
किमिति किमिति वैरं वीर, तस्मिन्न धत्से।
हुतवहमधि होतुं तं किल क्रूरबुद्धिं
चर सुचरितकृत्यः सर्पसत्राख्यसत्रम्॥ ६८
इत्याभाष्य व्रतिनि सुतरामाश्रमं स्वं प्रयाते
तीव्रक्रोधारुणितनयनस्तक्षकस्यापराधात्।
सम्भारान्ते स पुनरचिराद्ब्राह्मणैर्वेदविद्भिः
प्राप्तोदर्च्चैः क्षितिपतिरभूत् सर्पसत्राय दीक्षाम्॥ ६९
अथाह्वौषीत् सर्पान् हुतवहमुखे स क्रतुविधौ
तमिस्रायामग्नौ शलभनिवहानध्वग इव।
स्फुटन्तस्तेषान्तु ज्वलनतरसा भीममणयः
स्फुलिङ्गाभा दृष्टा दिशि दिशि पतन्तः पटुरुचः॥ ७०
प्रदीप्तोऽग्निः सार्द्धं नरपतिरुषा स्थण्डिलशयो-
ददाहोर्च्चैर्मन्त्रार्पितमहसः कुण्डलिगणान्।
इथैवेन्द्रं सान्द्रं शरणमुपपन्नो नरपतेः
पितुर्व्वैरी वक्रेरुपरि परिलब्धोऽथ ददृशे॥ ७१

अथास्तीकश्चित्रस्तुतिभिरभिसन्तोष्य नृपतिं
वरं लेभे तस्मात्सत्रविरतये सत्यवचसः ।
ततो मुक्ताः सर्पाः क्षितिपतिवषट्कारकमुखा-
गतत्रासा वह्नेरपि मुमुदिरे मन्त्रबलिनः ॥ ७२

हुतोच्छिष्टं सर्पव्रजमथ विरच्य क्षितिभृत-
स्तमः शिष्टं किञ्चिद्धिमकरकराद्भूधर इव ।
स सन्तुष्टः शिष्टाभिमतरुचिराशीर्भिरसकृ-
त्तमुच्चैरानन्दप्रचुरमभिनन्द्याश्रममगात् ॥ ७३

वैशम्पायनतः स कम्पितवपुःप्रत्यर्थिवीरव्रजः
शुश्रावोल्बणकिल्बिषैकहरणीं पुण्यां कथां भारतीम् ।
या व्यासेन विशेषतो विरचिता वेदार्थसार्थोत्तरा
पूर्व्वेषां किल सर्व्वगर्व्वदलनी कीर्त्तिश्च यशोज्ज्वला ॥ ७४

इति चन्द्रवंशे महाकाव्ये सर्पसत्रवर्णनोनाम
द्वाविंशः सर्गः ॥

---

## त्रयोविंशः सर्गः ।

स प्रक्रमानन्दितसर्व्वलोको-
लोकान्तरं कालवशात् प्रपन्नः ।
परोक्षभावं क्षितिपः प्रपेदे
किरीटयोगादिव चञ्चरीटः ॥ १

अथाभवत् पार्थिवचक्रवर्त्ती
ज्ञाती शतानीक इनैकतेजाः ।
स्फुरत् परानीकमनेकरूपै-
र्जेता मुहुः संयति यः पृषत्कैः ॥ २

स याज्ञवल्क्यादधिगम्य वेदं
कृपादथास्त्राण्यनिवारितास्त्रः ।
कुर्व्वन् परेषामवरोधशोकं
शशास राज्यं महनीयतेजाः ॥ ३

बभूव तस्योज्ज्वलदेहभाजः
सुतो विदेहाधिपतेः सुतायाम् ।
यो देहदीप्त्या दहनोपमेय-
स्तिरश्चकार त्रिदिवालयस्थान् ॥ ४

रजोविमुक्तः स विरक्तचेता-
निवेदितात्मा किल शौनकाय ।
तत्त्वावबोधक्षपितव्यलीको-
लेभे स्फुरन्निर्म्मलसत्यलोकम् ॥ ५

तस्यावसाने क्षितिशासनस्य
वसूपमेयो वसुधाऽऽधिपत्यम् ।
दत्तोऽश्वमेधादिपदः प्रपेदे
प्रीतैः सुरैर्दत्तवरोऽश्वमेधात् ॥ ६

धीरः प्रतीताध्वरसंविधानैः
पुरोधसां सोमरसासवेषु ।
मनांसि बध्नन्नकरोदमर्त्यान्
स मर्त्यवद्भूतलदीर्घवासान् ॥ ७

तस्यात्मजोऽभूदधिसीमकृष्णः
कृष्णोपमेयोऽप्यपकृष्णकर्म्मा ।
यः पश्यतां चेतसि दर्शनीय-
स्तृष्णां समावर्द्धयदीक्षणस्य ॥ ८

पुत्राध्वरप्राध्ययनैर्ऋणेभ्य-
स्त्रिभ्योऽपि निर्म्मुक्ततयाऽमलौजाः ।
निःशेषकर्त्तव्यतयेव सोऽभू-
द्धरातलावस्थितिनिर्व्यपेक्षः ॥ ९

सुतस्तदीयस्तु ततः प्रपेदे
कुलप्रदीपः कमलाभवक्त्रः ।
विधानपूर्व्वं विबुधोपमेयो-
बुधाग्रगण्यो वसुधापतित्वम् ॥ १०

स प्राप्य राज्यं द्विजराजकान्ति-
र्वीरव्रजानामविषह्यतेजाः ।
प्रह्लादयामास निजप्रजाली-
र्निरस्य वाणैर्द्विषतां प्रचारम् ॥ ११

अजीजनत् सज्जनवाञ्छनीय—
मलाञ्छनं चन्द्रमिव स्फुरन्तम् ।
बालं मृणालाधिकसौकुमार्य्यं
निचक्र,मार्य्यानुमतोपचारम् ॥ १२

विनीतमादिश्य तमात्मजातं
नृपः प्रजाक्षेमविधौ विधिज्ञः ।
आचारमुख्यैर्जरसोऽनुरूपं
चचार चौरप्रणयी वनेषु ॥ १३

स चापि वर्णाश्रमधर्म्मपाता
वर्णाश्रमाचारपरायणत्वात् ।
धर्म्माविरोधाधिगतार्थकामो-
मनीषिणां मानसकाङ्क्षितोऽभूत् ॥ १४

रोधःप्रपातावितगङ्गयोच्चै—
स्तरङ्गहस्तैरभिलक्ष्यमाणम् ।
सर्व्वन्नदीयं नगरन्तदन्त—
र्भुवं पवित्रीभवितु' विवेश ॥ १५

निवारयिष्यन् सुरनिम्नगाया-
दुर्व्वाररंहःप्रचुरप्रवाहम् ।
प्रजाऽऽवलीदुर्गतिकातरात्मा
बभूव भूपो विफलप्रयत्नः ॥ १६

तरङ्गिणीघोरतरङ्गविघ्ना
विशेषतः कातरतामुपेताः ।
प्रजास्तदा रक्षितुमक्षमोऽसौ
बभूव कामं विमनायमानः ॥ १७

परं प्रजारञ्जनमेव राज्ञो-
मनीषिणः कर्म समादिशन्ति।
आस्तां तदेतत्परिरक्षणं मे
मन्दस्य नाभूदपि धिग्धिगस्मान्॥ १८

प्रजाऽऽवलीः स्वा नरलोकपालो-
न रक्षितुं यो विपदः क्षमेत।
त्याज्याय तस्याहरतीव राज्यं
जरातुरस्येव नवं कलत्रम्॥ १९

इत्येवमन्तः समतप्यतासौ
प्रजाकुलक्लेशविशेषदीनः।
राजन्वती यत् परिभूयते भू-
स्तदेव दैवस्य बलं व्यनक्ति॥ २०॥ विशेषकम्।

सर्वप्रयत्नैरपि यत्र साध्यं
व्यलीकमस्मिन्नपि स प्रपेदे।
भूपालभावव्यपदेशहृष्टाः
खलाः विलोभैर्व्यथयन्ति लोकान्॥ २१

ततः स कोशाम्ब्यभिधामुदारां
पुरीं परास्कन्दभयैर्विमुक्ताम्।
प्रासादसन्तर्जितवैजयन्तां
पौरैः समस्तैः सहितोऽध्युवास॥ २२

तस्यानुकूल्यात् क्षितिपस्य लोकाः
प्रजाव्यलीकाकुलमानसस्य।
दुरन्तदैवव्यसनातिपातं
ते श्लाघमानाः स्म भृशं सहन्ते॥ २३

अथामरस्त्रीस्तनमण्डनानां
कस्तूरिकाया मकरीविशेषम् ।
स पारिजातस्रजमुज्ज्वलश्री-
र्व्विभ्रमशोभद्ग्रथयाम्बभूव ॥ २४

ततो महीमर्णवमेखलान्तां
तस्योष्णनामा तनयः प्रपेदे ।
योऽभूत् कवोष्णैः क्षतजैः परेषां
वीरश्रियस्तर्पयितैकवीरः ॥ २५

तस्याप्यभूच्चित्ररथाभिधानः
पुत्रश्चरित्रेण सदा पवित्रः ।
रथेन चित्रेण विचित्रयोधी
चित्रौजसश्चित्ररथादनूनः ॥ २६

निधाय तस्मिन् स धुरं धरित्र्या-
धीरे विभुर्भूधरतुल्यसारे ।
तत्त्वावबोधाय विशुद्धसत्त्वो-
धीमानरण्येषु धियं व्यधत्त ॥ २७

कालेन तस्मिन्नपि नाकमेते
तदात्मजो राजपदं बुभोज ।
रथावसानः शुचिरेव नाम्ना
योऽभूत् शुचिष्क्षोमसमानतेजाः ॥ २८

विभुज्य राज्यं विषयेष्वतृष्णो-
वृष्णिप्रवीराश्रितमानसोऽसौ ।
अलम्भयत् तत्समात्मजातं
भूष्णुं नरेन्द्रं किल वृष्णिमन्तम् ॥ २९

स शास्त्रदृष्टेन पथाऽप्रमत्तः
सत्त्वप्रधानः प्रधनं विनैव ।
प्रजा निरस्तप्रतिपक्षशङ्का-
ररक्ष रक्षासु विचक्षणत्वात् ॥ १०

तस्यात्मजं वीर्य्यवतां पुरोगं
कान्तस्फुरत्कान्तिविशेषभाजम् ।
सुषेणमेणीनयनाभिराम-
मुदारसत्त्वं महिषी सुषाव ॥ ११

विनीय नीतिप्रचुरैस्समुखै-
रुच्चावचैरध्ययनैर्नृवीरः ।
शिल्पीव रासायनिकैः प्रयोगै-
र्वैज्ञानिकं वस्तु विशोध्य रेजे ॥ १२

तस्मिन् प्रभुत्वं प्रभविष्णुशीले
निधाय बोधैर्विबुधोपमेये ।
चतुःसमुद्रोर्म्मिपविच्चिताया-
भुवः स भूभृत् त्रिदिवं गतोऽभूत् ॥ १३

समाददानोऽपि करं स राजा
प्रजाकदम्बादवलम्ब्य नीतिम् ।
सहस्ररश्मेरिव शीतरश्मि-
र्मनोज्ञ एवास जनस्य भूयः ॥ १४

वीरः सुनासीरसमः परेषां
मिथः सुरश्लोकथितप्रभावः ।
सुनीथनामा पथि सुस्थितात्मा
सदात्मजस्तत्परमाप राज्यम् ॥ १५

सोऽप्यात्मवेत्तारमथात्मजातं
राज्येऽभिषिच्याप तपोवनान्तम्।
ऋचामभिज्ञं यमचिन्त्यशक्तिं
वदन्ति नाम्ना ऋचमेव सन्तः॥ ३६

खेदं प्रजानां परिपालनोत्थं
न प्राप स प्रापिततत्प्रतिष्ठः।
प्रतापमात्रावनतप्रतीप-
भूपालहत्याकुलितो न जन्यैः॥ ३७

इन्द्रादिदेवान् नरदेवचन्द्रः
समाह्वयामास मखेष्वजस्रम्।
स देवलोके परतो निवत्स्यन्
स्वलोकवासानिव तांश्चकार॥ ३८

स सन्ततक्रत्वर्जितकाम्यलोकां
मनुष्यदेवो दिवमध्युवास।
भुवं स्वपित्रोपनतां विशाला-
मम्भोधिवेलावलयां पुरेव॥ ३९

ततोऽभवत् चन्द्रकुलाग्रगण्यः
सूनुस्तदीयो विनयप्रधानः।
नृचक्षुरक्षोभितचारुचेता-
नृणां नवं चक्षुरिव क्षितीशः॥ ४०

सम्वर्तकादेरथ दुर्निवारै-
र्मेघैः पुरोवातसखैरजस्रम्।
इन्द्रः क्षितीन्द्रस्य पदे ववर्ष
नलक्ष्मनक्ताङ्‌दिवमीर्षयेव॥ ४१

ततः सुतुङ्गाचलशृङ्गजाला-
ज्जलाप्लुताऽभूदितरत्र भूमिः ।
लोकस्य सन्मार्गविलङ्घनोत्थं
प्रक्षालयन्तीव मलं समस्तम् ॥ ४२

उपस्थितोमूर्त्तइवाम्बुराशि-
रासीज्जलौघश्चलतोऽविरामः ।
स्फुरत्तरङ्गाधरमाप्तपानात्
सर्व्वात्मनाऽऽलिङ्गितुमङ्गनाः स्वाः ॥ ४३

मनुष्यपश्वादिशरीरजाले-
रोघालिसंघातवशाद् विलोलैः ।
उच्चावचैरुच्चलितो जलौघो-
यादोभिरुच्चैरिव लक्ष्यते स्म ॥ ४४

अप्याकरैकप्रभवाणि लोके
रत्नानि रत्नाकरदुर्लभानि ।
तस्मिन् स्फुरन्ति स्म जलप्रपूरे
विकीर्य्यमाणानि किलोर्म्मिजालैः ॥ ४५

प्रासादशृङ्गाणि तरङ्गसंघै-
र्मुहुर्मुहुश्चाभिहतान्यवापुः ।
भित्त्वोर्म्मिमालिप्रचुरोर्म्मिमालां
शैलोत्तमानां श्रियमुत्थितानाम् ॥ ४

गजेन्द्रदेहा विपुलाः स्फुरन्तो-
मध्येजलं द्वीपतुलामवापुः ।
आश्रित्य यानुच्छ्रितपृष्ठदेशान्
मर्त्यं किल प्राणभृतो ऽप्यतिष्ठन् ॥ ५७

शैवालजालैर्मलवद्भिरुच्चैः
प्रापत् समाच्छादितसर्व्वदेहम्।
प्रभ्रष्टरम्याभरणं गजाश्वं
स्थलस्थितस्तोयगजाश्वभावम्॥ ४८

तरङ्गराशिः परिपीतकान्त्या
स वैजयन्त्या सहितोबभासे।
शिखासमाश्लिष्ट इवौर्व्ववह्ने-
र्यथार्थवारांनिधिघोरभङ्गः॥ ४९

नृपस्तु तस्मिन् व्यसनातिपाते
काश्मीरदेशे निजराजधानीम्।
चकार कारुप्रवरैकशिल्पं
ह्रसत्यनाहार्य्यगुणैरनेकैः॥ ५०

मनोज्ञतीरोत्तरसन्निवेशा
तुषारशुभ्राम्बु सदा वहन्ती।
यादोभिरत्यन्तविवर्जितत्वाद्
यत्रापगाऽऽपद्गृहदीर्घिकात्वम्॥ ५१

यथैव मध्यादरणेर्धराया-
गर्भात्तथा मन्त्रवदुन्मिषन्तः।
स्वयम्भुवो हव्यभुजो द्विजानां
गृह्णन्ति यत्रोज्ज्वलहव्यजालम्॥ ५२

अनन्यसाधारणमेव पृथ्व्यां
स्त्रीणां प्रियं कुङ्कुमपुष्पजालम्।
यत्रोज्ज्वलामोदविशेषयोगा-
दादीपयत्यात्मभुवं जनानाम्॥ ५३

तुषारजालावृततुङ्गशृङ्गा
यत्राभितो भूमिभृतः स्फुरन्ति।
शुभ्रांशुकाच्छादनमुद्वहन्तः
पीनस्तनास्तच्चरितामिवोच्चैः॥ ५४

द्राक्षारसोत्थं मधु निर्व्विरोधा-
न्मुहुः पिबन् यत्र च कामिलोकः।
गुणातिरेकात् किल निर्व्यपेक्षो-
बभूव कान्ताऽधरपल्लवेपि॥ ५५

यत्राङ्गनास्तुङ्गविलासलोलाः
कटाक्षविक्षेपणकर्म्मदक्षाः।
चातुर्य्यशून्यं स्थिरलोचनत्वात्
सुराङ्गनाप्रातमतीत्य तस्थुः॥ ५६

यदङ्गनारत्नमुखारविन्दा-
न्यालोक्य लोलेक्षणषट्पदानि।
शङ्के मिलद्विस्मयसंकुलत्वा—
न्निमेषशून्यास्त्रिदशा बभूवुः॥ ५७

स तत्र काश्मीरवराङ्गनानां
विलोलनेत्रैः परिपीयमाणः।
मर्त्योऽप्यमर्त्यानहसत् प्रमुग्धा-
नविभ्रमैरप्सरसां विलासैः॥ ५८

नीतोऽमरैर्मत्सरितैरिवाभूत्
स नाकलोकं नरलोकपालः।
दुःखाकरोत्येव किलाल्पसत्त्वं
हीनश्रियं श्रीरधिका परस्य॥ ५९

सुखोचितस्तस्य सुतस्ततोऽभूत्
सुखावलो नाम बली नृपालः ।
रूपैर्ब्बलैः खल्वपि योऽबलानां
बलाधिकानाञ्च मुदञ्चकार ॥ ६०

तस्यापि विश्वावसुगीतकीर्त्तिः
सत्कीर्त्तिशेषस्य सुतः शशास ।
लोकानलोकोचितसंविधानैः
परिप्लवो नाम परिप्लवाक्षः ॥ ६१

योऽभूत् प्रजानां विपदर्णवान्तः
परिप्लवः प्लावितदिग्विभागः ।
जले रिपुस्त्रीकुललोचनोत्थै-
र्दीनाम्बुभिश्चाम्बुदनिर्व्यपेक्षः ॥ ६२

सूनुस्तदीयः सुनयाभिधानो-
नेता जनानां सुनयैरनेकैः ।
तस्मात् परं प्राप धराऽऽधिपत्यं
शिलीमुखैर्व्वारितवीरलोकः ॥ ६३

तस्यापि मेधाव्यभिधः सुधीरो-
मेधाविनामभ्यधिकः कुमारः ।
तत् प्राज्यराज्यं प्रथतः प्रपेदे
बाह्वोर्ब्बलैरेव निवारितारिः ॥ ६४

ततोऽस्य नीजास्तनयस्तदीयो-
नृपञ्जयो नाम नृपो बभूव ।
अरातिपुञ्जस्य रणे निहन्ता
यः केशरीवोन्मदकुञ्जराणाम् ॥ ६५

ततः परं तत्सुतमुन्मदानां
प्रमोदमूलं प्रमदाऽऽवलीनां ।
मृदुं प्रपेदे मृदुलैर्विलासै-
र्विलासिनीवोज्ज्वलवंशलक्ष्मीः ॥ ६६

तिग्मस्ततस्तिग्मकरोपमेयः
सूनुस्तदीयो विनयप्रधानः ।
स्थिरोदयैरस्तसमस्तदोषै-
र्नयैः प्रजानामनयं निरास्थत् ॥ ६७

चिराय तस्मिन् सुरलोकमाप्ते
बृहद्रथस्तत्तनयो नृपोऽभूत् ।
रथैर्बृहद्भिर्वितथान्यतेजा-
बृहद्रथानामपि यो विनेता ॥ ६८

तस्याभवत् सूनुरदीनसत्त्वो-
वसूपमानो वसुदाननामा ।
वसुप्रदानैर्यमदीनलोकं
वसुन्धराऽऽपत् पितरि प्रलीने ॥ ६९

अनीकिनीनामनिशं विनेता
ततः शतानीक इति प्रसिद्धः ।
शतक्रतुप्रक्रमणाभिराम-
स्तस्यात्मजः प्राज्यमवाप राज्यम् ॥ ७०

बभूव तस्याप्युदयप्रदीप्तः
सदैव साक्षादुदयास्तहीनः ।
कालेन नाम्नोदयनस्तदाभू-
त्तेजोनिधिर्भानुरिव द्वितीयः ॥ ७१

गुरुस्तयोरस्तमितोमनस्वी
देवाधिपात् साप्तपदीनमाप।
सूनुस्तु तत्स्थानरलोकपाला-
हलिं बलारातिरिव प्रपेदे॥ ७२

अहीननामानमसुष्य सूनु-
मस्मिन् सुरस्त्रीस्मितविस्मितेऽगात्।
अहीनरत्नाभरणा नतभ्रू-
र्नवेव भूः काममहीनसत्वम्॥ ७३

स खण्डपाणिं तनयं रिपूणां
शिलीमुखैः खण्डितचण्डभावम्।
प्रापय्य भूदण्डधरत्वमुच्चै-
राखण्डलस्यासनमाससाद॥ ७४

लेभे स पुत्रं नवमित्रकान्तिं
वृत्रासुरारिप्रतिमं रणेषु।
अमित्रवित्रासनचित्रवाणं
नाम्ना यमाहुर्निरमित्रमेव॥ ७५

स खलु पितरि शान्ते शान्तिमानन्तरज्ञः
कुवलयदलकल्पस्निग्धलोलेक्षणानाम्।
कुवलयमथ लब्ध्वा लीलयाऽऽखण्डलौजा-
स्तरुणमिव कलत्रं पालयामास लोलम्॥ ७६

इति चन्द्रवंशे महाकाव्ये वंशानुक्रमणोनाम
त्रयोविंशः सर्गः।

---

## चतुर्व्विंशः सर्गः।

रत्नजालमथ सागराम्बरा
नीतिरप्यतितरां मस्तत् फलम्।
तस्य नाम महिषी च नामतः
क्षेमकं सुतमसूत काङ्क्षितम्॥ १

तं विनीय विनयान्वितः कृती
लोकवृत्तकुशलः क्षितीश्वरः।
देवलोकमविशत् कलानिधि-
स्तिग्मरश्मिमिव तर्पितामरः॥ २

प्राप राज्यमथ स द्विजातिभिः
शास्त्रदृष्टविधिना कृतक्रियः।
प्राप्य चैतदभवद्विशाम्पतिः
पूर्व्वशैलमिव भानुरुज्ज्वलः॥ ३

पूर्णकोशवलयं सुरक्षितं
लुप्तशत्रुकुलविग्रहाग्रहम्।
रक्तवीरपुरुषं चतानयं
केवलं स बुभुजे भुवस्तलम्॥ ४

मन्त्रयोगमधिगम्य मन्त्रिणां
दुर्लभं स फलमाप नित्यशः।
रत्नराशिपरिपूरिताकराः
कोशमस्य पुनरप्यवर्द्धयन्॥ ५

कर्षिताऽल्पमपि भूमिरुर्व्वरा
शस्यमस्य विषये ददौ बहु।
दुर्गजालमपि दुर्गमं परैः
पूर्णमास सकलास्त्रवस्तुभिः॥ ६

सेतुरप्यतितरां सुरक्षितो-
न क्षतो न शिथिलो न बन्धुरः।
संस्कृतोह्यधिकृतैरनारतं
जीर्णतापरिचितो न जालभूत्॥ ७

सावधानमभितोऽभिरक्षित-
स्तस्य वीरपुरुषैर्वणिक्पथः।
सुप्रशस्तपरिसंस्कृतोऽभवत्
सिक्तरमानरुचिरोऽध्वगाश्रयः॥ ८

नातियत्नमधिकारिभिर्धृता:
कुञ्जरा न दलिताञ्जनप्रभाः।
तस्य न स्म नृपतेर्म्मदोज्ज्वलाः
पूरयन्ति गजमन्दिरान्तरम्॥ ९

शुन्यमास किमपि क्षमाभुजः
सञ्चयस्य न निवेशनं पदे।
रत्नजालकिरणैरलङ्कृता—
स्तस्य रेजुरकलङ्किताः प्रजाः॥ १०

शत्रवोऽस्य गुरुणैव निर्जिता—
नाममात्रमवनीतलेश्वराः।
क्षीणशक्तिबलशून्यमण्डलाः
केवलं बलिमदुर्भयाकुलाः॥ ११

सन्धिबन्धपरिमेयसैनिका—
नातिपूर्णनिजकोशसञ्चयाः ।
मित्रराजनिवहा विशाम्पते—
र्नीतिमात्रबलिनः किलाभवन् ॥ १२

नीतिमार्गनिपुणस्य भूपते-
र्वीतवैरिभयसुस्थिताः प्रजाः ।
धर्म्ममर्थमथ काममादरात्
प्राप्तकालमनघाः सिषेविरे ॥ १३

दीक्षितः क्रतुविधौ क्षितीश्वरः
शास्त्रदृष्टविधिना पुरोधसः ।
सम्मतेन धनराशिमुज्ज्वलं
सोऽर्थिसादकृत कृत्यवित्तमः ॥ १४

आश्रवस्य सततं विपश्चितां
शास्त्रतत्त्वमधिजग्मुषस्तथा ।
चस्खलेऽस्य मनसा महत्पथात्
को हि दैवमतिवर्त्तितुं क्षमः ॥ १५

स क्रमेण शिथिलादरो नये
भूपतिर्विषयलङ्घितोऽभवत् ।
पादपं हि फलपुष्पशोभिनं
पातयत्यतितरां समीरणः ॥ १६

स त्वमात्यमथ नीतिकोविदं
शक्तिजालपरिदीपितं नृपः ।
आत्मनः समकरोदनन्तरं
पालयन्तमपकल्मषाः प्रजाः ॥ १७

एवमात्मकरणीयमुत्सुकः
सन्निधाय सचिवेषु दुर्म्मनाः।
इन्द्रियोद्भवसुखं स केवलं
सेवते स्म मृगलोचनासखः॥ १८

कामयान कमलायतेक्षणा
निर्व्विघ्नमतितरां वरस्त्रियः।
नाप काञ्चिदपि निर्वृतिं मुहु—
र्लोभलोलहृदयः क्लमं वहन्॥ १९

योषिदेकनिरतस्य कामिन-
स्तस्य तेजयितुमालसम्भवम्।
विप्रलम्भलवलम्भनक्षमो—
नूनमाविरभवद्दिनोदयः॥ २०

दीर्घकालमिव तन्मृगीदृशां
केलिजालमवलोक्य लज्जिता।
रात्रिरिन्दुवदनाऽप्यधोमुखी
रत्नदीपभगणं न्यषेधयत्॥ २१

उष्णरश्मिरबलाभुजान्तरा-
लिङ्गनं क्षितिपतेरिवाक्षमः।
सोढुमूढपरिलोहितद्युतिः
प्रादुरास किल तद्विलोपयन्॥ २२

तस्य पूर्व्वमुरुपस्य सर्व्वतः
कोमलस्य प्रग्रलाञ्छनस्य सः।
लाञ्छनं न लवमप्ययोजसः
सावशेषमकरोद्दिवेश्वरः॥ २३

तस्य केलिरसदर्शनोद्भव-
ह्रीर्भ्रमस्यविकलः कलानिधिः ।
निर्ज्जितश्च दिवसेशतेजसा
क्वापि दुःखमलिनो व्यलीयत ॥ २४

कोमलेन दिनकृन्मरीचिना
प्रातरुद्यदनवद्यमारुतः ।
तस्य जालविवरैर्गृहागतः
सुप्तयोषिदलकानचालयत् ॥ २५

ताः कथञ्चिदथ कुञ्चितभ्रुवः
प्रातरित्यतितरां त्रपाकुलाः ।
तं विसृज्य परिरम्भणोत्सुकं
प्राद्रवन्त ललना गृहान्तरम् ॥ २६

शून्यकेलिनिलये स योषितां
श्लेषलौल्यविकलान्तरो युवा ।
चिन्तितोपनतवामलोचना—
सङ्गमाय शयनोत्सुकोऽभवत् ॥ २७

वासरेषु कुलयोषितामसौ
सङ्गमाय विफलङ्कृतः श्रमम् ।
नर्त्तकीषु रमते स्म मानुषो-
भास्करास्त इव दीपराजिषु ॥ २८

हावभावशबलैर्व्विलोभित-
स्तद्गणस्य नृपतिर्व्विचेष्टितैः ।
स्वावरोधमपि तद्वशश्चियद्-
यामिनीषु निभृतं त्रपाऽऽकुलम् ॥ २९

लज्जिताः कथमपि प्रलोभनै-
र्लुप्तदीपनिलयान्तरे मिथः ।
कामिनाऽथ कुलकामिनीजनाः
कारिताः पदममीषु वस्तुषु ॥ ३०

भूयएव स युवा कुलाङ्गना-
निर्व्यलीकरतकेलिलालसः ।
स्वे पदे मदवशादपाहरद्-
भर्तृमात्रनिरता अपि स्त्रियः ॥ ३१

अङ्किता मदनभोगलाञ्छनैः
प्रातरस्य निलयात् कुलाबलाः ।
मूर्त्तिमत्य इव भाग्यसम्पदो-
दुर्नयैकविकला विनिर्ययुः ॥ ३२

योषितां स निकरैः स्मरातुरो-
वासरे परिणमत्यथागमत् ।
आलयोपवनमाहृतैर्वधू-
वेशमाशु कुसुमैर्विधित्सया ॥ ३३

योषितामरुणलोहितैः करैः
पुष्पलावमभिसङ्गतैस्तरुः ।
उल्लसद्भिरिव बालपल्लवै-
स्तत्क्षणं स नितरामलक्ष्यत ॥ ३४

पुष्पजालमथ मौक्तिकोज्ज्वलं
फुल्लमालवितुमिच्छुरादरात् ।
पाणिपल्लवरुचा विलासिनी
काऽप्यभूत् प्रतिपदं प्रतारिता ॥ ३५

स्त्रीषु पुष्पलवचञ्चलालयः
स्मेरवक्त्रधुतपाणिषु स्फुटम् ।
वातलोलनवपल्लवोल्लस-
च्चारुपुष्पलतिकास्विवापतन् ॥ ३६

फुल्लपुष्पमकरन्दलोलुपः
पक्वबिम्बफलपाटलद्युतिम् ।
निर्दशन् मधुकरः प्रियाऽधरं
मानसं समदुनोद्विलासिनः ॥ ३७

प्रेयसीवदनपद्मषट्पदः
पुष्पलावमपि कर्तुमुत्सुकः ।
लोलचित्तवशतः समाचिनोत्
केवलं स खलु बालपल्लवान् ॥ ३८

स ग्रहीतुमथ वल्लरीस्थितं
सुन्दरस्तवकवृन्दमुत्सुकः ।
रूपसाम्यपरिवञ्चितोऽस्पृशत्
प्रार्थनीयदयितास्तनान्तरम् ॥ ३९

स स्वहस्तरचितस्रजा प्रियां
मण्डयन्नतितरां रसालसः ।
खण्डिताचरणताड़ितोऽभवद्-
द्रागशोकतरुतुल्य दोहदः ॥ ४०

पुष्परेणुपरिपीड़ितेक्षणां
कामपि स्मयवतीं विधाय सः ।
तत्क्षणक्षमपरां नितम्बिनीं
संचुचुम्ब किल लम्बिताधरः ॥ ४१

पल्लवप्रसवपक्षिभिस्तैरभूत्
शोभिताऽतिनिचिता वनस्थली ।
भानुरश्मिशकलैरिवोज्ज्वलै—
र्विम्बितैर्जलधिचारुवल्लभा ॥ ४२

चक्रवाकमिथुनं वियोजयन्
कामिलोकमबलाभिरुत्सुकम् ।
योजयंश्च किल वासरेश्वरो—
लम्बमानकरणस्तदाऽभवत् ॥ ४३

पश्चिमाम्बरगतो दिवाकरो-
रत्नदीप इव कान्तदीधितिः ।
उज्ज्वलत्वमपहाय लोहितो-
वारुणीपरिचयादिवाभवत् ॥ ४४

स्वप्रतापमिवहोज्ज्वलोऽपि सन्
अन्ववायपरिशुद्धिमानपि ।
वारुणीमुपगतः किलापत—
त्तेजसोऽस्तमधिगम्य सोऽप्यधः ॥ ४५

रक्तदेहरुचिरो दिवाकरः
सन्ध्यया च खलु सङ्गतोऽभवत् ।
देवराजपरिसेविताऽपि दिक्
कामिनीव मलिना मनस्विनी ॥ ४६

नातिफुल्लमलसाञ्जनं मुखं
सोममध्य वयमध्यलोकयत् ।
षट्पदालिकलगुञ्जितच्छलात्
क्रन्दनैकविकलां सरोजिनीम् ॥ ४७

तिग्मरोचिषि गते स्वदृश्यतां
कामिलोक इव बालचन्द्रमाः ।
नीलवस्त्रप्रतिमन्तमः करैः
पूर्व्वदिग्वदनतोऽप्यपाहरत् ॥ ४८

सन्ध्यया स खलु वन्ध्ययाऽगमद्-
यत्नभानुरचिरेण सङ्गतम् ।
पापराशिरिव तत्र मूर्त्तिमान्
प्रादुरास नितरां तमोव्रजः ॥ ४९

तद्विलोक्य पतगाः क्षपाचरा-
भोग्यवस्तुपरिमार्गणोत्सुकाः ।
आलयादकलितायतिक्रमाः
कामिनश्च सममेव निर्ययुः ॥ ५०

चारुकेलिगृहमप्यलंकृतं
पार्थिवः पृथुनितम्बशालिनीः ।
आजगाम जगदेकसुन्दरी-
र्लोलवामनयना विलोभयन् ॥ ५१

फुल्लपुष्पफलजालसंकुलां
पानभूमिमविशत् प्रियासखः ।
यां किलार्कंकुलशोभिताम्बरां
कौमुदीश इव कौमुदीसखः ॥ ५२

कामिनीभिरभितोऽपि शोभिता
पार्थिवेन खलु सोज्ज्वलाऽभवत् ।
फुल्लचारुकुसुमा कुमुद्वती
निम्नगेव प्रतिबिम्बितेन्दुना ॥ ५३

तत्र वामनयनामुखार्पितं
केवलं न मधु लोभकारणम्।
दुर्लभं तदधरस्य निर्भरं
संपिबन् स मुमुदे मुहुर्मुहुः॥ ५४

प्रेयसीवदनचन्द्रबिम्बितं
तत्प्रदत्तचषकं नृपः पिबन्।
सार्गलामृतपिपासया मुहु—
र्व्याकुलान् समहसद्दिवौकसः॥ ५५

तद्विशेषमदकारणं वचः
सन्निपीय मुहुरुत्सुकान्तरः।
मद्यमुन्मदवतीर्मृगीदृशो—
लुप्तलौल्यरुचिरेक्षणः पपौ॥ ५६

सामि पीतमनुपीय भामिनी
वल्लभस्य चषकं मदालसा।
ओष्ठदंशरसिका न्यवारय—
न्मद्यपानमनु दंशलालसाम्॥ ५७

स्वेदबिन्दुनिवहैर्मुखेन्दवो-
मौक्तिकोज्ज्वलनिभैर्मृगीदृशाम्।
मद्य पानमनुसम्भृतैश्चिताः
कामिनामतितरां चकाशिरे॥ ५८

या पराऽनुसरणेन कामिनं
मानिनी प्रणतमप्यलङ्घयत्।
सैव मद्यतरलान्तरा वधू-
स्तत्प्रकर्ष मदतर्जितत्रपा॥ ५९

तं मदाविलमना विलासिनी
हावभावकुशलान्ययोषिता ।
सङ्गमय्य हृदयङ्गमौजसं
प्रीतिमाप परमां वराङ्गना ॥ ६०

चुम्बनोत्कमभिकं पुराऽर्थिता
याऽम्बरावृतमुखी न्यवारयत् ।
मद्यपानगलितत्रपा त्वसौ
तं चुचुम्ब सरसं नितम्बिनी ॥ ६१

तं कठोरविपुलस्तनैः स्त्रियो-
वक्षसि च्छतनया व्यताडयन् ।
कण्ठपीडनिविडोपगूहनै-
र्या विदग्धरमणीष्वपश्चिमाः ॥ ६२

एवमस्तविनयो विशाम्पतिः
काममास्तरतकेलिलालसः ।
नित्यमेव नवभोगतत्परोऽ-
प्याप नैव परितृप्तिमात्मनः ॥ ६३

सङ्गमेव सममङ्गनाजनै-
श्चिन्तयन्नतितरां नृपासनम् ।
प्राप्य जातु प्रकृतीरवेक्षितुं
काममास स निमीलितेक्षणः ॥ ६४

आदिदेश विषयस्य गौरवा
दस्तनोति यदपि श्रुतात्मना ।
आगमापसदवत्तदप्यभूत्
पीडनाय परमात्मसेविनाम् ॥ ६५

केवलं न कुलजाप्रधर्षणा-
दुर्विचारपरिशीलनादपि ।
कामिनः स्म जनताऽपरज्यते
स्त्रीव वज्रपरुषान्तरात् शठात् ॥ ६६

स्तोकदृष्टनरलोकपालतः
सत्पथास्खलिततो निवर्त्तितम् ।
नित्यदृष्टसचिवाय गौरवं
पार्थिवप्रकृतया वितेनिरे ॥ ६७

साम्राज्यं स्थिरपदमप्यनार्यवृत्ते
भूपाले व्यसनरुचौ भृशं चकम्प ।
उच्चैस्तत्सचिवगुणैर्महानुभावैः
शान्तोपप्लवरुचिरं पुनर्दिदीपे ॥ ६८

तं प्राप्य नीतिनिपुणं नवशासितारं
निर्व्वारितानयभराऽथ वसुधराऽभूत् ।
अल्पैरहोभिरपि चापदनल्पलक्ष्मीम्
प्रज्ञा हि साधनमलौकिकमाहुरार्याः ॥ ६९

सिद्धान्तवागीशपदप्रतिष्ठो
राधादिकान्तो द्विजवर्य्य आसीत् ।
तदात्मजातः किल चन्द्रकान्तः
काव्यं तदेतद्रचयाञ्चकार ॥ ७०

नगरं सेरपुराख्यं कैकयविषयेऽयदस्ति विख्यातम् ।
तद्वास्तव्यादेतद्ब्रह्ममयीगर्भसम्भवादासीत् ॥ ७१

सर्गस्थितिप्रत्यवहारहेतौ
अलोकसामान्यनयप्रवृत्तौ ।
दोषाकरेऽप्यादरमादधाने
समर्पितं काव्यमिदं स्मरारौ ॥ ७२

सत्यपि दोषकलापे गुणलेश निबद्धपक्षपातानाम् ।
जनयतु विदुषां तोषं कृतिरेषा चन्द्रकान्तस्य ॥ ७३

अन्ध इव स्फुटदोषे गुणेषु विरलेषु वैनतेय इव ।
एवं शीलाः सतो भवन्ति वसुधातले नमस्तस्मै ॥ ७४

इति चन्द्रवंशे महाकाव्ये क्षेमकवर्णनो नाम
चतुर्विंश: सर्ग: ।

अत्रैव शिवम् ।

---



# शुद्धिपत्रम् ।

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| मन्त्रोषधि | मन्त्रौषधि | १ | ११ |
| दातोज्वल | दातोज्ज्वल | २ | १७ |
| सीमन्त | सीमान्त | ४ | २१ |
| गणोत्तरे | गुणोत्तरे | ६ | ४ |
| विन्दूज्वल | विन्दूज्ज्वल | ८ | ८ |
| रप्रभेयौ | रप्रमेयौ | १० | १६ |
| स्ततङ्गं | स्तरङ्गं | १० | २२ |
| प्रतिद्वन्दिनि | प्रतिद्वन्द्विनि | १३ | १० |
| पन | पुन | १४ | १८ |
| पल्नव | पल्लव | १५ | ७ |
| विनिग्रस्य | विनिर्गम्य | १५ | १७ |
| न्तदाल्लोकन | न्वदालोकन | १५ | २२ |
| छन्दय | च्छन्दय | १६ | ७ |
| छाये | च्छाये | २३ | १७ |
| द्वन्द | द्वन्द्व | ३१ | १७ |
| गत | गता | ३१ | १९ |

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| स्तनयंद्वयं | स्तनयद्वयं | ३६ | २१ |
| पराहृत्य | पराहृत्य | ३८ | ३ |
| विवस्वद्जस्रै: | विवस्वदस्रै: | ४३ | १५ |
| राजपुरेव | राजापुरेव | ५३ | ८ |
| पल्वला | पल्लवा | ५९ | ५ |
| इन्दुकान्ति* | इन्दुकान्त | ६३ | १५ |
| सुत्कमनसा* | सुत्सुकमना | ६४ | ११ |
| लच्य | लक्ष | ६५ | १३ |
| अहन्द | अहन्ह | ७२ | ९ |
| ज्वलत् | ज्ज्वलत् | ७५ | ११ |
| घेम् | घन् | ७५ | १५ |
| सखो | सखी | ७८ | १७ |
| ऋच्वीं | ऋज्वीं | ८८ | १७ |
| भोच्यसि* | प्राप्स्यसि | ८९ | १६ |
| ग्रोभेव | ग्रोभेव | ९० | २ |
| वलामु | वलासु | ९१ | १२ |
| जाज्ज्वल्यते | जाज्वल्यते | ९२ | १२ |
| प्रयात: | प्रजात: | ९६ | १३ |
| औत्प्रप्तिको | औत्पातिको | १०० | ३ |
| स्तत्व | स्तत्त्व | १०० | ६ |
| शुभ्रा* | शुभ्रा | १०१ | २४ |

* एतच्चिह्नाङ्किताः पाठाः परिवर्त्तिताः।

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| वायोधनेषु* | वायोधने स्म | १०३ | ८ |
| गन्ता | गण्डा | १०३ | २० |
| करोज्वललात् | करोज्ज्वललात् | १०५ | १८ |
| तुरङ्गमानां | तुरङ्गमाणां | १०६ | ५ |
| र्व्वरुथिनो | वरूथिनी | १०६ | ८ |
| किङ्किनीकम् | किङ्किनीकं | १०९ | २ |
| प्रर | पर | १०९ | ५ |
| स्तम्भेरमं | स्तम्बेरमं | १०९ | २२ |
| प्रभुना | प्रभुणा | ११० | १९ |
| दष्ट्रा | दंष्ट्रा | ११४ | २ |
| प्रभ्रम | भ्रम | ११९ | ७ |
| तिभ | भिभ | १२० | ११ |
| सख्वाः | मखाः | १२४ | ८ |
| भवत्या* | बभूवा | १२५ | १२ |
| ऊर्म्मि, द्रषा | ऊर्म्मि, द्रवा | १२६ | ९ |
| स्रुभि | सुभि | १२६ | १२ |
| वानिमीनाम् | वाणिनीनाम् | १२७ | २ |
| काङ्गनीय | काङ्गणीय | १२७ | ७ |
| स्तम्भे | स्तम्बे | १३१ | २४ |
| बढ़ो | रूढ़ो | १३२ | ३ |
| लब्धा | लब्धा | १३३ | ४ |
| प्रभावेन | प्रभावेण | १३५ | १७ |
| पारतन्त्र्यं | पारतन्त्र्यं | १४१।१४२ | १२।२ |

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ज्वल | ज्ज्वल | १४५ | २१ |
| पल्लव | पल्लव | १४५ | २३ |
| पराधनो | पराधत: | १४८ | १ |
| मुज्जल | मुज्ज्वल | १४८ | २२ |
| अमुङ्क्त | अभुङ्क्त | १५० | ११ |
| संशनात् | शंसनात् | १५२ | ३ |
| चेतमा | चेतसो | २५२ | ७ |
| प्रनुन्न | प्रणुन्न | १६० | ८ |
| भुभृ | भूभृ | १६३ | २४ |
| मैन्त्री | मैन्त्री | १६३ | २२ |
| पङ्कजा | पङ्कजा | १६८ | ६ |
| महीभ्रत: | महीभृत: | १७१ | १४ |
| निशिथिनी | निशीथिनी | १७२ | २ |
| श्रुति: | स्तुति: | १४५ | १४ |
| अलताङ्कृता | अलङ्कृता | १७७ | ६ |
| ऽासु | ऽप्सु | १७७ | १६ |
| कान्तिकाति | कान्तिमन्ति | १८५ | २ |
| गुरुवो | गुरवो | १८५ | १७ |
| सन्निधस्य | मन्निधस्य | १८८ | १६ |
| मिवान्तरम् | मिवात्मन: | १९० | ३ |
| स्ववाद्यं | स्तुवाद्यं | १९९ | ११ |
| वीथ्या | वार्थ्या | २०० | २ |
| निमग्नां | निम्नगां | २०० | ११ |

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| निषन्न: | निषण्ण: | २०१ | २ |
| स्पृहनीय | स्पृहणीय | २०१ | २३ |
| चे | च | २०२ | २ |
| प्लुतत | प्लुत | २०३ | ५ |
| सुदत्तीं | सुदतीं | २०३ | २० |
| घार्य्यै | धार्य्यै | २०४ | १८ |
| आष्कृत | आविष्कृत | २०५ | १ |
| मुज्जलत्वं | मुज्ज्वलत्वं | २०६ | १ |
| र्व्वह्णो | र्ब्बहुणो | २०६ | १८ |
| ङपस्तितां | उपस्थितां | २०८ | १७ |
| तमिश्र | तमिस्र | ११० | ७ |
| लङ्ग्यते | लङ्घ्यते | ११२ | १८ |
| तत्त्वाबोध | तत्त्वावबोध | ११३ | ३ |
| अथप्र | अथ | ११३ | ५ |
| कुतुह्लम् | कुतूहलम् | २१७ | ८ |
| सुग्धु | सुग्ध | २२० | १३ |
| वध | वध् | २२१ | ५ |
| भूग्न | भग्न | २२३ | ३ |
| ह्रन्त | ह्रन्तृ | २२५ | ४ |
| नलया | मलया | २२७ | २२ |
| गरुत्नदाली: | गरुत्मदाली: | २३६ | ४ |
| ययाच | ययाचे | २४१ | २ |

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| चिप्र | चिप्रं | २४१ | ७ |
| दुर्व्वासससामन्त्रो | दुर्व्वाससोमन्त्र | २४१ | १८ |
| लब्ध्वा | लब्ध्वा | २४२ | १ |
| लोभे | लेभे | २४२ | ७ |
| ध्रव | ध्रुव | २४८ | ७ |
| लब्ध्येव | लब्ध्मेव | २५३ | ४ |
| मुग्धा, भ्रमरः* | मुग्धा, मधुपः | २५३ | ८ |
| दयं | दुयं | २५४ | ६ |
| धनुःसु | धनुःषु | २५४ | १५ |
| प्रत्यपद | प्रत्यपत | २५५ | २ |
| प्रणया | प्रणयो | २५५ | ३ |
| सोढु | सोढुं | २५५ | ४ |
| जोवा | जवा | २५५ | २१ |
| जिघ्रति | जिघ्रति | २५८ | २४ |
| क्लोधे | क्लीवे | २६७ | १३ |
| चोदितः* | नोदितः | २७० | ७ |
| दच्चणा | दच्चाणा | २७२ | ६ |
| काम | कमा | २७२ | १४ |
| कोल | कोल | २७२ | २१ |
| सुयोधनम | सुयोधनम् | २८३ | १० |
| कान्तिम् | कान्तिम | २८३ | १५ |
| रमणेह्नि | रमणेह्नि | २८४ | २० |
| यद् | यत् | २८६ | २ |

| | | | |
|---|---|---|---|
| ह्वत | ह्वत | २८८ | २० |
| २८ पूर्व्वदेहात् ॥ | पूर्व्वदेहात् ॥ २८ | ३०० | २४ |
| गण्य: | गण्य | ३०२ | ७ |
| लोका | लोको | ३०३ | ३ |
| चौणिमृतां | चौणिभृतां | ३०४ | १८ |
| दधिम्य | दधिगम्य | ३०८ | ८ |
| वैम्मानिकं | वैंमानिकं | ३१५ | १२ |
| कुमार | कुमारः | ३१८ | १८ |
| लब्धा | लब्धा | ३२१ | १८ |
| लम्न* | म्रान्त | ३२७ | २ |
| खलु | खलु | ३३० | २२ |
| मोक्तिको | मौक्तिको | ३३१ | १८ |
| सचिराय | सचिवाय | ३३३ | ७ |
| वसुधरा | वसुन्धरा | ३३३ | १४ |
| सतो | सन्तो | ३३४ | ८ |

बवयो: पर्य्यावर्त्तनं स्वयं करणीयम्। इह कतिचित् पाठा: परिवर्त्तिता: सन्ति। परिवर्त्तितानां पाठानामन्ते * एतच्चिह्नं दत्तमस्ति।

——:०:——

